# आर्यावर्त-हृदयम्

साम्प्रतं मारकुइस् अब् जेट्लाण्डनाम्ना प्रथितानां रसनाग्रनर्त्तकी-
कृतनिखिलविद्यानां वङ्गदेशस्य भूतपूर्वशासकानां रोनाल्डशे-
महोदयानां "दि हार्ट् अब् आर्यावर्त्त" ग्रन्थस्य
संस्कृतभाषाकृतानुवादात्मकम् ।


हुग्लीकलेज-दौलतपुरहिन्दु-एकाडेमि-महाविद्यालययोः संस्कृता-
ध्यापकचरेण एम्-ए-काव्यतीर्थोपनाम्ना

**श्रीमता विष्णुपदभट्टाचार्येण**

सम्पादितम्



प्रकाशकः-

विष्णुपदभट्टाचार्यः
१२।१ बाग्वाजार ष्ट्रीट,
कलिकाता ।

शकाब्दः १८५८

## ग्रन्थकार-प्रशस्तिः

जेट्लाण्ड ख्यो महात्मा यदि च विधिवशाज्
जात एव प्रतीच्ये
प्राच्यानां कृष्टि-पुष्टौ यतत इह सदा
प्राच्यभावानुसन्धी ।

प्राच्यस्तं स्वं जनं चेद् गणयति नितरां
नास्ति दोषस्तथापि
बाधा भौगोलिकी किं जनयति सततं
भेदमस्यां पृथिव्याम् ॥

## उत्सर्गः

प्राच्यप्रतीच्यजगतीस्थितजातिमध्ये
ये नाम सौहृदरसं स्वदितुं यतन्ते ।
रोनाल्डशे-कृतिमनूद्य निलिम्पवाचा
तेषां करे सविनयं विनिवेशयामि ॥

अनुवादकः

## DEDICATION.

"To all those who are working
for a better understanding
between the races of
the East and those
of the West."

## [illegible]खावतारः

अलं गीर्वाणवाणीसाधकविद्वन्मण्डलीमध्ये "दि हार्ट् अब् आर्यावर्त" ग्रन्थस्य प्रणेतुः परिचयप्रदानेन। येन विश्वविदिते विपश्चिद्गणभूषिते सम्भ्रान्ते वंशे जातेन, विविधशास्त्रपारावारीणेन, पाण्डित्यगुणमण्डितेन, अ[illegible]षचित्ताकर्षककल्पनापरिपूरितमनोहर-ग्रन्थरचयित्रा, शिक्षाया दर्शनशास्त्रस्य कलाविद्यायाः कृष्टेश्चाप्रति-मोत्साहदात्रा पृष्ठपोषकेण च, प्राच्यप्रतीच्यदेशयोर्वर्तमानभविष्यद्-वंशीयानां कृतज्ञतापूर्णस्मृतिलाभस्य योग्येनाऽऽन्तर्जातिकसंस्कृते-रुन्नतिसाधनेन प्राच्यप्रतीच्ययोर्ज्ञानोत्कर्षविषये सहायता व्यकारि।

आर्यभाषानुरागि-नानादेशीयभाषानुशीलनतत्पर-सहृदय-राज-कीयसम्मानविभूषितजनगणप्रभवे वङ्गविश्रुते मित्रवंशे जातेन, योग्य-पितुर्योग्यतनयेन, कलिकातान्तर्गतराजकीयप्रधानविचारालयस्य सर्व-जनविदितेन, नीतिशास्त्रमीमांसकेन, व्यवहाराजीवेन, उदारचरित्रेण श्रीयुक्तसुधीरचन्द्रमित्र एम् ए वार् एट् ल महोदयेन पृथिव्यां सर्वत्र संस्कृतभाषानुरागिणां विपश्चितां व्यवहाराय मदनूदितस्यास्य ग्रन्थस्य मुद्रणप्रकाशनादिविषये व्ययभारस्य ग्रहणेन चिराय कृतज्ञता-पाशनाबद्धोऽहं सञ्जातः।

गभीरां कृतज्ञतां ज्ञापयामि नाना[illegible]ास्त्रविशारद-पण्डितप्रवरा[illegible]ां महामहोपाध्याय-श्रीयुक्तदुर्गाचरणसाङ्ख्यवेदान्ततीर्थ-कलिकाता-विश्वविद्यालयीयभूतपूर्वाशुतोषप्रफेसरपदभाग् महामहोपाध्याय-डक्टर्-श्रीयुक्तभाग-वत[illegible]ारशास्त्रि-साङ्ख्यतीर्थोपनाम-श्रीयुक्त-

उपेन्द्रमोहनभट्टाचार्य-महोदयानां सविधे। यतस्तत्रभवन्तोऽस्य ग्रन्थस्य सम्पादनविषये अमूल्योपदेशप्रदानेन तथा क्वचिच्छब्द-विन्यासपारिपाट्यप्रदर्शनेन च महोपकारं मे साधितवन्तः।

लर्ड् जेट्लाण्डस्य पुस्तकेनानेन विश्वमानवमण्डलीसकाशे प्राच्यसभ्यतायाः समुज्ज्वलं चित्ताकर्षकं चित्रं प्रकाशितम्। विद्याधिष्ठात्री वाग्देवी तत्रभवतो लर्ड् जेट्लाण्डस्य शिरसि तस्याः शुभाशीर्वादसूचकानि दिव्यकुसुमानि वर्षतात्।

श्रीविष्णुपदभट्टाचार्यस्य

---

# विषयानुक्रमणिका

।

पृष्ठम्

पृष्ठम्

## षोडशोल्लासः



## सप्तदशोल्लासः



## अष्टादशोल्लासः



## ऊनविंशोल्लासः



## विंशोल्लासः





आपातदृष्ट्याऽस्माभिरनुभूतानां केषाञ्चन प्रमादानां

## शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १५ | चित्तानामन्तरा | चित्तान्यन्तरा |
| ३ | २ | विंशशततम | विंशतिशततम |
| ५ | २५ | विंशशततम | विंशतिशततम |
| ६ | १६ | विंशशततम | विंशतिशततम |
| ८ | ३ | ब्राह्मणाब्राह्मणेतरेषां | ब्राह्मणाब्राह्मणेतराणां |
| ९ | २ | विंशशततम | विंशतिशततम |
| १२ | ११ | विंशशततमः | विंशतिशततम |
| १४ | ९ | तमात्तुमशक्तः | तामात्तुमशक्तः |
| ४५ | ८ | अरभिभाषण | अभिभाषण |
| १७७ | ५ | निर्भर्त् सयित्वा | निर्भर्त् स्य |
| २०८ | १० | सगुणो वा निर्गुणो | सगुणं वा निर्गुणं |
| २१४ | १० | जालरूपो द्वैतवादः | जालरूपोऽद्वैतवादः |
| २१६ | ९ | नियमनुसृत्य | नियमम् सृत्य |

* सम्भवन्तोऽन्येऽपि प्रमादाः सहृदयैः शोधनीयाः *

# उपोद्घातः

एतद्विषयकाणां त्रयाणां ग्रन्थानां चरमग्रन्थघटकानीमानि पत्राणि विरचितानि मया निवेदयितुं पाठकमहोदयेभ्यः सुव्यक्ततमानां कार्यबहुलानाम् आधुनिकमानवजातीतिवृत्तगताख्यानजातानामेकतमस्मात्—ग्रेट्‌बृटेन्-परिपालितस्य एशियान्तर्गतविशालसाम्राज्यस्य निर्माणं सम्प्रदायतो जन्मना च प्राच्यम्, प्रतीच्यश्चातिमात्रं शिक्षावर्धनाभ्याम् इत्यस्मादुद्भिन्नायाः समस्यायाः स्वरूपम्। सत्यं तथैवेदानीन्तनं भारतम्। तत्राऽऽदिमो ग्रन्थः श्रयति यो भूयसा बाह्यविषयानेव स खलु मया व्यरचि सम्यगालिखितुं रङ्गं यत्राभिनीयते बृटीशभारतेतिवृत्तरूप-रूपकमिति स्पष्टीकृतमेव मया तदुपोद्घाते। द्वितीयस्तावद् ग्रन्थः प्रावर्त्तत यः प्रथमग्रन्थस्योपसंहारात्मकपरिच्छेदसंयोगेन; स हि तावत् परिकल्पितो भारतीयचित्तस्य पौरस्त्यभावं कथञ्चिद्बोधयितुं पाश्चात्त्याधीतिनम्, परिचयोत्पादनार्थं हि तस्य तेन मनोराज्येन यस्मिन् स विचरिष्यति। तत् तथैव, यत् डक्टर् मेकनिकल्—महोदयेन साम्प्रतमुक्तम्—जातिद्वयस्य चित्तानाम् अन्तरा लम्बते काचित् तिरस्करिणी भेदनाय याऽपेक्षते काञ्चन धीशक्तिं यतश्चाऽऽयाति क्षीणाऽव्यक्ता च भारतस्य वाणी—इति। ग्रेट्‌बृटेन्सम्मुखगता समस्या चेत् पूर्ववत् शासनविषये एवास्थास्यत् तदा सा शासनकुशलानां बृटीशानां सुखसाध्यतरा एवाभविष्यत्। विहाय स्वीय-मौलिकसरलतां श्रयतीयं समस्येदानीं समधिकजटिलताम्,

यतः सार्धशतसंवत्सरान् ययोर्जात्योः संसर्गोऽन्योन्य-भावविनिमयश्चार्वाचीनभारतनिर्मितेः कारणत्वं गाहेते, तयोरेव जात्योरिदानीन्तनमनोवृत्तिभ्यामेव सा प्रभाविता। अतो नवीनभारतस्य मनोवृत्तिरेवाऽऽधुनिकसमस्याविषये मौलिकभावे-नोपयुज्यते। यतिष्येऽहं चात्र निरूपणायास्य दुरवगाहस्य सूक्ष्मातिसूक्ष्मस्य तत्त्वस्य। अत एव ग्रन्थस्यास्य तथैव कृताख्या।

हिमवद्-विन्ध्य-पर्वतमध्यगः पूर्वापरसागरमवगाढो भूमिभाग आर्यावर्त्तो नाम इति दृश्यते मानवीये धर्मशास्त्रे। कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो यज्ञियो देशः (संश्रयाय द्विजन्मनाम्)॥ परस्तादार्या विलङ्घ्य विन्ध्यं वितेरुस्तेषां शिष्टिं विपुलेषु दक्षिणभारतभूखण्डेषु परं द्विजन्मनां शिक्षादीक्षयोः प्रेङ्खोलन-मासीदार्यावर्त्त एव, प्रतिस्वनितं ययोः साम्प्रतमनारतं श्रोत्रपथा-तिथित्वमायाति नवीनभारतीयानां तेषामेवाधस्तनपुरुषाणाम्। अत आर्यावर्त्त-हृदयमवलम्ब्य भाषमाणोऽहं न तथा चिन्तयामि सुतरां किंचिद् भौगोलिकं केन्द्रं यथा गणयामि हिमवद्विन्ध्य-पर्वतान्तर्गतपूतभूखण्डे निवासायानुशिष्टानां प्रज्ञानामार्याणां त्रिंशशताब्दीयानां वंश्यानां हिन्दुत्वविषयेऽभिमानानुरागानुभावान्। प्राचुर्येण मनस्विहिन्दुसमाश्रितजात्यभिमानप्रचारणैव नवीन-भारतस्य स्वभावप्रकटनरीतिः, सा चातीतगौरवज्ञानस्य द्रुत-तरोन्मेषाज्जाता स्वयं च जनयति निरतिशयसचेतनतां हीनताक्षेपेषु प्राच्यप्रतीच्यसङ्घर्षे।

प्रायेण हिन्दुशिक्षितपदवाच्यानां मध्ये नास्ति कोऽपि योऽल्पाधिकभावेन नानुप्राणितो वर्णितचर्या मनोवृत्त्या, यश्च न पश्चात् क्षिपति साक्षेपप्रायां दृष्टिं नातिचिरातीतसमयं प्रति, यदा हि स्ववर्गः युरोपीयभावभावनाचरणैरात्मानं प्रभावयितुं स्वीकृतवान्, बहुदर्शितयोपनीतोऽहमिति सिद्धान्ते। सेण्ट् निहल् सिं

महोदयनामा कश्चन प्रेक्षावान् भारतीयो लेखक एकादश-संवत्सरान्ते एकविंशत्यधिकोनविंशशततमे खृष्टीये वर्षे प्रत्यागतो भारतं नीतवांश्च तत्र वर्षद्वयं भ्रमणेन। ये केचित् तस्य संसर्गमागतास्तेषां लोकस्थितिविषये आध्यात्मिकमानसिकभावभावना-सम्बन्धे काचित् महती परिवृत्तिः सङ्घटिता परिलक्षितेति तेन व्यघोषि। क्रमप्रचीयमानामतृप्तिमनुभवति जनसाधारणः स्वेषां कृतकेलगडीयत्वे इति दृढमुद्घोषयत्यसौ। काचिच्चिरवर्धमाना जातीयप्रणोदना बलान्नियोजयति भारतं प्रत्यागमनाय तदीयसाम्प्रदायिकशिष्टिनिर्भरेषु, त्यक्तुं सानुग्रहदत्तज्ञानमात्रस्य प्रतीच्छकत्वम्, प्रवर्धने च स्वनयविहितात्मोत्कर्षेण जगतीज्ञानभाण्डारस्य। यावदसौ क्षिप्रोद्दीप्तजात्यभिमानः परिचालयति जनान् स्वशिष्टेर्भूतये गौरवाय च, पुष्णाति जातिस्वधर्माविरोधेन जातीयोन्नयनम्, शिक्षयति च प्रतीच्यदत्तं द्रव्यं ग्रहीतुं साधु विचारणाया न त्वसमीक्ष्येति, तावत् स्वस्थताया लक्षणमेतानीत्यत्र नास्ति कापि विप्रतिपत्तिः। वर्त्तन्ते बहवो भारतीयाः स्वदेशस्यानागतं कालं विशेषेण भारतीयाकृत्या सृष्टं दिदृक्षवोऽपि ये पुरातनभारतस्य सर्वं सर्वकालस्थितियोग्यमितिबुद्ध्या न तथाऽन्धीकृताः, न वा येषां प्रतीच्यदेशजानां विशिष्टशिष्टेर्गन्धमात्रमपि वर्जनीयम्। सन्ति बहवोऽपरे राजनीत्यवर्जं सर्वेष्वेव विषयेषु ये मध्यपथश्रयणमेव विज्ञोचितमिति विवेचयन्ति। विगतकतिपयवर्षीय-राज्यव्यवस्था-विषयकालोचनामूलकवादविसंवादे यदि तथाविधानामेवाभविष्यत् प्राधान्यम् तदा क्षणेऽस्मिन् भारतम् आसाद्य दृढसौहृदयुतसहकारितां ग्रेट्ब्रिटेनस्य सुश्रृङ्खलं द्रुतञ्चाऽऽरोक्ष्यत् स्वराज्यप्राप्तिसोपान-परम्पराम्। परं नैतद्भूतम्। राजनीतिक्षेत्राद्दारुणजातिविद्वेष-महातरङ्गारूढैश्चरममार्गिभिः सपरिकरं निष्काशिताः सर्वे मध्यमार्गिणः। अतः शोच्या खल्वियं वर्त्तमानदशा।

व्यक्तीनामिव जातीनामपि विद्यन्ते विशेषकस्वभावाः। बृटन-जातीयाः सर्ववादिसम्मतिक्रमेण शीतलप्रकृतयः। यथा तथा वा भवतु, भारतीयस्तु नैव शीतलप्रकृतिः। अस्मिन् विषये स विपरीतभावापन्न इंलराडीयस्य। स हि भावप्रवणो मनसा चपलः सचेतनो भावेषु न वरमनुभूतद्रव्येषु। अयं हि तपनतप्त-वातमण्डलस्य प्रसूतिरत एव युरोपस्योत्तरभागस्य तेजोहीन-धूसरप्रकृतेरनतिभावप्रवणायाः प्रसूतेर्नानेन सह तुल्यता।

एवंविधाभ्यन्तरीण-प्रकृतिवशगानां प्रतीच्यप्रतिकूलप्रतिक्रिया-ऽभूदकारणविप्लवजननी, तत्परिणामेन च बहूनां भारतीयानां मनसि तेषां देशस्यातीतविषयेऽनियन्त्रिता जाता कल्पना ; युक्तिविरुद्धाऽवज्ञा च प्रतीच्यानां सभ्यतायां शिष्ट्यां चिन्तायां वर्त्तनरीत्याम्, सर्वोपरि च मन्ये तेषां पार्थिवसमृद्धिष्वपि। ग्रेट्बृटेन् एव भारतीयान् जनान् स्वस्वगौरवादवापातयद् इति विश्वासः क्रममात्रमपेक्षते एतादृशमनोऽवस्थातः स्वोत्पत्तौ भूयसेदं सुव्यक्तं भारतीयैः। नातिचिरात् पूर्वमेको भारतीयवार्त्तापत्रसम्पादकः के-एम्-पानिक्कर्-इत्यभिहितः, अक्सफोर्ड्-विश्वविद्यालयस्य कश्चन एम्-ए कियद्भिश्चिद्धृदयग्राहिभिर्वाक्यैर्दारुणजातिविद्वेषसृष्टिर्यथा क्रियते तत्क्रममुपनिबद्धवान्। इयञ्च तस्य वाचोयुक्तिः—“भारते जातीय-जीवितस्योपरि प्रतीच्यैः पातिता चिरविस्तारशालिनी काचिच्छाया। प्राग्विंशतेर्वर्षेभ्यः समाजस्य चिन्तायाश्च नेतृत्वमभीप्सवः शिक्षिताः साडम्बरं विजहुस्तेषां भारतीयवैशिष्ट्यम्। वेशे व्यवहारे चिन्तापद्धतौ प्रकाशने साहित्यकलाव्यापारेषु वस्तुगत्या जातीय-जीवितस्य प्रायेण सर्वास्वेवावस्थासु प्रतीच्यतापादनचेष्टैव तदा प्रावर्त्तत। विस्मृताः खलु सम्यक् पुरातनशिष्टेः साम्प्रदायिक-रीतयः।” सम्प्रति गतः स भावः, परम्परागतभावान् प्रति पुनरपि पतिता तस्य दृष्टिः, पुनरपि संस्थापयति स स्वकीयायां

वेदिकायां वहीन्। तथापि प्रतीच्यस्य सा छाया निविड-मद्यापि तिष्ठति। तथाच—"अज्ञातभावेनाप्यस्माकं चिन्ता प्रभाविता प्रतीच्येन। जुगुप्समाना अपि सर्वान्तःकरणेन न शक्नुमो वयमस्माद्दूरं गन्तुम्।" राजनीतिकजातीयताबोधो यः खलु सर्वथैव प्रतीच्यदेशागत इति वक्तुं शक्यते, तस्य प्रभावः साम्प्रतिकस्य भारतीयजीवितस्य प्रकृष्टं लिङ्गम्। सन्देहोऽविश्वासो-ऽवज्ञा च तस्य वाह्यलक्षणम्। सर्वेषामेव वैदेशिकानां विरोधितया कस्यचित् प्रबलसन्देहस्यान्तःप्रवाहो दृश्यते एशियामहादेशे अर्थशिल्प-विषयकशोषणभीतिमात्रमिति यत् तस्य हेतुतया व्याख्यातम् तन्न।

लब्धावलम्बया यया द्रुतमेवावरुध्यन्ते वङ्गानां जलमार्गाः तया सहस्रपर्णी "वाटारहेसिन्थ" नाम्नां जलनीलीविशेषाणां सम्भूत्या यः खलु प्रदर्शितोऽभिनिवेशस्तथैव महताऽभिनिवेशेन दृढग्रहं गृह्णाति नवीनभारतीयमनोवृत्तिं सोऽयमवसादकः प्रतीच्यविद्वेषः। यया शोचनीयावस्थया बृटीशैर्भारतीयानां सम्बन्धाः क्रमेण गाढ-माच्छाद्यन्तेऽपाकर्त्तुं तां केवलमपेक्षते चरणेनावताडनेच्छा तस्य भीषणप्ररोहस्य। परं नियतं नास्त्येव सा इच्छा, इच्छाञ्च तामु-द्बोधयितुं न कोऽपि क्षम इति साम्प्रतं प्रतीयते। दूरे तावदास्तां तेषां सम्बन्धानां समुन्नतिसम्पादनेच्छा परमस्त्येव केषुचित् प्रदेशेषु निदर्शनं दृढसङ्कल्पस्य ग्रेट्बृटेन्-भारतयोर्मध्ये परिदृश्य-मानस्य द्वेषस्य परिपोषणे, वर्त्तमानविप्रकर्षस्य च गुरुतापादने। यः षण्मासमात्रात् पूर्वं कलिकातायां कस्यचिदाङ्गलदेशीयस्य नृशंसघातनं विधाय निर्णीतापराधोऽभूत् तस्य वङ्गदेशोद्भूतस्य यूनो गोपीनाथसाहेत्यभिहितस्य स्वदेशवात्सल्यस्तावकप्रस्तावो येनाभि-प्रायेण प्रणोदितेन सानुगेन सि-आर्-दाश-महोदयेन चतुर्विंशत्य-धिकोनविंशशततमखृष्टाब्दस्य जुन्मासि पूर्ववङ्गेषु कस्याञ्चित् राज-नीतिकगोष्ठ्यां समर्थितः सोऽभिप्रायोऽन्यथा भवेदिति विभावयितुं

प्रायेण नैव शक्यते। सर्वथाऽनपेक्षितं दुरन्तमिदमिङ्गितं तदुपरि च पराचीनं जातीयदलस्य चरममार्गिपक्षभुक्तानां तादृशं विचेष्टनम्— इत्थम्भूते व्यतिकरे तादृशमनोवृत्तिविषयेऽन्धीभावो निरर्थको यतः सा मनोवृत्तिश्चेन्नैव संयम्येत तदा परिणामे निर्मूलीभवेयुः सर्वास्ता आशा या उभयोर्जात्योर्मध्ये बहुभिः सादरं परिपोष्यन्ते भविष्यद्भारतमुभाभ्यामेव जातिभ्यां विरचनप्रतिभया सफलयाऽन्योन्य-सहकारितया निर्मीयतामित्येवंरूपाः।

नवीनभारतस्य मनोवृत्तेर्व्याख्यानावसरे विहाय मध्यमार्गिणो यन्मयाश्रितानि भाषितानि लिखितानि च चरममार्गिणाम्, तत्र चरममार्गिणां समधिकमुखरताऽधिकतरस्पष्टवादिता च कारणम्। परं प्रदर्शितं मया प्रागेव यदहेतुक-प्रतीच्यानुकरणस्य प्रतिकूलतया जायमाना प्रतिक्रिया चरममार्गिष्वेव न निबद्धा; साधारण्येन सा दृश्यतां वा न वा, सर्वेषु शिक्षितेषु मध्यवित्तेषु हिन्दुष्वन्ततः सुबहुलव्याप्तावस्या न सन्देहः। अत्र तावद्विषये मध्यमार्गिभिर्यत् चिन्त्यते तदेव प्रायेण सर्वथैवोद्घुष्यते चरममार्गिभिः। भेदस्त्वेतयोः प्रकारगतो न पुनः परिमाणगतः। तथाकथितानां राजनीतौ मध्यमार्गिपक्षावलम्बिनां विगतकतिपयवर्षजातेषु विवादेषु विजयलाभे व्यर्थतायाः कारणमप्यत्रैवानुसन्धेयम्। प्रवर्त्तितायां ऊनविंशत्यधिकोनविंशशततमखृष्टाब्दीयभारतीयशासन-विधेरुत्पन्नायां संशोधितराजव्यवस्थायां साकल्येन नवीनव्यवस्था-नुसरणस्य, राजनीतिकपदेषु च स्वेषां पक्षाणां प्राधान्यद्योतनस्या-प्रतिरूपं कञ्चिदवसरविशेषं लब्धवन्तो मध्यमार्गिणः, यतस्तदानीं चरममार्गिभिः परिहाय निर्वाचनं दत्तस्तेभ्यः प्रतिपक्षविरहितोऽ-वकाशः। साडम्बरं समारभ्यापि ययुस्ते वैफल्यं प्राधान्येन स्वाचरितेषु कर्मसु तेषां हार्दिकाग्रहाभावात्। दूषयन्तोऽपि तेषां मर्यादातिक्रमणं सर्वकार्येषु, वहन्तोऽपि वैमत्यं तेषां नयेषु

न च नापुष्यन् मध्यमार्गिणश्चरममार्गिषु भावबन्धनविशेषम्। नूतनशासनव्यवस्थायाः साफल्याय—यद्धि नियतमेवाभविष्यदितोऽधिकतरमैत्रीभावस्य संस्थितौ,—सविक्रमं चेष्टितुं वर्त्तमाना अपि मन्त्रिणः सौदासीन्यं समर्थनमेवालभन्त व्यवस्थापकसभायाः; व्यवस्थापकसभास्थितानां नाममात्रकथितानां मध्यमार्गिणां बहिःस्थितानां पूर्णविकाशप्राप्तानाञ्च चरममार्गिणां नयस्य परस्परभेदोद्घाटनमपि दुष्करमेव पक्षपातविरहितेन समीक्षकेण।

अतः खलु सामान्येन शिक्षितहिन्दूनां मनोवृत्तेः प्रकाशकानि चरममार्गिणां भाषितानि लिखितानि च समनुसृत्याऽऽधुनिकभारतस्य भावोऽनुधावनीयः। यियतिषे च व्याख्यातुं तमेव भावं पश्चाल्लिख्यमानेषु पत्रेषु। कृतार्थीभूतश्चेन्मदीयो यत्नस्तदा स्फुटीकृता मया सहानुभूत्यर्हा एवाऽऽधुनिकशिक्षितभारतीयानामुच्चाशानां बहुलांशाः। दारुणजातिविद्वेषयुक्तेषु ग्रेट्बृटेन्विपक्षतया तीव्रविवादकुशलेषु सदोषविप्लवोत्पादिततर्जितेषु चरममार्गिषु सहानुभूतिपोषणं दुष्करमेवैंलण्डीयेन। इंराजस्त्ववश्यमेव समाकृष्टो भविष्यति शिष्टं भारतीयं प्रति यो ह्यन्यजातिविद्वेषं स्वजात्यनुरागं न भावयते, यो वा स्वभावेन शिष्टाचारः, परभावग्राही, ज्ञानोत्कर्षवान्, महादर्शसम्पन्नश्च। एवमन्योन्यमतस्य क्रमशः पुष्यमाणविरोधात् जनिष्यते सुफलप्रसूपरस्परसहकारिताविषये समधिकतरा शक्तिर्यत्रैव केवले भारतस्य ग्रेट्बृटेनस्य च भविष्यद्विषये तादृश्याशा वर्त्तते यादृशी तयोः पूर्वसाहचर्यस्य समुद्देशस्य च सर्वथाऽनुरूपा भवेत्।

भारतीयसमस्याविषये—हिन्दूनां पूर्वगौरवोद्धारप्रवृत्तिमूलकस्य भावस्योपरि सर्वथा दत्तो मयाऽभिनिवेशः, यतो मम मतेन न केवलमयं भावो मुख्यभावेनोपयोगी परं स साधारण्येन बोद्धुमर्हः। मयाऽन्येषामुपायानां बहूनां लघुता न मन्यते। वर्त्तमानावस्थाया

जटिलतानिर्वाहेऽस्त्येव तेषां कार्यकारिता। यथा हि पञ्चनदेषु शिखजातीयानां मध्ये आकालि-समान्दोलनम्। यद्यपीदं स्थानीयम्, कार्यकारिताविषये तथापि नाल्पोद्वेगकारणम्। यथा वा ब्राह्मणा-ब्राह्मणेतरेषां मध्येऽन्योन्यविद्वेषः, यथा वा भारते वर्षे सप्तकोटि-संख्याकानां महम्मदीयानां स्थितिः। शेषोक्तोपकरणविषये मम ग्रन्थानां प्रथमे ग्रन्थे विवृतिरस्ति। अस्मिन् ग्रन्थे एतद्विषये नाधिका कापि विवृतिर्यतः क्रियेत चेदस्य विषयस्य विवृति-र्विषयान्तराणां वा यानि राजनीतिकस्य च शासकवर्गस्य च विवेचनीयानि तदास्य ग्रन्थस्य मूललक्ष्यात् पाठकस्याभिनिवेशः परिभ्रश्येत्, तच्च लक्ष्यं पाश्चात्यशिक्षाशिक्षितानामिदानीन्तन-हिन्दूनां प्रतीच्यस्य शिष्टिमूलकदृष्टौ राजनीतिकदृष्टौ च भारतात्मनो यथा परतन्त्रता मन्यते तद्विरोधेन विद्रोहिता।

संस्कृतशब्दानामक्षरान्तरीकरणविषयेऽपि किञ्चनात्र वर्तते वक्तव्यम्। भारतीयचिन्ताश्रयिविषयप्रणयने कियताञ्चित् पारि-भाषिकसंस्कृतशब्दानां प्रयोगोऽपरिहार्यस्तावत्, निवेशनसमये च पुनस्तेषां स्वत एव जायतेऽक्षरान्तरीकरणविचारणा। मोक्षमूलरेण "दि-सेक्रेड्-बुक्स-अव्-दि-इष्ट्" इत्याख्यायां ग्रन्थमालायां या रीति-राश्रिता मयापि प्रायेण सैवावलम्बिता रीतिः। लिख्यते मयेदं साधारणपाठकानामेव कृते न पुनः पूर्वदेशीयभाषाज्ञानाम्, अतः शास्त्रानुरोध्यक्षरान्तरीकरणरीतिरपि मया कृता सावधिका; नाम्नामाङ्गलभाषायां कथञ्चिल्लब्धपरिचयानां शब्दानाञ्च कृतेऽवधूते एव मया वर्णानां परस्परविभेदकचिह्नमुच्चारणचिह्नञ्च। मया कृष्ण 'क्रिष्न' इति शिव 'सिव' इति राजेन्द्र 'रजेन्द्र' इति लिखितम्। पक्षान्तरे 'ज्ञान' 'शून्यवाद' 'याज्ञवल्क्य' इति च यथावल्लिखितम्। जाने प्रायशः स्वैरवृत्तसिद्धान्तस्य मे दोषं ग्रहीष्यति जनः। तदेषोऽस्म्यभ्युपगच्छामि।

"नाइण्टिन्थ्-सेञ्चुरि-एण्ड्-आफ्टार्"-समाख्यातवार्त्तापत्र-सम्पादकस्य चतुर्विंशत्यधिकोनविंशशततमखृष्टाब्दस्य जुलाइ-संख्यागतात् तदीयादेकस्मान्निबन्धात् कतिपयस्थलोद्धारणे सम्मतिदानं मया कृतज्ञतापूर्वकमवश्यमेवात्र स्वीकरणीयम्। तत्प्रदर्शितसौजन्यप्रणोदितेन प्राप्तावसरेण मया च सानन्दमात्मा नियुज्यते तस्मै धन्यवादप्रदानाय।

जानुयारी, १९२५ रोनाल्ड्शे

# प्रस्तावना

जातीयताशब्दस्याऽऽशयमाश्रित्य बहुलमेव व्यलिखत् कश्चन भारतीयो लेखको यस्य लेखन्यनल्पभागमग्रहीद् अर्वाचीन-कालीनभारतीयजीवितप्रवाहालोडकेषु सामाजिकराजनीतिकान्तः-क्षोभेषु। अकारि च तेनैवास्य लक्षणं जातेर्वैशिष्ट्यमिति। यथा व्यक्तेर्व्यक्त्यन्तरात् स्वगतैरेव धर्मविशेषैर्वैशिष्ट्यं निश्चीयते तथा जातेरपि तद्गतैर्धर्मविशेषैरेव जात्यन्तराद् विशे-षोऽवधार्यते इति खलु स मन्त्रयते। ते पुनर्विशेषधर्माः शारीरिका मानसिकाः सामाजिकाश्चेति त्रिधा। ते तु नूनं जातिसङ्घट्टने दुरवगाहाद् विविधात् प्रागैतिहासिककारणविशेषात् सम्भूताः। यत्र विद्यमाना अपि एते विशेषाः स्वरूपतो निरूपयितुं न शक्यन्ते तत्र का कथा तेषां कारणनिर्वचनस्य। केवल-मेतावदेव एतानधिकृत्य ब्रूमः—उपलभ्यन्ते खल्वेते विभिन्नजाति-सङ्घट्टनासु चिरमिति। दृश्यन्त एव शारीरविज्ञानानुगा जनाना-मन्योन्यविलक्षणा अवयवसंस्थानभेदाः, ते तु सन्तोऽपि तत्त्व-निरूपणे न सम्यग् गौरवकाष्ठामावहन्ति। तत्तज्जातीनां चिन्ता-पद्धतिषु समाजसंस्थितिषु च केचन विशेषास्तां तां जातिं विशेषयन्तः संलक्ष्यन्ते। जनानां चित्तवृत्तिसंघातस्य साधारणत्वाद् विभिन्नया दृष्टिसरण्याऽऽत्मविषयं वा जगत्प्रपञ्चं वाऽनाद्यनन्तान् विचारविषयान् वा विभावयतां विभिन्नदेश-वासिनां साहित्य-शिल्प-दर्शनधर्मादिषु सर्वेष्वेव विषयेषु

कोऽपि विभेदः समुपजायते, स एव विभेदस्तेषामात्मस्वातन्त्र्योपलब्धौ बीजभूतो हेतुः, स एव विभेदस्तत्तत्सभ्यताविशेषेषु पार्थक्यविधायकः।

अस्ति किं भारतीयानामनितरसाधारणी काचन जातिः? यदि स्यात् तर्हि सा किमितरजातिभ्यः प्रागुक्तैर्वैशिष्ट्यैर्विशेषिता? भारतपरिसरान्तःस्थितानां जातिसभ्यताधर्माणां साङ्कर्यं तेषां शारीरिक-मानसिक-सामाजिकविपुलविशेषांश्चाधिकृत्य किञ्चन मयाऽन्यत्र कुत्रापि निवेदितम्। न च न स्वीकरोति 'पाल'महोदय एतद्देशनिवासिनां साङ्कर्यम्; उदर्के च भारतस्य सार्वलौकिकजातीयसत्तां साधयितुं स एव भारतीयहिन्दु-पार्शि-बौद्ध-मोस्लेम् खृष्टान्-समाजाः स्वां स्वां परम्परागतामैतिहासिक-सरणिमनुसृत्यैकस्यैव जातीयोपपाद्यस्य समाधानं करिष्यन्तीति चाङ्गीकरोति। हिन्दुत्वाद्धिन्दुमतानुसारेणैव निरूपितस्तेन सामान्यजातीयादर्शावाप्तिविषयः सन्तज्य चेतरेषां कृते तेषां स्वकीयेन नयेनास्य निरूपणधुराम्। कृतहेत्वन्तराश्रयोऽपि शक्नुयात् स स्वं मतं स्थापयितुं सद्भावात् पूर्वतनग्रन्थोल्लिखितानां भारतीयेषु विशेषेणावस्थितानां हिन्दुसभ्यतानुशीलनधर्मलक्षणानां बलवतामैतिहासिककारणानाम्। प्राधान्येन हिन्दुभारतस्य चित्तसंस्थानमेवाधस्तात् तत्र तत्र पत्रेषु निवेशयिष्यते।

न च 'पाल'महोदयो जातीयविशेषकाण्यपलपितुमिच्छति न्यूनाधिकैस्तुच्छैर्भेदकविशेषैः। जीवेष्विव जातिष्वपि किमप्यनिर्वचनीयमवतिष्ठते इत्येव तस्य महाभागस्य मतम्। लिखितश्च तेन यद् जगत्यस्मिन् सर्वैव जातिर्धत्ते कमपि भावनाविशेषं पुष्यति च तं पारिपार्श्विकपरिस्थिति-रीतिराष्ट्रनयादिविशेषवश्या तस्यैव संसारज्ञानस्य समुचितसिद्धये। जीवात्मनामेकत्वमिति वेदान्तदर्शनस्य मूलतत्त्वं—यदन्तर्भूतमेव जीव-

परमात्मनोस्तादात्म्यमिति निगमनम्,—तदेव हि हिन्दुजातेर्भव-भावनायाः स्वरूपमिति वक्तुं शक्यते। भारतीयेतिहासस्यैकमेव मुख्यं प्रतिपाद्यम्, यद्धि चिरन्तनं प्रागैतिहासिकञ्चास्मज्जातीयेति-वृत्ते, तद्धि हिन्दूनां विशिष्टं परमार्थज्ञानम्। पुरातनहिन्दुजाते-रिवार्वाचीनहिन्दुजातेरप्यात्मज्ञानमेव भित्तिपाषाणायमानम्। न खलु वेदान्तदर्शनज्ञानमन्तरेण भारतीयेतिवृत्तस्य मुख्यं तत्त्वं विज्ञातुमलम्। अग्रे तावदस्य विवृतिप्रदानाय यतिष्ये। साम्प्रतं हिन्दुजातेर्विचित्रचिन्ताप्रवाहस्योदाहरणत्वेनोपन्यस्यतेऽत्र मया सुविदिताधुनिकराजनीतिकसंक्षोभजा काचित् कथा।

यः खलु राजनीतिकसंक्षोभस्याग्रणीभूय खृष्टीय-द्वाविंशत्यधि-कोनविंशशततमवर्षे 'मार्च'-मासि राजद्रोहितया निर्णीता-पराधोऽपि भारतभूमिभागे विप्लवं महासन्त्रासञ्च ग्रेट्‌ब्रिटेन्‌प्रदेशे व्यापकत्वेन युगपज्जनयामास, इदानीमपि तस्यैव एम्-के-गान्धी-महोदयस्य नामधेयादन्यस्य कस्यापि नाम बृटीशप्रकृतीनां नैव सुविदितमस्ति। गान्धीमहोदयो यमर्थमभिसन्धाय प्रावर्त्तत तमर्थं निह्नोतुं कदापि नाचेष्टत। तदपि निर्व्याजमवोचत, यन्मनसा समपस्पृहदाशंसीच्च स राजशासनविकलीकरणाय इति। तदीयेनोद्देश्येन समं नास्ति मे कोऽपि सम्बन्धः, अस्ति तु तस्य कार्यपद्धतिभिः, ताभिरपि पुनस्तावानेव मे सम्बन्धो यावान् हिन्दुजातेर्विशिष्टचिन्ताधाराया निरूपणे निदर्शन-प्रदर्शनायोपयुज्यते। आदितः प्रभृति धर्मयुद्धाय तस्य खल्वेव-मेव निर्बन्ध आसीद् यत् "युध्यन्तां सर्वे मत्पताकातल-सेविनः त्यागकृच्छ्रसाधनप्रहरणैरिति।" एइच्-आर्-एइच्-दि-डिउक्-अफ्-कनट्-महोदयमुद्दिश्य केनचिदुन्मुद्रलेखेनोदघोष्य-नायासेनापि जनाः संक्षोभमिमं धर्म्यं पावनञ्चेति ज्ञास्यन्ति। कालान्तरे कलिकातानगर्यां वङ्गीयान् विद्यार्थिनः सम्बोध्याभि-

भाषणप्रसङ्गेन स एवमभाषिष्ट नो जिह्रेमि खल्वाधुनिकीं शिक्षासरणिमनुसृत्य लब्धविद्यानामर्वाचीनग्रन्थकल्लेखोपहृतचेतसा-मग्रतो धर्म्यमिमममभियोगमसकृदुपस्थापयन्। नापि व्रीडामनु-भवामि राजनीतिकसमीक्षणे साकल्येन परिवृत्तिसाधनाय मम तावत् प्रयत्न इति ख्यापयन्। एष तु मे प्रयत्नो राजनीतिक्षेत्रे आध्यात्मिकभावसन्निवेशनायैवेति।

तदुद्भावितसंक्षोभ एवोत्तरोत्तरं गणविप्लवात्मना परिणते तदुद्घोषितमाध्यात्मिकबलप्रामाण्यं शारीरबलनिन्दनञ्च तदा तत्-प्रतिपक्षाणामुपहासमुद्दीपयतामिति यत् तत् सम्यक् स्वाभाविक-मेव। परम् विहायेदं कारणं प्रतीच्यमानसानां सम्भ्रमप्रदोऽभूत् तदीयः समरप्रयोगः। इंलिशमैन् इत्याख्याते वार्त्तापत्रे निरदिशत् प्रकटितागान्धीमहोदयरीतिभक्तिरविदिताभिधः कश्चन लेखकः— "स्वारब्धसंक्षोभस्वरूपद्योतनाय गान्धीमहोदयेन यत् पदं निरूपितं तस्य 'सत्याग्रहे'तिपदस्य लेशतोऽपि न बुध्यन्ते आशयं युरोप-वासिन इत्यत्र च्छिन्नसंशयमकुरुतां तं इंराजैः सह संलापः इंराजीवार्त्तापत्रगतालोचनपाठश्चेति।" व्याख्यातं च तेनैव कैमर्थ्यमपि गान्धीमहोदयनयस्य—"एकचित्तताविरोधकत्वात् त्यजेयुस्तत्समागममभीप्सवः सम्बन्धं शासकेन सांसारिक-कर्मभिश्च; लोभश्चार्थे यान्त्रिककौशलेषु चेति।" अभिहितश्च पुनस्तेनैव, सत्याग्रहो नाम—"दृढसङ्कल्पवद्गणप्रयुक्तात्मबलमि"ति। दृढसङ्कल्पनयोग्यतामाप्तुं वर्जयेयुस्ते सांसारिकभोगान् पार्थिवा-भिलाषांश्च।

न खलु मतमिदं परिचितं पाश्चात्त्यचित्तस्य। न तथा भारतीयं मनः, यतस्त्यागेन तपोऽभ्यासैश्च शक्तिरवाप्यते इति हिन्दुजाति-चिन्तानिर्मितेः फलमिदं मतं चिरातीतकालागतभारतीयविश्वासमव-लम्बते। शक्त्यवाप्तेः कारणरूपेणाऽऽत्मक्लेशाङ्गीकारस्यामोघताया

निदर्शनैः प्रकीर्णं खलु भारतीयं पुरातनं साहित्यम्। विश्रुतः कश्चन जनो यस्य चारित्रं दृश्यते वेदेषु रामायणमहाभारताख्ये महति महाकाव्यद्वये, पुराणेषु च, स खलु कस्यचित् कथाया नायको या कथोल्लिखितसरणिशरणानां पौराणिकनिदर्शनत्वेन वर्णयितुं शक्यते। स खलु जनो भूपतिर्विश्वामित्र इति, कथा च सा क्रोडीकरोति ब्राह्मणेन वशिष्ठेन तस्य घोरं चिरायितं वैरम्; तत् समासेन वर्ण्यते। प्राणनुदद् गाधिसुतस्य गृध्नुतां वशिष्ठाश्रिता कामधेनुः यां समासादयितुं समजनि स स्थिरनिश्चयः। शारीरबलेन तमाप्तुमशक्तः स सन्त्यज्य राज्यम् अशिश्रिय-द्धिमाचलम्, तत्र च कठोरतमेन तपसात्मानं संयुज्य तापस-जनोचितजीवितं दधार। परमेश्वरमहादेवोपहृतदिव्यास्त्रजाल-रूपेण समाजगाम तस्य प्रथमं पारितोषिकम्। तैश्चास्त्रै-स्तूर्णमगमत् स वशिष्ठसङ्गरम्, परं शक्तिमता पुरोधसा पुनरपि पराजितः प्रत्यावर्त्तत हिमालयं तपोबललाभाय; स्वेच्छास्वीकृत-तपसे भूयश्च मनो निदधे। यस्मात् स क्रमेणाधिजगाम महत्तरां शक्तिम्, देवैरुपायनीकृतं क्रमप्रचीयमानं पारितोषिकञ्च; तस्य सहस्र-संवत्सरावसानस्य तदाचरितस्याऽऽत्मसंयमनस्याऽऽमूलादनु-धावनं नास्माकमपेक्षणीयम्। परिशेषे च सर्वापदो मूलभूता सा कामधेनुस्तुच्छतां जगाहे विश्वामित्रपरिपालितकठोर-तपश्चरणोद्गताद्भुतविकासस्य पुरतः। तदानीं पुनर्विश्वस्य स्थितिविषय एव संशयः प्रादुरभूद्। तदर्जितालौकिकशक्ति-र्देवानां नराणां च तथा भयदाऽभूद् यथा देवा ब्रह्माणमुपेत्य प्राप्तकालं सङ्कटं निवेदयामासुः। प्रोचुश्च ते "विविधैरुपायैः प्रकोपितः प्रलोभितोऽपि न विचलति विश्वामित्रो महामुनिः, परं प्रावर्धत एव तस्य पावनस्तपःप्रयत्नः; अनवाप्ताभिलाषो नूनं नाशयेत् स लोकत्रयं स्वतपोबलेन। साम्प्रतं ह्याकुला

विश्वस्य सर्वा दिशः, नोद्भासते कुत्राप्यालोकः, उत्क्षिप्ता इव सर्वे सागराः, शकलीभूताः शिखरिणः, ससंभ्रमं चलति वसुधा, मुहुर्मुहुर्जायन्ते वात्याभिघाता इति।" न निष्फलमभूद् दिव्यप्रतिनिधिप्रेरणं ब्रह्मणो मनसि कार्यगौरवबोधं पदं ग्राहयितुम्, यतः स स्वयं देवसंघैरुग्रतापससमीपमुपसृत्याऽऽशीर्वचोभिरभिनन्द्य च तं ब्रह्मर्षिरित्यन्तरैरामन्त्रयामास। एवं प्रसह्य देवेभ्योऽवाप्य ब्राह्मण्यं विरराम राजा विश्वामित्रो भुवनभीतिदात् परःसहस्रसंवत्सरसमनुष्ठितात् तपसः।

गान्धीमहोदयस्याऽऽत्मबलवादो यं बहव एव प्रतीच्यदेशवासिनो मन्यन्ते निरर्थकनिर्बन्धविशेष इति, स चेद् दृश्यते भारतीयदृष्ट्या नूनं सुगमत्वं सम्यक् सङ्गतत्वं च यायात्। सत्यमस्ति विस्मयकरं सादृश्यं विश्वामित्रस्य राज्ञो गान्धीमहोदयस्य चाऽऽख्यानकयोः। तुच्छा वशिष्ठस्य कामधेनुर्विश्वामित्रवैरारम्भस्य मूलम्। तथैव "राउलट् एक्ट्" इत्याख्याया राजव्यवस्थाया विधिवद् व्यवस्थापनमिति हि तुच्छतरं कारणं गान्धीमहोदयसमारम्भस्य। यथैवाऽऽद्ये वृत्ते विश्वामित्रतपोलब्धजन्मनां विदारकविकासानां पुरतः कामधेनुर्व्यहासीत् सर्वगौरवं तथैवोत्तरवृत्तेऽपि विजहौ गान्धीमहोदयकार्यजातविक्षोभस्य पुरतः स्वगौरवं "राउलट् एक्ट्" इत्याख्यो विधिः।

अत्रायं तावद् हिन्दुजातेश्चिन्ताधाराया वैशिष्ट्यानामेकतमस्य—अनुष्ठानात् त्यागे विश्वासाधिक्यमित्यस्य दृष्टान्तः। उपोद्घातरूपेण मे प्रबन्धस्यात्रेदं मया समुपन्यस्यते। इतरेऽपि विशेषा यास्यन्त्येव प्रकटतां समं मे प्रबन्धविस्तरेण। इदं च स्फुटीभविष्यत्येव—सम्प्रति यः खलु संक्षोभो विशेषयति जातिद्वयस्य सम्बन्धम्, स खलु संक्षोभो लेशतोऽपि हिन्दुजातेर्बृटीशस्य च चिन्ताधारयोः संघर्षादुद्भूत इति।

# प्रथमोल्लासः

## अप्रतिरूपं किञ्चन परीक्षणम्

सम्प्रदायपरिसरवश्यो बालो यां भाषामाश्रित्य स्वमनोभावान् प्रकटयति तामेव भाषां द्वारीकृत्य दत्ता उपदेशाः सुखं प्रविशन्ति तस्य मनसि बुद्धौ चेति, विदेशीयभाषाद्वारेण वितीर्णा विद्या शुकानामिव कण्ठस्थीकरणं न बुद्धेरुन्मेषणाय कल्पते इति च स्वं मतं साम्प्रतं प्रकाशितं केनचिद् भारतीयभद्रमहोदयेन। आदौ तावदनिवेदितमपि सत्यमिवेदं प्रतिभाति। परं न तथेदं भारते।

तादृशबुद्धिसंश्रितमानसो वैदेशिकस्तद्देशीयान्महाविद्यालयानुच्चशिक्षालयांश्च समीक्ष्य दर्शनपथागतैर्विस्मयं श्रोत्रपथातिथीभूतैश्च समधिकमुद्वेगमेव यायात्। पश्येच्च स महाविद्यालयेषु भारतीयैस्तरुणैः पूर्णान् प्रपाठप्रकोष्ठान्, अध्यापनवेदिकायाञ्च प्रायेण सर्वदैव कञ्चन भारतीयमेवाध्यापकम्। गणितं वा इतिहासो वा दर्शनं वा पदार्थविद्या वा यो वा को वाऽन्यो भवतु नामाध्ययनमार्गसमुपस्थापितः शिक्षाविषयः, सर्वत्र श्रोष्यत्येव स आङ्गलभाषामयमालोचनम्। अपिच युरोपदेशे या साधारणी शिक्षेति कथ्यते, तस्या एवोपक्रमं सर्वथा स्फुटमेव च शिक्षकशिक्षार्थिनोरपरिज्ञातेनैव भाषाद्वारेण समधिगन्तुं यतमानान् जनपदागतान् भारतीयान् किशोरकान् नूनं स विलोकयेदुच्चविद्यालयेषु; अभिजानातु वा न वा स तां शिक्षार्थं द्वारीकृतां भाषाम्

आङ्गलभाषेति। तस्य चेत् कौतूहलमनया विस्मयावहयाऽभिज्ञतयाऽतिमात्रमुद्रिक्तं सत् प्रचोदयेत् तं नवीनरीत्या वितीर्णाया अस्याः शिक्षायाः स्वरूपनिरूपणे, नूनं स तदा समवेदेत— यथार्था प्रतीच्यमार्गानुरूपा शिक्षादानरीतिरियमिति, आङ्गलदेशीयनगरस्थितानां लिपिकराणामादर्शेन बहुसंख्यकजनानामुत्पादनमेव चास्या रीतेः सुव्यक्तं फलम्। रीत्याऽनया आङ्गलदेशीयलिपिकराणां यद् बुद्धिविषयकसाधनं यच्चाचरणं तत् सम्यक्तयैव लभ्यते। धर्मविषयेऽपि राजपुरुषाणां नस्ताटस्थ्याश्रयणस्याऽऽवश्यकत्वस्वीकरणात् प्रभृत्येवाऽऽध्यात्मिकभावसम्पन्नो जनोऽप्राप्तगणनाविषयः सम्प्रति विरमति महम्मदीयेभ्य इस्लाम-मतोपदेशनात् सनातनधर्मस्य वा गूढकुटिलमार्गेषु हिन्दूनां परिचालनात्।

शिक्षापद्धतेः कठोरसमरूपतायाः सविशेषवैलक्षण्येन, तस्य महादेशस्य सर्वेष्वेव प्रदेशेष्वध्यापनकक्षासु प्रपाठप्रकोष्ठेषु च समवेतानां मध्ये समभावेनाऽऽवर्तितम् आश्चर्यजननं प्रकारगतं सादृश्यं दृष्ट्वा, यदुपादानमाश्रित्य चलतीयं विस्मयजननी परीक्षा शिक्षणविषये, तस्योपादानस्य स्वरूपसन्धाने स्वत एव स प्रवर्तितो भवेत्। ताभिश्चानुसन्धित्साभिर्नूनं नीयेत स केषुचिद् व्यापकेष्वेव सिद्धान्तेषु। तत्र प्रथमतस्तावदस्य विपुलतायतनस्य, विशेषेण नानारूपत्वं प्रकारस्य, असमानजातीयानां बहुकोटिसंख्याकानां (१९२१ खृष्टाब्दे ३२०,०००,०००) जनानां च स्थितिः। द्वितीयतस्तावदनल्पांश एवास्य देशस्याऽऽसीत् काचिद् विशिष्टा शिष्टिः शिक्षा च। तृतीयतस्तावद् व्यूत्यामस्य बहुलभागस्य हिन्दुभागस्य नाम सुप्राचीनकालात् प्रभृत्येव गाढमुग्रः प्रबलो धर्मभावः ; अपरस्मिन् भागे महम्मदीयेषु दरीदृश्यत एव कश्चन भीषणः पुनरासुरिको भावः। चतुर्थतस्तावत् स्वमनोभावप्रकाशनाय परिचितानां भाषाणां सम्भ्रमप्रदैः प्रकारविशेषैश्चाऽऽसीदयं विश्रुत

इति। चरमतश्च स्वस्वमातृभाषायामपि प्रतिशतं प्रायेण द्व्यधिक-नवतिसंख्यकानां सम्पूर्णरूपेणानधिगताक्षरत्वं तद्देशवासिनाम्।

नूनमेवंविधासु जातिषु वैदेशिकभाषाद्वारेण वैदेशिकशिक्षादान-प्रचेष्टनमसाधारणभावानेव श्रयेत्। यद्यपि मूलतोऽस्माद् बाहुल्येन साफल्यमेव प्राप्तं तथापि केषुचिद्विषयेषु विफलतैवास्माभिः परिलक्ष्यते। दृश्यन्त एव उपदेशप्रदानस्य द्वारतया वैदेशिक-भाषाश्रयणं स्फुटतया दृश्यमानैर्दोषैर्युक्तमित्यस्य बहून्येव निदर्शनानि। येषां धर्मशास्त्राणि कदाचिदपि न पत्रारूढी-कृतानि परं संरक्षितान्येव मनःकक्षासु, वंशपरम्परया च यैर्वाचा एव तानि वितीर्णानि, तेषां विपुलस्मृतिसहायकसाहित्य-निर्मातॄणां वंश्या एवाऽऽधुनिका भारतीया इत्यनेन तत्त्वेनैवेमानि प्रवर्धन्ते। तदनुसारेणैव च प्राप्तं तेन परम्परागतस्मृतिशक्तौ परमसौकर्यम्। द्वादशवर्षादूर्ध्वमेवाऽऽङ्गलभाषाद्वारेणैव शिक्षणीयं यस्य सर्वं तेन भारतीयेन बालेनाऽऽत्मनो दारुणकार्यभारोद्वहनाय तस्य निर्विवादस्वीकृता स्मृतिशक्तिः स्वत एवाऽऽश्रयणीयेत्यत्र नास्ति विस्मयस्यावकाशः, एवंविधास्ववस्थासु यज् जायते तत् तु "मनोविज्ञानपदस्याऽऽशयो व्याख्यायताम्"—इति प्रश्नस्य कस्मिंश्चिदनतिचिरगते परीक्षणे यदुत्तरं लब्धं तेनैव विशदीभवेत्। "मनोविज्ञानं हि प्रसाधका विकाराः"—इत्येवाऽऽसीदुत्तरपत्रगत-मुत्तरम्। सप्तदशाधिकोनविंशतिशततमखृष्टाब्दस्य कलिकाताविश्व-विद्यालयस्य राजनिर्वाचितसभायाः पुरतः, आङ्गलभाषाद्वारेणोप-देशदानं शिक्षयत्यस्मदीयान् बालकान् गौरवारोपणं पदेषु न वरं भावेषु, आकारेषु न पुनर्गूढार्थेष्विति प्रमाणत्वेन ब्रुवाणस्य डक्टर-प्रमथनाथवन्द्योपाध्यायमहोदयस्य—अध्यापनकक्षासु लिखनार्थम् अनुवाचितानां दुर्बोधानामपि टीकानां धारणे योग्यतेयम् एवाऽऽ-सीदसंशयं मनसि।

दृष्टा मया बहुश एव वङ्गीया विद्यालयाः, परिदर्शनावसरे च तेषां श्रितो मया बालकानां सविधे कतिपयसरलप्रश्न-जिज्ञासनाभ्यासः, प्रायेण सर्वदैव नाबुध्यन्त ते तेभ्यः कथितं विषयम्, तत्र तत्र च शिक्षकाणां च तेषां पुनरुदीरणं मे प्रश्नस्य सदैवापेक्षणीयं जातम्। तथैव मयापि प्रायेण न पारितं बोद्धुं तेषामुत्तरम्। भारतीयो बालस्तदीयविद्यालयजीवितस्य चरमवर्षद्वये प्रतिसप्ताहं यं षड्विंशतिहोरापरिमितसमयं नयत्याङ्गल-भाषापठनेन, एकस्यैव विषयस्य कृते तस्मादधिकतरः कालांशो न विनियुज्यते,—कलिकाताविश्वविद्यालयस्य राजनिर्वाचित-सभायाः सदस्यैः परिचितानां देशानां कस्मिंश्चिदपि देशे कस्यामपि वा द्वितीयस्तरीयाध्यापनरीत्याम् इति सत्यपि तैरेव प्रदर्शिते विषये नैतन्निराशाजननमपि विस्मयावहम्। व्याख्यात-मेवास्य कारणं केनचिदभिज्ञेन विदुषा, कथितश्च तेन पूर्ववङ्गीयस्य कस्यचिदध्यापनशैलीशिक्षायै स्थापितस्य महाविद्यालयस्याध्यक्ष-त्वेनावस्थानकालेऽभीक्ष्णमेव दृष्टास्तेन बहव एव समाप्तविद्या-स्तरुणाः यैर्विद्यालयप्रवेशात् पूर्वं नालोचितं जातुचिदाङ्गल-देशीयैरिति। आङ्गलदेशीयस्याऽऽङ्गलभाषां श्रुत्वैव न शक्नुवन्ति बोद्धुं नैव च पारयन्ति तस्या भाषाया विशुद्धं स्वरभेदं वा ग्रहीतुं भारतीया विद्यार्थिन इत्यत्र विषये न स पश्यति किञ्चन विस्मयोद्दीपकमेवंविधास्ववस्थासु। अध्यापनशैलीशिक्षामहाविद्या-लयो हि कश्चित् शिक्षकोत्पादकः प्रतिष्ठानविशेषो यस्मान्निर्गतो गृहीतविद्यः स्वदेशीयानां शिक्षणविधावेव विनियुज्यते।

भारतीयविश्वविद्यालयस्य विद्यार्थिनां न जायते विश्वविद्यालय-प्रवेशसमयेऽनुरूपाधिकार आङ्गलभाषायाम्, भूयिष्ठभागेन च तेषां नैवार्ज्यते विश्वविद्यालयतः शिक्षाग्रहणावसरेऽपि सम्यक् ज्ञान-माङ्गलभाषायामिति प्रतिपद्यते कश्चनापरोऽभिज्ञो महाविद्या-

लयाध्यक्षः। अभाषि च तेनैव—"वर्षषट्कं महाविद्यालयेऽतिवाहितवताम् एम्-ए-परीक्षार्थिनामपि बहूनामेवोत्तरपत्रतो ज्ञायतेऽनुभवन्त्येव ते क्लेशविशेषमाङ्गलभाषायां स्वमनोभावान् प्रकाशयितुम्, तत्र तत्र च पुनस्तेषामुत्तरपत्रेषु परिलक्ष्यन्ते स्थूला एव व्याकरणगताः प्रमादाः"—इति। प्राथमिकशिक्षानन्तरमेव या रीतिर्वैदेशिक भाषाद्वारेणैव वितरत्युपदेशान् सा तु सनैराश्यं याति निष्फलतामिति सिद्धान्तितं तेन।

निराकरणायास्य दोषस्य बहव एव श्रिता उपायाः परं न ते सुष्ठुतया प्रतिभान्ति। यो हि खल्वपरिमेयः समयो विनियुज्यते आङ्गलभाषाध्यापनायोच्चशिक्षालयेषु नूनं नैवास्माभिरवाप्यते तदनुरूपं फलम्; एतच्च पुनर्विवेचनीयमेव यन्महाविद्यालयस्याध्ययनमार्गे आङ्गलभाषाया अवश्यपाठ्यत्वेन स्वीकरणं प्रायशो विद्यार्थिन आकुलानेव विदधाति न पुनर्निःसन्दिग्धान् स्वमनोभावप्रकाशनाय द्वारीकृताया भाषायाः स्वरूपबोधने। "यत् वाइवेल-भाषितं मृगयुं न पूतं जनं मन्यते, कलयति स तद्भाषितं लूनपक्षं कुक्कुटमिवाकिञ्चित्करम्"—इत्येवं विधस्य वाक्यस्य टीकारचनाय केनचित् परीक्षकेण पृष्टस्य साधारणस्य भारतीयस्य बालकस्य को वा स्यान्मनस उपकारः। अपि च कथितभाषात्वेनाऽऽङ्गलभाषाज्ञानस्य विषये किं वा स्यादनेन प्रयोजनम्? अथवा जनपदागतो भारतीयो बालः कां नाम समुन्नतिं विधास्यति तदीयस्य भाषाज्ञानस्य—"ये तावद् भावाः 'साम्सन् एगोनिष्टस्' इति पुस्तकस्य काव्यत्वेनात्मव्यक्तीकरणत्वेन च गौरवमावहन्ति तान् वर्णय" इति प्रश्नं समासेन समालोच्य, यत् सत्यं स चैकदा पृष्टोऽभूत्?

अपि चाऽऽङ्गलभाषाशिक्षणे एवंविधमनःसंयोगस्यावश्यकर्तव्यतया जाता काचिदशुभावहोपेक्षा विद्यार्थिनां स्वेषामपि मातृभाषायाम्। विश्वविद्यालयप्रवेशार्थिनो जायतां वा न जायतां

नाम यथोपयुक्तं ज्ञानं स्वमातृभाषिते साहित्ये वेति विषये आपेक्षिकम् औदासीन्यम् एव दृश्यते। सत्यमपेक्षत एव कश्चिद् विधिर्येन मातृभाषाविन्यासेऽपि तस्य परीक्षणं जायेत परं शैल्या आदर्शरूपेण पठनार्थानुमोदितानां ग्रन्थानां षडवधिकासीत् संख्या तत्रापि च पुनरनुमोदितग्रन्थविषयावगाहिणो मातृभाषायाः साहित्यस्य इतिहासाश्रयिणश्च प्रश्नाः सनिर्णयमासन् नियन्त्रिताः। पक्षान्तरे महाविद्यालये मातृभाषाविन्यासस्य कृतेऽध्यापनम् अनपेक्षणीयमेवेत्यदृश्यत नियमः। भारतीयबालस्य शिक्षाविधौ यदेव सारवत्तया चिन्तनीयं तस्यैव नूनमनेन जायतेऽपूर्वमवधीरणम्। अनेन कलिकाताविश्वविद्यालयस्य राजनिर्वाचितसभायाः सदस्यास्तथा विस्मयं याताः यथा तैरेव प्रकटितम्—शिक्षारीतौ विद्यत एव कश्चिदयुक्तिसिद्धो विषयो येन तरुणाः शिक्षासमापनानन्तरमप्यसमर्था एव भवन्ति स्वेषामपि मातृभाषयाऽस्खलितं वदितुं निर्दोषं वा लिखितुम्—इति तेषां मतम्।

दूरे तावदास्तां शिक्षणद्वारवार्ता, भारतीयशिष्टि-सम्प्रदायाभ्यां सर्वथा प्रत्यादिष्टेयं समग्रैव शिक्षारीतिः, उच्चशिक्षालयाः वि-ए-उपपद-प्राप्तेः प्राक्तनशिक्षामार्गाश्च मूलत एव प्रतीच्य-शिक्षापद्धतेरनुरूपाः, बृटीशागमनात् पूर्वं समनुभूतेन भारतीय-जीवितेनासम्बद्धाश्च। ते तु प्रायेण यन्त्रतुल्याः; स्वदेशीयाया रीत्याः प्रकृष्टलिङ्गस्य शिक्षकशिक्षार्थिनोर्मध्ये दरीदृश्यमानस्य गाढसम्बन्धविशेषस्याभाव एव स्फुटं परिलक्ष्यते तेषु। विश्वविद्यालयवितीर्णा शिक्षा सर्वथा साकल्येनासम्बद्धा भारतीय-विद्यार्थिनां चेतसामुच्चाशाभिरकपटचिन्ताभिश्च। निदर्शनमेकं सहसैवाऽऽयाति मनसि। सत्यं विश्रुता हि भारतस्य मनोवृत्तिः सदैव दर्शनशास्त्रं प्रति गौरवप्रदर्शनेन, तथापि चित्रम्! अनाकर्ण्य नामतोऽपि उल्लेखं भारतभूमेरुद्भूतानां षड्दर्शनानां

वा वेदान्तसूत्रसंग्रहीतुर्बादरायणस्य वा भाष्यनिर्माणकोविदानां शंकररामानुजप्रमुखाणां वा समाप्यते वि ए-परीक्षार्थं गृहीतदर्शन-शास्त्रैर्भारतीयैर्विद्यार्थिभिर्विश्वविद्यालयवितीर्णा विद्या।

प्रधानतो भारतीयानामेव प्रयत्नेनावस्थेयं समागतेति महान् एवायम् असत्याभासः। भारतीया एव प्रतीच्यज्ञानं प्रतीच्यभाषां च प्रार्थितवन्तः। केवलसाहित्यशिक्षादर्शरूपेण प्रदत्तायां शिक्षायां परिदृश्यमानोन्मुखतापि भारतीयानामेव सकाशाल्लेभे प्रसरणरयम्। सप्तदशाधिकोनविंशतिशततमखृष्टाब्दे विश्वविद्यालयस्य राज-नियुक्तया सभया युक्तराज्यस्य जनसंख्यया तुल्यं सार्धचतु-ष्कोटिपरिमितं दृष्टं वङ्गानां जनसंख्यानम् अवधारितश्च यतन्तेऽत्र षड् विंशतिसहस्रसंख्यकाश्छात्रा विश्वविद्यालयस्य उपपदलाभाय इति।

परं यतो वङ्गानां दशांशपरिमिता जना जानन्ति लिखितुं पठितुञ्च ततो विश्वविद्यालयात् पूर्णशिक्षां प्राप्तवतां संख्या प्रायेण दशगुणा युक्तराज्यस्य। विस्मिता एवाभवत् सा राज-नियुक्ता सभा वङ्गानां ग्रेट्ब्रिटेनप्रदेशस्य च अवस्थानामितरेतरै-र्वैलक्षण्यैः। उत्तरोक्ते तु देशे दृश्यन्त एव प्रकारभेदाः शिक्षाणाम्। बहुलांशैरेव छात्राणां स्वीक्रियते आजीवानुकूला विद्या, स्वल्प-परिमितैरेवाऽऽसज्यते केवलसाहित्यशिक्षासु। विपर्यये त्वितर-सभ्यदेशवैलक्षण्येन वङ्गानां शिक्षितसम्प्रदायस्याधिको भागो मन्यते विश्वविद्यालयप्रदत्तम् उपपदविशेषमेव योग्यं काङ्क्षणीयं च लक्ष्यम्, यद्धि लक्ष्यम् अवाप्यते तैः केवलसाहित्यशिक्षास्वरूपेणा-ध्ययनमार्गेण; यस्माच्च पुनर्लक्ष्यात् प्रत्यक्षं नैव जायते काचित् कार्यकरी शिक्षा। ग्रेट्ब्रिटेनप्रदेशे प्रकारतो विभिन्नानाम् अष्टादश-विश्वविद्यालयानां स्थितिरेव प्रकटयति शिक्षासरणीनां विभिन्न-ताम्। वङ्गेषु तावद् विद्यते एक एव विशालो विश्वविद्यालयः

संख्योत्कर्षेण यः खलु बृहत्तमो जगति स्थितानां विश्वविद्यालयानाम्, यस्मिंश्च विद्यन्ते सप्तविंशतिसहस्रसंख्यकाः सर्ववर्गीयाश्छात्राः, यत्र च पुनर्भवन्ति प्रतिवर्षं षोडशसहस्राधिकाः मैट्रिकुलेशन्-परीक्षार्थिनः। तस्यैव महतो यन्त्रव्यापारस्य शासन एव स्थापितैः सर्वशिक्षार्थिसमाजैरनुस्रियत एक एवाध्ययनमार्गः सर्वेष्वेव विषयेषु, पठ्यन्ते च अभिन्नान्येव पुस्तकानि, निर्विशेषं च दीयन्ते परीक्षणानि। प्रत्यक्षीकृताश्च तैर्निखिलेऽस्मिन् भारते पञ्चाशत्सहस्रसंख्यकैः शिक्षार्थिभिराश्रितास्त्रयस्त्रिंशदधिकशतसंख्यका महाविद्यालयाः द्वादशसहस्राधिकद्वादशलक्षपरिमितैश्छात्रैराकीर्णा ऊनपञ्चाशदधिकशतयुताष्टसहस्रसंख्यकाः प्रतीच्यानुरूपा द्वितीयस्तरीया विद्यालयाः। तथैवाऽऽसीत् शिक्षावृक्षस्य प्रसूनोद्गतिर्यथा तैर्दुष्कर एवाभूद् यत्र कुत्रापि वाऽस्मिन् भुवनतले अनेन सदृशस्याऽन्यस्य कस्यापि दर्शनलाभः।

कथं वेयं समुद्गता विस्मयजननी अवस्था? विगतशतवर्षाण्यनुसृताया आधुनिकशिक्षापद्धतेरुत्पत्तेः क्रमविकाशस्य चेतिवृत्तेऽस्य प्रश्नस्योत्तरमनुसन्धेयम्।

---

## द्वितीयोल्लासः

### रीतेरुत्पत्तिरुपचितिश्च

न हि पूर्वतनोल्लासे समासेन वर्णिता शिक्षापद्धतिः इष्ट-इण्डिया-कोम्पानि-नियुक्तानां बृटीश्शासकानामेव प्रयुक्तिः। बृटीश-शासन-जनिते निर्भयत्वे लभतां भारतीया शिक्षिर्विशिष्टमेव विकाशम् इत्यासीद् वारेन्-हेष्टिंस् महोदयस्याऽऽशंसा। महम्मदीयानामेवो-पकारार्थं प्रतिष्ठितं तेनैव "कालकाटा माद्रासा" इत्यभिहितं किञ्चित् स्वदेशीयं शिक्षाप्रतिष्ठानम्। किंच यदा त्रयोदशाधिकाष्टादशशततमे खृष्टीये वर्षे, तदाऽऽसम्भूत एव "भारतीये शासनविधौ" अन्त-र्निविष्टमभूत् "दद्दीरन् कोम्पानीशासकाः प्रतिवर्षं शिक्षायै निर्दिष्टं धनांशमिति" परिकल्पनम्, तदा तैरेव प्रत्याख्यातः प्रतीच्यानु-रूपाणां महाविद्यालयानां संस्थापनसङ्कल्पः व्ययितश्च शिक्षार्थं निर्दिष्टो धनांशः समुन्नतये प्राच्यशिक्षायाः। उत्पाद्यैव वर्त्तमान-दशाविशेषं विरतमभूद् यदान्दोलनम् अन्यदेव तावत् तदागतिस्थानम्। वस्तुतस्तु लौकिकशिक्षाभ्युदयविषयकान्दोलने समादरवतां शिक्षित-सम्प्रदायानामुत्साहः खृष्टीयधर्मप्रचारकाणाम् औत्सुक्यातिरेक-श्चेति विशेषतो विभिन्नादेवोद्गतिस्थानद्वयाल्लब्धोऽनेन प्रसरणा-रयः।

कलिकातायां तदुपकण्ठे च सन्दृश्यन्ते बहव एव साम्प्रतं कीर्त्तिस्तम्भाः, द्वयोरेवाऽऽन्दोलनयोः प्रारम्भं प्रति यैराकृष्यन्ते चेतांसि प्रेक्षकाणाम्। डेभिड-हेयार् इत्याख्यस्य कस्यचिद्

घटिकायन्त्रनिर्मातुर्रिल[illegible]डीयस्य वणिजः प्रतिमूर्तिस्तु तेष्वेका, या हि खलु सम्प्रत्यपि संलक्ष्यते कलिकातान्तःस्थितस्य तन्नाम्नैवाभिहितस्य कस्यचिदुच्चशिक्षालयस्य प्राङ्गणे। "बाराक् पुरस्या" क्रीडस्य तीरान्तरे, नगरात् कियतश्चित् क्रोशान् दूरे हुग्लीनद्या दक्षिणतटस्थितं किञ्चन विस्मापकं हर्म्यं तु तावदपरम्। तत्तु हर्म्यम् अभिषेकादिना खृष्टधर्मे दीक्षादाननिरतेन केरि-मार्शमैन्-वार्ड-समाख्यातेन प्रख्यातेन धर्मप्रचारक-त्रिकेण[illegible]धिकाष्टादश-शततमखृष्टाब्दे तदानीन्तन एव डेनिस्राज्ये संस्थापितम्, यदद्यापि "श्रीरामपुरकलेज्"—इत्यभिधया परिचितं स[illegible]पचीयमानमेव शिक्षाप्रतिष्ठानम्।

स्वभावतो धर्मस्य शासनग्रहण एव असमर्था अपि, ये नाम यथार्थखृष्टधर्म्युचितं जीवितमेवानुकर्तुं प्रसह्य हृदयेन विनियुज्यन्ते तेषामेवैकतम आसीद् डेभिड्हेयार्-महोदयः। तत्समसामयिकेन बाबु-गोविन्दचन्द्रदत्तेन "थेकारे" वचनमुद्धृत्यैवोक्तं—"न हि स जानाति किं तावदासीद् हेयार्-महोदयस्य मतम्, परं (यथार्थ) खृष्टधर्मावलम्बिनो जीवितस्यानुरूपं किञ्चित् स दधार जीवितमिति।" पक्षान्तरे श्रीरामपुरस्य खृष्टधर्मप्रचारकाणां "दि-फ्रेण्डस्-अफ्-इण्डिया" वार्त्तापत्रेण द्विचत्वारिं[illegible]-दधिकाष्टादशशततमखृष्टाब्दस्य जुन्मासि मृत्युसम्बन्धिविज्ञप्त्युदाराक्षरैः शंसित्वा शिक्षाविषये तस्य जनहितकरं प्रोत्साहनमभिहितम्—"अत्रेदमपि [illegible]यमेव स्वीकरणीयं यत् "गस्पेल्" विषये तदीयं स्थिरं वैरं प्राचुर्येण तद्वशं गतानामेतद्देशीयानां तरुणानां मनसि जनयद् विरक्तिं धर्मतत्त्वजिज्ञासासु प्रोत्साहयच्च हैतुकतां साधारण्येन कञ्चिदसुखकरमेवोदपादयत् प्रभावम्, यस्यावसादात्मिका परिणतिः सुशिक्षितानाम् आधुनिकानामेत[illegible]शनिवासिनां मते व्यवहारे च सुव्यक्तं चिरं स्थास्यतीति।" [illegible]र्घदर्शितयाऽनया

कथमधिगतं सम्यगवितथत्वं, तदितः परं नियतमेव स्पष्टी-भविष्यति। नातिचिराद् यैर्नास्तिकतामहातरङ्गैः पराभूयत वङ्गीयो विद्यार्थिसमाजस्तत्प्रवृत्तेः प्रष्टृत्यता चेद् डेभिडहेयार् महोदयस्यैव स्कन्धे न्यस्येत तदा नूनमशोभनमेव तज् जायेत। एतद्धि पुरातन-काचभाजने नवीनमदिरानिवेशनप्रचेष्टनस्यापरिहार्यमेव फलम्। क्रियेत चेदस्य समारोपणं कस्मिंश्चिदपि जने, तदा तु नैतिकान् वा धर्म्यान् वा सर्वान् एव विषयानसम्बाधं समालोचयितुं समुत्सहमाने छात्राणामुपरि सुमहत्प्रभावसम्पन्ने स्वाधीननये हिन्दुकलेजस्य कस्मिंश्चिद् विशिष्टशिक्षके एइच्-एल्-डोरेसिओ-महोदय एव कर्तव्यं न तु डेभिड्-हेयार्-महोदये।

अष्टादशशततमे खृष्टाब्दे निर्णीतकलिकातानिवासो हेयार्-महोदयः षोडशाधिकाष्टादशशततमखृष्टाब्दे लेभे स्वकर्मणो-ऽवसरम्। अद्यापि कलेजस्कोयार् इत्यभिहिते आक्रीडे विद्यमाने तदीये चैत्ये दृश्यते विलिखितम्—"स्वदेशत्वेनैव गृहीताऽनेन प्रवासभूमिः सानन्दश्च तत्र विनियुक्तस्तेन चरमो भागः स्वजीवित-कालस्य, अदम्योत्साहेन परोपकारितया च वङ्गीयानां शिक्षाया नीतेश्च समुन्नतिविधानरूपस्यैकस्यैव व्यापकस्य प्रियस्य च विषयस्य कृते आत्मक्लेशो वा अर्थो वा स्वप्रभावो वा किमपि नासीत् तस्याविनियोज्यमिति।" एतदुद्देश्यप्रणोदितेनैव तेन पठिता वङ्गभाषा, परं तत्राऽऽकलय्य वङ्गभाषायां विरहमाधुनिक-शिक्षानुगुणविषयाणाम्, भाविवंश्यानां प्रतीच्यसाहित्यविज्ञानज्ञान-दानाय सम्पत्स्यमानस्य कस्यचित् शिक्षाप्रतिष्ठानस्य संस्थापनाय मतिं दधे। अनयाकाङ्क्षया समुद्दीपितः स सङ्गं भेजे नगर-स्थितानां शिक्षितानां धनाढ्यानाम्, तैश्च [illegible] नैतिकस्य बुद्धिविषयकस्य चानुशीलनस्यावनतिं सखेदं समीक्ष्यान्यनिरपेक्ष-मेव स्वस्य (हेयार्-महोदयस्य) एव लक्ष्यं समनुसृतवतो महतो

हिन्दुसंस्कारकस्य 'राजा'राममोहनरायस्य परिचितिम् उदपादयत्। एकीभूता तयोः शक्तिः प्रावर्तयत् सप्तदशाधिकाष्टादशशततमखृष्टाब्दे 'हिन्दु कलेज्' इत्यभिहितं महाविद्यालयम्। "विशिष्टहिन्दूनामाङ्गल-भाषायाः, भारतीयभाषाणाम्, एशियायुरोप-महादेशयोः साहित्य-विज्ञानानाञ्च शिक्षणाय स्थापितोऽयं महाविद्यालयः" इति तस्य महाविद्यालयस्य परिचालकैर्विनिर्मितानामेव नियमानामाद्य-वेवाऽऽसील्लिखितम्।

आधुनिकरीत्या शिक्षाविस्तारविधौ वैषयिकाणां पृष्ठत एव चाऽऽसन् खृष्टधर्मप्रचारकाः। सत्यं विभिन्नम् एवाऽऽसीत् तेषां समुद्देश्यम्। भारतीयानां सविधे खृष्टधर्मस्योपदेशप्रकाशनस्य द्वारतयैव प्राथम्येन जाता शिक्षा तेषां प्रयोजनीया। श्रीरामपुरस्य एकायनैः कर्मिभिः "निउ टेस्टामेण्ट" ग्रन्थस्य प्रथमं संस्करणं सम्पादितं त्रिंशतोऽप्यधिकैः प्राच्यभाषितैः। यस्त्रिंशदधिकाष्टादश-शततमखृष्टाब्दे राममोहनरायस्य दृढं साहचर्यं समासाद्य संस्थापित-वान् एकं विद्यालयं महाविद्यालयञ्च, याभ्यामेव च समुद्गते साम्प्रतं "स्कटीश्-चार्चेस्-स्कुल्"—"स्कटीश-चार्चेस्-कलेज्" इत्यभिहिते शिक्षाप्रतिष्ठाने ; तेन विदुषा, धर्मप्रचारकेण, राजनीतिनिपुणेन च आलेक्साण्डार् डाफ् महोदयेनापि श्रीरामपुरस्य विख्यातस्यैव त्रिकस्य समनुसृता सरणिः।

समान्दोलनैरेभिः शासनविधिरप्यभूत् प्रभाविता। आङ्गल-भाषाद्वारेण प्रतीच्यविज्ञानपाठस्य समीहितत्वविषये 'राजा' राममोहनरायेण स्वयमेव प्रोत्साहितः प्रधानशासको लर्ड-आमृहार्ष्ट-महोदयः "संस्कृतशिक्षारीतेर्निरवच्छिन्नावस्थितिसम्पादनं तस्य स्वदेशीयानां चित्तान्यप्रतिबोध्य करिष्यत्येव तानि प्रत्युत तिमिरावृतानि इति, देशीयजनगणस्य समुन्नतिसाधनमेव यतः शासकस्योद्देश्यं ततो गणितस्य पदार्थविद्याया रसतन्त्रस्य शरीर-

व्यवच्छेदशास्त्रस्य अन्येषामपि प्रयोजनीयानां विज्ञानानां च ग्रहणेनाधिकतरमुदारं प्रतिबोधकश्च शिक्षणोपायं श्रयिष्यत्येव शासक इत्यत्र च पुष्णाति स विश्वासातिशय"मित्युदघोषयत् स स्वमतगर्भित एव कस्मिंश्चिल्लेखे।

तदानीन्तनी समवस्थैवैतेषां ग्रहणे सहकारित्वं ययौ। त्रयस्त्रिंशदधिकाष्टादशशततमखृष्टाब्दस्य भारतीयविधिना प्रधानशासकस्य संसदि स्थितैः सदस्यैः कस्यचिद् व्यवहारशास्त्रज्ञस्य सदस्यस्य संयोजनमनुमोदितम्, तस्मिन्नेव च नवीने कर्मणि प्राथम्येन विनियुक्तो मेकले एव त्रयोविंशत्यधिकाष्टादशशततमखृष्टाब्दे जातायाः "साधारणशिक्षासमिते"रपि सभापतित्वेन निर्वाचितः। पण्डितप्रकाण्डोऽसौ मेकले न्यक्कार-जालमेव व्यकारीत् प्राच्यविद्यां प्रति। पञ्चत्रिंशदधिकाष्टादशशततमखृष्टाब्दस्य कस्मिंश्चिन्मन्तव्यप्रकाशनपुस्तके शासकसदस्यतयैव समुपस्थापितं तेन स्वकीयं मतम्; तदा प्रभृति च प्राच्यशास्त्रविदां प्रतीच्यविदुषाञ्च विचारेषु तत् खलु मन्तव्यप्रकाशनपुस्तकं प्रामाण्येनैव परिगृह्यते। "काष्ठफलकमात्र एव संस्थापितानि युरोपदेशीयान्युत्तमपुस्तकानि भारतस्य आरबस्य च सर्वैरेव जातीयसाहित्यैस्तुल्यानि। यदि रीतेस्तस्याः परिवृत्तिर्नैव साध्येत तदा "साधारणशिक्षासमिते"श्छिन्नं भवेत् तस्य बन्धन"मिति घोषणयोपसंहृतं तेन शिक्षाविषयकमिति[illegible] सुदीर्घं विश्लेषणम्।

लर्ड-आमहार्ष्टमहोदयस्यानन्तरगामी लर्ड्-विलियम्-बेण्टिङ्क् इत्युदाहृतः प्रधानशासकोऽभूत् तस्य बलवान् समर्थकः; निर्गता च तदागमनवर्ष एव "शिक्षायै शासकाधीनो धनभागः आङ्गलभाषाद्वारेणैव युरोपीयभाषाणां विज्ञानानाञ्च शिक्षणार्थमेव विनियुक्तः स्या"दिति घोषणा। त्रयस्त्रिंशदधिकाष्टादशशततमे खृष्टाब्द एव

इंलण्डदेशे 'राजा'राममोहनरायो ममार, तस्मिन्नेव च वर्षे प्रागुक्त-धनविनियोगविषयकस्थायी भारतीयो विधिर्विधिवद्व्यवस्थापितः। परं प्रदर्शितमेव फलं तदुप्तेन वीजेन। बाबु-रामतनु-लाहिडीनामानं कञ्चन सुजनं ब्राह्मणं स्वदलप्रधानं मन्यमानेन ज्ञानस्यालघुवितते-रुपायोपकल्पनरतेन केनचित् क्षुद्रेण संस्कारकदलेन सानन्दमभि-नन्दितः प्रतीच्यानां जयः। "ज्ञानान्वेषण" इति "वेङ्गल् स्पेक्टेटर्" इति च पत्रिके विनिर्गते; संघटिता "सोसाइटि-फर्-दि-एकुइ-सिशन्-अफ्-जेनारेल् नलेज्" इत्युदाहृता काचित् संसत्। तस्यैव वर्षस्य जुन्मासेन परिलक्षितं "काल्काटा मेडिकेलकलेज्" प्रतिष्ठानम्, यदीयं समजनि साफल्यम् उच्चवर्णनापरिज्ञात-मृत-देहस्पर्शनं निन्दनीयमिति पुरातनरीतेर्विलङ्घनसाहसात् "हेयार्स् स्कुलतो गृहीतविद्यस्य कस्यचन मधुसूदनगुप्ताभिधस्य, साहित्याच्च मृतनरशरीरव्यवच्छेदनविषये केषाञ्चित् साहसिकच्छात्राणाम्। एवम्प्रकारेण पूर्णरयेण प्राचलद् नवमदिरायाः पुरातनकाचभाजने अवपातनक्रमः। सप्तत्रिंशदधिकाष्टादशशततमे च वर्षे विचारालयेषु पारसीकभाषाया निवारणात्, शासकाधीनेषु सर्वेष्वेव नियोगेषु प्रतीच्यविद्याशिक्षिता एवोत्तरकाले समादराधिक्यं प्राप्स्यन्तीति च लर्ड्-हार्डिञ्-महोदयस्य चतुश्चत्वारिंशदधिकाष्टादशशततम-खृष्टाब्दीयाद् विघोषणाल्लब्धोऽनेन समधिको वेगः।

सार्-चार्लस्-उड्-महोदयस्य चतुःपञ्चाशदधिकाष्टादशशततम-खृष्टाब्दीयेन सुप्रसिद्धेन लेखेन वर्णितां शिक्षारीतिमनुसृत्यैव जातं किञ्चन राजानुशासनम्। तेनैव चानुशासनेन प्रतिप्रदेशम् एकैकस्यः "साधारणशिक्षाविभागस्यः" प्रतिष्ठापनं विधाय, यथानिर्दिष्टनियमन परिचालितानां शिक्षाप्रतिष्ठानानां साहाय्यार्थं दानस्य विधिं व्यवस्थाप्य च साधितस्तस्या रीतेर्विपुलो विस्तारः। भारत-मधिवसतः, श्रमस्य मूलद्रव्यस्य च नियोगस्य चित्राणि फलानि

शिक्षयितुम्, स्वदेशस्य विभवस्य समुन्नतविषयेऽस्मत्समकक्षान् विधातुम्, धनस्य वाणिज्यस्य च सुखावहायाः समुन्नतेः सर्वानेव गुणान् क्रमेणासन्दिग्धम् अधिगमयितुञ्च प्रोत्साहितं पुनस्तेन बहुलपरिमाणेन प्रादेशिकविश्वविद्यालयानाम् आजीवानुकूलविद्या-र्जनोचितविद्यालयानाञ्च संस्थापनम्। परमन्यद्धि शिक्षामार्गाङ्कनं शासकस्यान्यदेव च तदङ्कितवर्त्मनैव समान्दोलनपरिचालनम्। वस्तुतस्तु समान्दोलनस्यास्योत्तरश्चेतिहास एव दर्शयति द्रुततरं लब्धोऽनेन स्वक एव कश्चिद् रयोत्कर्षः यस्य नियन्त्रणेऽसमर्था एवाभवन् कर्तृपक्ष्याः। न चाधिगतास्तैश्चतुःपञ्चाशदधिकाष्टा-दशशततमखृष्टाब्दीयेन लेखेन प्रदर्शिता व्यापिकाः प्रत्याशाः। पर्यस्ता जाता चतुरस्रता प्रयोगस्य, यतो विहाय चिकित्सा-शास्त्रमार्गं सर्व एवाऽऽभ्यासिकाः शिक्षामार्गाः कदाचिदपि न विजहुस्तेषां स्वल्पतनुताम्। पक्षान्तरे पुनरुद्भिद्यमानया कुसुम-समृद्ध्योपलक्षितैर्वृक्षैरिव केवलसाहित्यशिक्षामार्गैः प्रसभमेव व्यधायि तेषां निःसारता। जातेः परम्परागतः स्वभाव एवात्र कारणमिति सुव्यक्तमेवैतत्। हिन्दूनां महम्मदीयानां वा ययो-र्जात्योर्द्वयोः सम्प्रदायगताः शिक्षारीतयः केवलसाहित्यशिक्षारूपा धर्मविषयावगाहिण्यो वा समासंस्ते तु केवलसाहित्यशिक्षास्वेव कुर्यातां मनःसंयोगमिति त्वपरिहार्यः खलु विषयः। संस्थापित-विश्वविद्यालस्य प्रकारविशेषोऽपि जातस्तस्यैव भावस्य परिपोषकः। सप्तपञ्चाशदधिकाष्टादशशततमखृष्टाब्दे समासादितसम्भवोऽयं विश्व-विद्यालयः किञ्चिदेवाधिकोऽभूत् कस्माच्चित् परीक्षणसमाजात्, तदा सर्वाण्येव शिक्षाप्रतिष्ठानानि आत्मवशगत्वेनानुभवितुम् एव तस्य सामर्थ्यसद्भावात्। द्व्यशीत्यधिकाष्टादशशततमखृष्टाब्दे चतुःपञ्चाशदधिकाष्टादशशततमखृष्टाब्दस्य राजनीत्यनुसारेण गृही-तानामुपायानां फलेषु कस्यचिद् राजनिर्वाचितसभाविशेषस्य

परीक्षणविषयतां गतेषु विश्वविद्यालयप्रदत्तान्युपपदानि समाकाङ्क्षणीयत्वेन, जनसेवासु प्रतिष्ठालाभस्य पाण्डित्यसूचकस्याऽऽजीवस्य च मुद्रात्वेन परिगृहीतानि। अन्यच्च, एवंविधोपपद-प्रशंसा-पत्रावाप्तिरूपा शिक्षाविषयिणी विशिष्टता कञ्चिन्निर्दिष्टं सामाजिकं गरिमाणमप्यविन्दत इति विवाहापणे तदधिकारिणामधिकतर-मूल्यदर्शनादेव वक्तुं शक्यते।

द्व्यशीत्यधिकाष्टादशशततमखृष्टाब्दीया राजनिर्वाचिता सभाऽपि विस्मयं गतवती रीतेरस्याश्चतुरस्रताया अभावरूपादपरस्मादपि कारणात्। परिलक्षिता च तयाऽस्या गुरुशीर्षता। पुष्यत्स्वपि मध्यमवित्तेषु जनेषु माध्यमिकशिक्षाया उच्चशिक्षायाश्च कृते भाव-विशेषम् सौदासीन्योपेक्षाकक्षास्वेव निपतिता प्राथमिकी शिक्षा। अचेष्टतैव सा राजनिर्वाचिता सभा दूरीकर्तुमेतान् देदीप्यमानान् दोषान्। कृताश्च तया प्राथमिकशिक्षाया महते विस्ताराय कल्पिष्यमाणाः प्रस्तावाः। समुपस्थापिताश्च पुनस्तयैवापरे केचन प्रस्तावाः ये तु उच्चशिक्षाविषयकोपपदलाभाय द्रुततरं प्रचीयमानस्य छात्रप्रवाहस्योद्दामं वेगं नियमयन्तः कञ्चिदेवांशं तस्याऽऽजीवानु-कूलासु प्रणालीषु सञ्चारयिष्यन्ति।

अधुनापि पूर्वाधिगतमेव स्वं वेगमाश्रित्यैव प्रधावन्त्याः, नियन्त्रणाय कर्तृपक्ष्योद्भावितैः सर्वैरेव प्रयत्नैरप्यप्रभावितायास्तस्या रीतेर्नान्यदस्ति किञ्चन प्रशस्ततरं व्याख्यानम्, द्व्यशीत्यधिकाष्टादश-शततमखृष्टाब्दस्य राजनिर्वाचितसभायाः प्रशंसनीयस्योद्यमस्य सम्पूर्णरूपेण विफलताधिगमात्। वाणिज्यविषयकानुशीलनेषु केवलसाहित्यशिक्षेतरेषु च ज्ञानसम्पादनारम्भेषु तरुणान् समर्थान् विधातुम् उच्चशिक्षालयेषु कस्यचित् शिक्षासरणिविशेषस्य प्रवर्तनायैव गृहीताः प्रस्तावा वैयर्थ्यं गताः, परं तदव्यवहितेषु विंशत्यां संवत्सरेषु प्राथमिकशिक्षाया विस्तारे द्वितीयस्तरीय-

शिक्षाया विस्तारत आपेक्षिकी अवनतिरेव परिलक्षिता ; प्रकर्षं नीतश्च द्वितीयस्तरीयशिक्षाया उन्नत्यतिरेको द्वितीयस्तरीयेषु विद्यालयेष्वपि उन्नतरप्रकाराणां सम्भूतिश्च प्रारब्धमात्राणां तत्सजातीयानां विद्यालयानां सम्भूतेरानुगुण्येन सुमहत्तरैवाऽऽसीत्। मौलौ चास्याः शिक्षायाः समदृश्यत काचित् प्रवृद्धिः, प्राधान्येन सर्वतोभावेन वा छात्रदत्तवेतनमात्रोपजीविनाम्, विश्वविद्यालयगृहीतपरीक्षायै छात्रनिर्माणप्रतिष्ठानरूपेण न पुनर्वस्तुगत्या विद्याधिगमस्थानतया प्रवर्धमानानाम्, विनैवाऽऽङ्गलदेशीयानां साहायकमाङ्गलशिक्षावितरणनिरतानाम्, शिक्षार्थं द्वारीकृतां भाषां स्वमातृभाषितमिवोदीरयितुं समर्थानाम् अध्यापकानां जातुचिदपि संस्पर्शमलभमानैश्छात्रैराकीर्णानां महाविद्यालयानां संख्यायाम्। सत्यं द्व्यधिकोनविंशतिशततमखृष्टाब्दस्य राजनिर्वाचितायाः सभायाः प्रयत्नेन साधिता रीतेरस्याः केचनोत्कर्षाः, परं सापि राजनिर्वाचितसभा द्व्यशीत्यधिकाष्टादशशततमखृष्टाब्दस्य राजनिर्वाचिता सभेव निष्प्रभावैव जाता प्रतीच्यशिक्षाशिक्षितानां केवलसाहित्यशिक्षामार्गावलम्बने बद्धपरिकराणां छात्राणां प्रवाहम् अन्याभिः प्रणालीभिः प्रवर्तयितुम्।

भारतस्य प्रतीच्य-जगत्याः संस्पर्शलाभस्य परिणतिरूपाया भारतभूमेरेवोद्गतायाः शिक्षापद्धतेरयमेव संक्षिप्त इतिहासः। शतकावसाने च तस्या रीतेः प्रवृद्धताया इदमेव स्वरूपम्। यस्या जातेर्मतिप्रकर्षो भृशं विभिन्नादेवेतिहासात् पारिपार्श्विकावस्थायाश्च जातस्तस्या एव जातेरादर्शेनैव प्रकारतो विभिन्नानां पुरातनतमानां केषाञ्चिदादर्शानां सम्प्रदायानाञ्चोत्तराधिकारिणाम्, बहुसंख्यकानां जनानां संस्कृतिं लक्ष्यीकृत्याविज्ञातचरस्वरूपं किञ्चित् परीक्षणमेवोत्पादितमनया शिक्षाप्रणाल्येत्यविसंवादितोऽयं विषयः। सुकरमेवास्याः शिक्षापद्धतेः सविस्तरं दोषवर्णनम्, यतः स्वयमेवानया

स्वीक्रियते परिस्फुटं स्वकं विगानम्। "वर्णयतैतत्सदृशं किञ्चनापरं परीक्षणं यस्य विषयतां गता यूयमेवे"ति भाषमाणोऽस्या रीतेरुत्पत्तेर्विकाशस्य चेतिहासस्यानभिज्ञः कश्चन वैहासिको मन्यतां नामाऽऽत्मानं दोषैर्मुक्तम्। स्वेषाम् आभ्यन्तरवैक्लव्येषु शनैः शनैर्वैदेशिकैरधिकृतस्य ग्रेट्बृटेन्प्रदेशस्यापि तरुणाः प्राथमिकविद्यालयशिक्षासमापनानन्तरमपि पिपठिषवश्च, तैरेव वैदेशिकैस्तेषामेव भाषाम् अतद्विद्भ्यः सौदासीन्यं शिक्षादाननिरतेभ्य एव जनेभ्योऽध्येतुं प्रसह्य नियोजिताः; ततश्च तैस्तेषां संवर्धने सम्यगपरिचिताः, स्वदेशीयैः शिष्टिसंस्कृतीतिहाससम्प्रदायसाम्प्रदायिकजीवितैश्च सम्पूर्णरूपेणासम्बद्धाश्च विषया वैदेशिकभाषाद्वारेणैव कयाचिदनभ्यस्तया च रीत्या केषुचिदाङ्ग्लभूमिष्वेव संस्थापितेषु वैदेशिकेष्वेव विश्वविद्यालयेषु प्रविश्यैवाऽऽसन् शिक्षितव्याः।

एतद्देशीयैरेव जनैः प्रतीच्यशिक्षायै प्रदर्शितो निर्बन्धातिशय इति यल्लभ्यते समान्दोलनस्योल्लिखितादेव संक्षिप्तेतिवृत्तात्; आधुनिकविज्ञानशास्त्राध्यापने प्रयोजनीयानां शब्दानाम् असद्भावात् प्राकृतभाषासु, आङ्ग्लभाषाया द्वारीकरणं विनोपदेशप्रदानोपायस्य प्रवर्तनयोग्यविकल्पाभावाच्चैवोक्तं भवेदेवंविधानां प्रश्नानामुत्तरम्। अत्रेदमपि परिसंख्यातुं शक्यते यत्र विद्यन्ते नानाभाषाभाषिणो नानाजातीयाश्च जनास्तादृशे कस्मिंश्चिन्महादेशे (युरोपे) परस्परभावविनिमयाय साधारणभाषात्वेन परिगृहीताया आङ्ग्लभाषाया माहात्म्यम्, भारतमहादेशस्य सर्वेष्वेवांशेषु भारतीयैरेव निर्मितासु सभासु सर्वमेव कार्यजातम् आङ्ग्लभाषयैव जायत इत्यनेनैव विषयेण प्रकटीभवति। या खलु सफलता भारतीयाञ्जनान् एकजातीयत्वेन संहृत्य समधिगता, सा त्वाङ्ग्लभाषाया आङ्ग्लभावानाञ्च ऐक्यविधानदक्षतयैव जाता। चरमतश्चापि रतन्त्र्यभावस्योन्नमनेन विशेषेण विशदीक्रियमाणोऽस्य नीतिविषयकोऽप्यादर्शः, आधुनिक-

विज्ञानस्यात्युच्छ्रित्यैवोद्राह्रियमाणान्यस्य पुरुषयत्नसाध्ये ज्ञानराज्ये दुरधिरूढानि साधनानि च प्रतीच्यजगतोऽभिनन्द्याधिगमानि केवलैरुक्तै रेवोपायैर्भारतीयानां जनानां सुखोपसर्प्याणि।

प्रायेणोत्तरमिदं प्रचीयमानायाः शिक्षारीतेर्न्याय्यत्वमेवांशतः प्रतिपादयति। साम्प्रतं यथा सर्वेषामेव भारतीयानां विषयाणाम् एकान्ततः प्रत्याख्यानं जातम् मन्ये प्रतीच्यसम्प्रदायनायकर्षभेण मेकले-महोदयेनापि जातुचित् तन्न चिन्तितम्। सत्यं लक्षीकृतं तेन तथाविधानामेव जनानां शिक्षणम्, ये जन्मतो वर्णतश्च भारतीयाः, रुच्या मतेन नीत्या बुद्ध्या च पुनराङ्गलदेशीयाः, ये च बृटीशानां बृटीश्शासित-बहुकोटिभारतीयप्रजानां च मध्येऽन्योन्यभावविनिमये सहायाः स्युः। एतदपि पुनराशंसितं तेन तथाविधा भारतीया देशस्य प्राकृतभाषाणां संस्काराय प्रतीच्यपारिभाषिकशब्दकोषाद् वैज्ञानिकशब्दान् संगृह्य ताः स्फावयन्तः क्रमेण साधारणजनानां ज्ञानसम्पादनाय विनियोजयिष्यन्तीति। अपि नाम पूर्णा सा प्रत्याशा? किं नु खलु समधिगतवत्यो भारतस्य प्राकृतभाषाः साम्प्रतिकस्य जगतः प्रवर्धमानानां जटिलशिष्टीनां भारोद्वहनयोग्यतायामपेक्षणीयाम् उपचितेः शक्तिम्? अपि नाम भारतं वर्षं स्वमनोभावप्रकाशनस्य प्रधानद्वारतया वैदेशिकीं भाषां स्वीकुर्वदेव कल्पिष्यत आधुनिकजगतीस्थितानां जातीनां स्वस्वास्तित्वसंरक्षणद्वन्द्वे स्वकीयमुचितं स्थानमधिकर्तुम्।

कस्याप्येकस्यैव भाषाविशेषस्य परिग्रहप्रश्नो न चात्र जंगण्यते, यतो भाषा हि नाम परिच्छदविशेषः, येन नरैराच्छाद्यते स्वकीया चिन्ता। भाषा-चिन्तयोरेकस्या उपरि लक्ष्यतेऽपरस्याः प्रतिक्रिया; यथा चिन्ता प्रतिहन्ति भाषां भाषा च चिन्तामिति। प्रतीच्यवस्तुलाभायौत्सुक्यस्य प्रथम एव प्रवाहे तैर्यदाऽवज्ञाय स्वकीयाः प्राकृतभाषाः प्रत्याख्याय च देवभाषां भावप्रकाशनस्य द्वारत्वेन

स्वीकृताङ्गलभाषा तदा तस्मिन् वङ्गीय-नव्यशिक्षितसम्प्रदाये आसन् केचन, ये स्वकीयाद् भारतीयवैशिष्ट्याद् अपि जाता भ्रष्टाः। वस्तुतस्तु भाषानिर्वचनं नाम कस्यचिद्बृहत्तरप्रश्नस्यैव कश्चिदाकार-विशेषः। स हि खलु प्रश्नो जगति स्थितानां जातीनां मध्ये विशिष्टप्रकारतया पर्यवस्थानायास्ति किं भारतस्येच्छा, अथवा तोषमेष्यति भारतं निमज्जय्य स्वकं व्यक्तित्वं प्रतीच्यगोलार्धा-दुद्भिन्नायां पौरुषपरायामेव जात्यामिति।

अमन्दगौरवभागपरः कश्चन विषयः, प्रतिकूलतामेव यः समायात्युत्तरोक्तायाः सम्भावनायाः, सा खलु जानपदेषु परि-लक्षिता मुग्धजनोचितायां परिरक्षणशीलतायां दृढता; समुप-स्थापयति खलु या दारुणं प्रतिष्टम्भं प्रतीच्यसंस्पर्शे। यस्माद् बुद्धिसंस्कृतिविषयकक्षेत्राज्जाता आधुनिकशिक्षाप्राप्ता मध्यम-वित्तास्तस्मादेव क्षेत्रात् समूलमुन्मूल्यैव जातेः साधारणजनान् अपि नेष्यन्ति ते स्वकर्तव्यस्य परिसमाप्तिम्। अथवा प्रतीच्य-नीतिबुद्ध्यात्मकस्य रसस्य सौदार्यप्रक्षेपणेन सजीवाः पूर्वोक्ताः पुरातनवृक्षस्य प्राच्यस्य स्कन्धेनैवाऽऽत्मनः संयोजयेयुः? अस्यैव प्रश्नस्य समालोचनाय मया विनियोक्ष्यन्ते पश्चाल्लिख्यमानानि पत्राणि। यतश्च वङ्गेषु प्रतीच्यशिक्षारीतेः प्रवर्तनं भारतीयप्रकारस्य रूपान्तरसाधने शक्तिमत्तमो विषयस्ततः प्रथमं तावत् प्रतीच्यशिक्षा-शिक्षितानां वर्गेषु यानि तावज्जन्मदवृत्तकाण्ड आत्मसंयोजन-प्रवृत्तेरिङ्गितानि परिलक्ष्यन्ते तेषामेवानुसन्धानम् उपपन्नं भवेत्। अनया चेद्बुद्ध्या परीक्ष्यन्ते विगतशतकस्योपचयास्तदा प्रतीच्य-शिक्षासमान्दोलनस्य स्फीत्या समं परिलक्ष्येत नवीनशिक्षारीत्या संवर्धितेष्वपि केषुचिज्जनेषु स्वमातृभाषाया अभिनवभावप्रकाश-योग्यतापादनाय क्षीणाऽपि स्फुटमनुभवयोग्या काचिच्चेष्टा।

---

# तृतीयोल्लासः

## कस्याश्चिद् भारतीयभाषाया विकाशः

आधुनिकशिक्षारीतेः प्रतिष्ठासमये व्यसननिमग्नैवाऽऽसीद्वङ्ग-भाषेत्यविसंवादितोऽयं विषयः। अभूदूनविंशशतकोपक्रमे साहित्यं पद्यात्मकं न गद्यमयम्, साधारणैरेव सेवितं न पुनः श्रेणीविशेष-वश्यञ्च। मेकले-महोदयानां मन्तव्यपुस्तकस्य समसामयिकस्य "साधारण-शिक्षाविभागस्य" प्राच्य-प्रतीच्य-शिक्षाविषयकविवादेषु सत्यपि मतभेदे, सार्वविषयिक्यै शिक्षायै समीहितानां साहित्य-विज्ञानसम्बद्धानां विषयाणां प्राकृतभाषास्वविद्यमानतायामैकमत्य-मेवादृश्यत। तदा न केवलमासीद्वङ्गभाषा सामयिकप्रयोजनाननुरूपा परं शिक्षितैरपि वङ्गीयैः समवज्ञाता। नवसंस्थापितशिक्षाप्रतिष्ठानेषु वाचनानां कानिचिद्वङ्गभाषाद्वारेणैव स्युरिति 'पडाम्'समाख्यस्य कस्यचिदाङ्गलस्य कश्चनोपक्षेपः "वङ्गभाषया लिखितः कथितो वा विषयस्तद्भाषाघटितत्वदोषादेवावमतः स्याद्" इति कारणं प्रदर्श्य प्रत्याख्यात तदीयसभास्थितैर्भारतीयैरेव सदस्यैरित्यस्त्येवास्मिन् विषये लिखितं प्रमाणम्। संस्कृतम् आरव्यं पारसीकञ्चेति तदानीं शिक्षणीयासु भाषासु संस्कृतेऽधीती विश्रुतविद्यो 'राजा' राम-मोहनराय। लर्ड-आमृहार्ष्ट् महोदयसमीपेऽलेखीत् "एवमेवासुगममिदं संस्कृतं यदस्यार्जनं प्रायेण समग्रमेव जीवितमपेक्षते" इति। अत उच्च-शिक्षाद्वाररूपेणाऽऽङ्गलभाषायाः श्रयणे आसन्नेव तदा प्रबलानि कारणानि।

वस्तुतस्तु तदा केचन कार्यव्यापृताः प्रभावा एवाभवन् प्रयुक्ता महातरङ्गद्वयान्तःस्थितं वङ्गभाषितं समुद्धतुम्। भाषान्तरीकरणाय "बाइबेल" इत्याख्यस्य धर्मग्रन्थस्य, समानयनाय चैतत्साहचर्येणैव भारतभूमौ प्रतीच्यशिक्षायाः फलानाम्, स्वतः प्रणोदिता विलियम्-केरिपुरःसराः श्रीरामपुरस्य धर्मप्रचारका भाषितेऽस्मिन् निपुणतामाप्तुं सोत्साहमचेष्टन्त। पौरशासने नियुक्तानां तत्कार्य एव शिक्षादानायाष्टादशशततमखृष्टाब्दे शासकपक्षादेव "फोर्ट् विलियम् कलेज" इत्याख्यस्य महाविद्यालयस्य प्रतिष्ठापनं कृतं लर्ड्-वेलेस्लि-महोदयेन, यस्य प्राकृतभाषाविभागस्तेनैव केरिमहोदयस्य हस्ते समर्पितः। तत्संसर्गं च प्रापितास्तत्र बहव एव संस्कृतभाषासु निष्णाता विपश्चितः। वङ्गभाषायाम् अपूर्वस्य कस्यचन साङ्कर्यस्याऽऽनयनमेवैतेषाम् उपचयानां तात्कालिकं फलम्। चरमसिद्धिश्च पुनरेतस्या भाषायाः, जगति गमकतमानां भाषाणामादर्शेन कस्याश्चित् सकलभाषासम्पद्ग्रहणे शकटायमानाया भाषाया निर्मितिरिति जे-डि-एण्डारसन्-महोदयेनैव वर्णितम्।

आङ्गलदेशीया उत्साहिनोऽस्या वङ्गभाषायाः कृतेऽमितमेव श्रमं स्वीकृत्य प्रतिष्ठाविशेषमेवास्या जनयामासुः। परं प्रदर्शिता तैः काचित् साहजिकी प्रवृत्तिः स्वमातृभाषाया वाक्यविन्यासप्रकरणस्यैव प्रवर्तनाय वङ्गभाषायामपि। पण्डिता अपि तथैव संस्कृतभाषाया उपचिताङ्ग्या शैल्याऽलङ्कारैश्च मात्रामतिक्रम्यैवेमां भूषयांबभूवुः। "असङ्गतम् [illegible] अपार्थं निरर्थकालीकपाण्डित्याभिमानपूर्णञ्च जातं वङ्गभाषात्मकं गद्यं हस्ताभ्यासम् आसाद्य पण्डितानाम्" इति, "वैदेशिकशैलीप्रवर्तनाच्च शताब्दीपादं वैदेशिकालङ्कारशास्त्रदर्शितैरेवालङ्कारैर्जटिलैः [illegible]श्च सनैराश्यं संश्लिष्टासीदस्माकं भाषे"ति च वङ्गभाषाया गद्यस्य शैली-

माश्रित्याध्यापनावसरे समासतो वर्णितं राय-श्रीदिनेशचन्द्रसेन-बाहादुरेण।

परं काचित् प्रेरणा तदा प्राज्वलयत् कल्पनं शिक्षितसम्प्रदायस्य। शताब्द्या मध्यभागे केचन मार्गदर्शका आधुनिकवङ्ग-साहित्यस्य नवीने क्षेत्रे समवतीर्य भवन्त्वनन्तरभाविनोऽपि विरचनक्षमा इति प्रणिन्युः कानिचित् पुस्तकानि। तेषु च मार्ग-दर्शकेषु डक्टर्-राजेन्द्रलालमित्रस्य, "विद्याकल्पद्रुम" समाख्यस्य कस्यचन महाकोषस्य निर्मातुः के, एम्, वन्द्योपाध्यायस्य, सार्ध-सहस्रतोऽप्यधिकैः पत्रैः परिमितस्य त्रिशताधिकपञ्चसहस्रसंख्यकै-राङ्गलशब्दानां वङ्गभाषागतैस्तुल्यार्थशब्दैरुपेतस्याभिधानविशेषस्य सम्पादयितू रामकमलसेनस्य च नामानि समुन्नतान्येव। पूर्ववद् नासीत् तदानीम् अवज्ञाभाजनं वङ्गभाषा। पञ्चचत्वारिंशदधिकाष्टा-दशशततमखृष्टाब्दे डेभिड्-हेयार-महोदयजीवितसंस्मरणार्थमनुष्ठिते तृतीयवार्षिकाधिवेशने वक्तॄणां कश्चन बाबु-अक्षयकुमारदत्ताभिधो वङ्गभाषयैव व्यतानोदभिभाषणम्, यद्धि तदा तदनुसरणकारिणो बाबु-किशोरिचन्द्रमित्रस्य सादरानुमोदनमेव लेभे। सहजसरसमपि तदभिभाषणं वङ्गभाषाश्रयणादेव समधिकसरसतां प्राप। शिक्षि-तानां स्वदेशीयानां स्वमातृभाषितालपने प्रीतिरप्यभ्युपगता तेनैव। चेक्षीयमाणमिमममन्यत स जनेषु दृश्यमानं संस्कारविशेषम्। "या ह्यस्माकं स्वदेशस्य भाषा, यया च जल्पितमस्माभिर्बाल्ये, यया पुनर्निविडम् अद्यापि सम्बद्धा न आद्या भावाः संसर्गाश्च, तस्या वङ्गभाषाया आवश्यकत्वं गौरवञ्च नूनं नातिचिरादेव सर्वे प्रत्य-भिज्ञास्यन्ति जनाः" इत्यनागतार्थोऽपि निवेदितस्तेनैव।

वङ्गभाषात्मकं वार्तापत्रं तावदपरः कश्चन प्रभावविशेषः। षोडशाधिकाष्टादश-शततमखृष्टाब्दे गङ्गाधरभट्टाचार्याभिधेन केन-चिद् वङ्गीयेन ब्राह्मणेन प्रथमं प्रकाशितं "वेङ्गल् गेजेट्"—समाख्यं

किञ्चनाचिरस्थायि वार्तापत्रम्। अनुसृतञ्च तद् झटित्येव श्रीरामपुरस्य धर्मप्रचारकाणां केनचिद् वार्तापत्रेण। आद्यानां वार्तापत्राणां प्रख्यातं हि प्रभाकराख्यं वार्तापत्रम्, यस्य सम्पादकत्वमभून्न्यस्तं प्रथमम् ईश्वरचन्द्रगुप्ते परिशेषे च परेषु। भाषासंस्कारविषये येषां चेष्टितमनल्पमग्रहीद् भागं तेषां वङ्गीय-कथाकार-शिरोमणि-वङ्किमचन्द्र-चट्टोपाध्यायस्य, वङ्गीयरूपकजन्मद-दीनबन्धु-मित्रस्य, द्वारकानाथाधिकारिणश्च लिखितान्यस्यैव वार्तापत्रस्य पत्रभागगतानि सन्ति तदा जनानां सविधे प्रकाशतां नीतानि। बाहुल्येन संस्कृतभाषासु निपुणस्य पण्डितप्रवरस्य ईश्वरचन्द्रविद्यासागरस्यैव प्रयत्नेनाष्टपञ्चाशदधिकाष्टादशशततमे खृष्टाब्दे वङ्गीयवार्तापत्रसम्पादकत्वेऽभिनवसंस्कारानयनात् प्रसिद्धं विनिर्गतं सोमप्रकाशाभिहितमपरं किञ्चन वार्तापत्रम्। यत्र वैफल्यमनुभूतं फोर्ट विलियम् कलेजस्य पण्डितैस्तत्रैवाऽऽसादितं साफल्यं विद्यासागरेण। वङ्गभाषाया गद्यस्य व्यूत्यां संस्कृतस्य वपनम् अनुत्पाद्य निरर्थकशब्दाडम्बरं तस्य (वङ्गभाषाया गद्यस्य) नवीनस्थितये संस्कृतोचितसम्मानाय चाकल्पिष्ट। न च वङ्गभाषया संस्कृतानुरूपम् आनुकूल्यं सम्मानश्चाऽऽस्ताम् अर्जनीये परम् ओजोऽप्याङ्गलभाषायाः। गुणमिमं भाषायां संक्रमयन्तौ यौ नामास्या भाषायाः कर्तारौ इति कथ्येते तौ तु अक्षयकुमारदत्त-वङ्किमचन्द्रचट्टोपाध्यायौ। प्रथमस्य तु वैज्ञानिकनिबन्धद्वारतापादने चेष्टा द्वितीयस्य च गुणबदूर्जस्वलकथाकाव्यनिर्माणे।

वङ्गीयवार्तापत्राणां सम्पादकताया इतिहासेऽपरमपि सीमाचिह्नं प्रदर्शितं वङ्किमचन्द्रचट्टोपाध्यायेन। द्विसप्तत्यधिकाष्टादशशततमखृष्टाब्दे प्रवर्तितं तेन वङ्गदर्शन-समाख्यं वार्तापत्रम्, पत्रेषु यस्य न केवलं तस्य कथाकाव्यानि, परम् अन्येषामपि विख्यातानां लेखकानां काव्यान्यपि स्थानं लेभिरे। उक्तञ्च तत्सका-

शादेव समशिक्षन्त वङ्गीया जनाः पठितुं वङ्गभाषां चित्तविनोदनाय। तत्र अनन्तरसमये चित्तविनोदनक्षमकाव्यनिर्माणाय येन "नोवेल"—पारितोषिकं प्राप्तं स हि डक्टर-रवीन्द्रनाथ-ठाकुर-महोदय एव प्रमाणम्। तस्य यौवनदशायां चण्डवातेनेव वङ्किमस्य वङ्गदर्शनेन प्रसह्यापहृतानि चेतांसि वङ्गीयानाम् इति तेनैवाभिहिता वयम्। तादृशैश्च लिखितैर्ये भावा गाढं निखातास्तस्य मनसि तेषामपि किञ्चित् सुस्पष्टं वर्णनं तेनैव दत्तम्। "कष्टकरमेवाऽऽसीद् आगामिन्यै संख्यायै अपेक्षणम् ततश्च दुर्विषहणीय एवाभूज्ज्येष्ठानां तत्पाठसमापनकालक्षेपः। वङ्किमस्य कथाकाव्यैरुद्दीपितस्याऽऽग्रहस्य तुलया रामदाससेनस्य ऐतिहासिकप्रबन्धा अपरेषां च विश्रुतानां लेखकानां वैज्ञानिक-निबन्धाश्च द्वितीयमेव भेजिरे स्थानम्। संस्कृता बहुगुणा च वङ्गभाषा साधारणजनानां प्रबोधनाय शकटायिष्यते ज्ञानभारस्येति मेकले-महोदयस्यानागतभाषितं मन्ये तदाऽवितथं जातम्। तथापि बहून्येव वर्षाणि यावद् उच्चशिक्षालयदत्तां शिक्षामभिलष्यद्भिर्भारतीयैर्जानपदैर्बालैः क्षप्यन्ते बह्व्य एव होराः समधिगन्तुं कूट-शैलीमाङ्गलभाषायाः। भावविनिमयस्य सरलेनैव द्वारेण वितीर्णाया विद्यायाः कृते यद्यक्षपयिष्यंस्ते तत्परिमितं कालं तदा सौकर्यमेवाभविष्यत् तेषां विद्याधिगमविषये, यतस्तथाऽनुष्ठिते चिन्तनं न तु कण्ठस्थीकरणम् अपेक्षितं स्यात्।

मेकले-महोदयस्य "मन्तव्यपुस्तकं" समारभ्य सर्वेषामेव राज-पुरुषाणां मतगर्भितं साहित्यं चेत् समालोच्यते तदेदमेव स्फुटी-भविष्यति यत् प्राकृतभाषाणामाधुनिकशिक्षाद्वारताग्रहणयोग्य-तापादनविषय एव लक्ष्ये दृढम् अभिनिविष्टोऽभूच्छासकसम्प्रदाय इति। शासकाधीनायां शिक्षारीतावाङ्गलभाषाया विनियोगा-धिक्यस्य प्राकृतभाषाणाम् उपेक्षणस्य च, प्रतीच्यशिक्षाशिक्षितानां

भारतीयानां विदुषां मध्ये साधारण्येन परिदृश्यमाना तदवाप्ता-वुन्मुखतैव कारणम्, यत ऊनविंशशतके प्रतीच्यद्रव्यग्रहण एव अभिनवौत्सुक्येनोपलक्षितास्ते विद्वांसः स्वेषामेवातीतवृत्ताद् यथा-सम्भवं निःशेषं वा स्वान् विच्छिन्नान् विधातुं प्रवृत्तिविशेषम् अदर्शयन्। अतः समधिकमर्थवती खलु सा परिवृत्तिर्या स्वयमेव साम्प्रतम् अस्मांस्तद्विषयम् एवानुभावयति। विश्वविद्यालयाश्रित-शिक्षामार्गेऽप्याङ्गलभाषाद्वारेणैवोपदेशनमुचितं न वेति प्रश्नविषये प्रगाढमतभेदस्य सत्ताऽस्माभिरुपलभ्यते सप्तदशाधिकोनविंशतिशत-तमखृष्टाब्दस्य कलिकाताविश्वविद्यालयस्य राजनिर्वाचितसभायाः पुरत उपायनीकृतात् पत्रगतादेव प्रमाणात्। सत्यं बहुलांशेनैवा-नुमोदिता वर्तमाना शिक्षारीतिः, परम् अल्पांशस्य मध्येऽप्यासन् "विदेशीयभाषायाः प्रसह्य प्रयोगो जातीयजीवितस्योत्पत्तिनिर्भरस्य शोषणायैव प्रकल्पते नाशयति च जातेरुपक्रमं मौलिकताञ्चेति" मन्यमाना बहवो भारतीयाः।

उच्चशिक्षालयेषु शिक्षणद्वाररूपेणाऽऽङ्गलभाषाव्यवहारस्य न्यूनी-करणं प्रशस्तं राजनिर्वाचितया सभया, परं दुर्निवारस्य साधारण-जनस्य विश्वविद्यालय-शिक्षायाम् आङ्गलभाषायाः प्रधानद्वारत्वेन व्यवहरणस्य मतं निरूप्य मैट्रिकुलेशन्-परीक्षानन्तरगामिष्वेव शिक्षा-मार्गेषु तस्यैव रक्षणं समुपदिष्टम्। सामान्यतश्चेदुच्यते, आसी-देव भारतीयेषु साक्ष्येषु शिक्षणद्वाररूपेण प्राकृतभाषाणां क्रम-प्रवर्धमानव्यवहारस्य, अव ्यपाठ्यद्वितीयभाषारूपेणाऽऽङ्गलभाषाया रक्षणस्य च विषये विभाव्यं किञ्चिद् विशिष्टं मतम्। द्वितीय-स्तरीयविद्यालयेषु वाचनस्य परीक्षणस्य च द्वाररूपेण प्राकृत-भाषाणां प्रवर्तनम् एव यदा द्वाविंशत्यधिकोनविंशतिशततमखृष्टाब्दे विश्वविद्यालयेन सिद्धान्तितं तदा व्यघोषि केनचिद् भारतीयेन वार्ता-पत्रसम्पादकेन प्राप्तम् एव परिवृत्त्याऽनया निर्व्याजं समर्थनं सर्वेषामेव

वङ्गीयानाम्, अस्त्येव च कश्चन शिक्षितोऽस्ति हि नाम प्रबलो वर्गो यस्तु महाविद्यालयेष्वपि एवंविधायाः परिवृत्तेः प्रवर्तनाय स्वागतमेव व्याहरिष्यतीति।

आ प्रवर्तनशताब्दात् प्रतीच्यरीते रङ्गके भारतीयसाधारण-जनस्य कस्मिंश्चिद्भाग-विशेषे अस्या मतपरिवृत्तेः संघटनयैवा-ऽऽशयस्यास्य गुरुता। अंशतः शासकप्रवर्तितत्वादंशतश्च भारतीय-लुप्तवस्तूद्धारे प्रबलतमसाहाय्यकात्, शिक्षासमान्दोलनेन समम् उच्छ्वासस्य प्रचोदनरयविशेषस्य च स्वपक्षीयैरेवानुष्ठितात् संयोजनाच्च समधिकृतमेवानया रीत्याऽवधानस्यैकाधिकारतापाद-नोचितं विशिष्टं स्थानं भारतीये रङ्गे। परम् न तु प्रतीच्यरीति-रविसंवादितमेव सर्वैर्गृहीतेति तु मया प्रागेव संसूचितम्। समैधत सा स्वदेशीया रीतिराधुनिकजगत उत्क्रोशेभ्यः कोला-हलेभ्यश्च संरक्षितेषु केषुचिच्छान्तेषु विजनेषु च स्थानेषु। भूमिभागस्योपरि विपुलं विततमास्ते संस्कृतचतुष्पाठीनां किञ्चन जालकर्म, यासु चतुष्पाठीषु प्राच्यस्य प्राचीनया रीत्याऽधीतेऽ-ध्यापयति च भारतस्य पुरातनीर्विद्याः। भारतस्य चित्तम् अधिक-मेव प्रमाणयति पुरातनीं रीतिम् इत्यर्वाचीनवर्षजातानां शिक्षा-प्रतिष्ठानानाम् आविर्भावादेव ज्ञायते। तानि तावत् प्रतिष्ठानानि समभिनन्दयन्त्यपि प्रतीच्यविद्यां प्राच्यादर्शावाप्तिविषयेऽप्यादर-विशेषमेव दर्शयन्ति। अग्रे तावत् कथयितुमिच्छामि किञ्चन तेषां विषये। प्रथमं तावन्नयामि वाचकमहोदयान् स्वदेशीय-शिक्षायाः प्रसिद्धं केन्द्रं यत्राधुनापि ज्वलति सुप्राचीनतमस्य प्राच्य-भावस्य पवित्रो वह्निः।

---

## चतुर्थोल्लासः

### नवद्वीपस्तत्साहचर्यञ्च

पूते भागीरथीस्रोतसि पोतसहयोगेन प्लवमानैर्विगत-वर्षस्य आगष्टमासस्य कस्मिंश्चिदपराह्णे नद्या दक्षिणतटं निकषा कुत्रापि पातितमस्माभिः पोतबन्धनकीलकम्, शाद्वलस्थल्यामनुविद्धं हीरकखण्डमिव यत्रावतिष्ठते प्राचीनं नवद्वीपाभिधानं नगरम्। स्थानीयं पुरावृत्तं नवद्वीपस्येतिहासस्य बौद्धानां समसामयिकत्वम् एव साधयति ; परं वङ्गानां हिन्दुशास्त्रानुशीलनस्य बृहत्तमकेन्द्रत्वेन आ पञ्चदशशतकादेवास्य ख्यातिर्जाता, यतो वासुदेवसार्वभौम इति कश्चन जनस्तदानीं मिथिलानां पण्डितैः साभ्यसूयं संरक्षितं ज्ञान-प्रदीपं चोरयित्वा कुटिलेन पथा चलन्नवहत् तं नवद्वीपम् ; यत्र च तत्संस्थापितो वह्निरद्याप्युज्ज्वलं जाज्वल्यते तद्देशस्य वेदिकासु।

न हि सुकरमासीत् तत् कर्म। मिथिलाविश्वविद्यालयस्य प्रख्यातो नैयायिकनेतृवर्गः स्वदेशस्य गौरवे शङ्काशीलः सन् नान्वजानात् कस्यापि विद्यार्थिन उपपदपत्रातिरिक्तस्य कस्यचन वस्तुनो वहनम्। जयिना योग्येन चैकान्तिकाध्यवसायेन कण्ठस्थीकृतस्तेन "कुसुमाञ्जलि" पद्यभागेन समं समग्र"स्तत्त्वचिन्तामणिः"। ततो यथासमयं प्राप्य नवद्वीपं हृदि निहितं तद् वस्तुद्वयं पत्रारूढं कृत्वा महतीनां न्यायचतुष्पाठीनां प्रथमामेवात्रातिष्ठिपद् येन प्रतिष्ठाविशेषं लेभे तदानीं तन्नगरम्। नव्यन्याये श्रेष्ठं प्रमाणं रघुनाथशिरोमणिः ; हिन्दु-स्मृतेर्वङ्गीयसम्प्रदायस्य प्रवर्तको रघुनन्दनः ; वङ्गानां प्रथमतन्त्र-

प्रवक्ता आगमवागीशोपनाम-कृष्णानन्दः ; इदानीं वङ्गीय-वैष्णव-मतस्य विश्रुत-प्रकाशकत्वेन वङ्गेषु सर्वत्र सुसम्पूजितश्चैतन्यश्चेति चत्वार आसन् परां प्रतिष्ठामापन्ना जनास्तस्य शिष्येषु।

विदुषामेतेषां चतुर्णां प्रथमश्छात्रव्याजेन प्रविश्य पण्डितस्य पक्षधरमिश्रस्य चतुष्पाठीं विचारे आत्मनः सकाशात्तस्य पराजयं सर्वसमक्षमेव तमभ्युपगमयन्नपाहरन्मिथिलाया गौरवम्। नवद्वीपस्य कृते उपपदप्रदानयोग्यता-परिचायकं लेभे किञ्चन शासनपत्रम्। रघुनाथविजयकालादेव त्र्यधिकपञ्चदशशततमखृष्टाब्दात् प्रवर्तते खलु स विश्वविद्यालयः।

अप्रकाशाभ्यागमत्वेन मदभ्यागमस्य प्रकटं वर्णनं नातिचिरादेव स्फुटमसङ्गतत्वं जगाहे। जनाकीर्णा आसन्नवितता विचित्राश्च मार्गाः ; प्रायेणानुच्छ्रितानामिष्टकालयानां शीर्षेषु च समदृश्यन्त समुज्ज्वलवेशा योषितः। मन्दं मन्दं नगरमार्गेण सञ्चरमाणे-ष्वस्मासु ताः प्रसूनैराचारलाजैश्चास्मानवाकिरन् अभ्यनन्दंश्चाश्रुत-चरैर्हुलहुलीध्वनिभिः। विवृतमुखगह्वरे रसनाया द्रुतं पार्श्वात् पार्श्वान्तरसञ्चालनजनितेन प्रकम्पेन युक्तश्चिरायितो ध्वनिविशेषः "हुलहुली" नाम। सर्वतो निविडं घनीभूता आनीला जना नः स्वागतमुदीरयांबभूवुः। बहूनां तेषां शुभ्रो वेशोऽवधीरितपरिच्छदानां कृष्णकायेन समं वैसादृश्यमेव दधौ। बहुविधा आसंस्तत्राऽऽ-नीला जनाः। तेषामानीलजनानां मध्ये आर्यस्य ताम्रोज्ज्वल-कान्तेः स्वल्पतैवास्माभिरन्वभूयत। एवं क्रमेणैवाऽऽगता वयम् "आङ्गल-संस्कृत-पुस्तकागारस्य" मण्डपम्, यत्र "नगररक्षासमिति" सदस्यैः पण्डितानां प्रतिनिधिभिश्च समनुष्ठितमस्माकं सम्माननम्। अत्राऽऽसीन्नियतमाधुनिकजगतो विरुद्ध एव कश्चन विषयः। शतकानि यावत् प्रणिहितैवाऽऽसीन्नवद्वीपस्य दृष्टिः। अनागत-कालाद्भीतः सञ्जातवेपथुः स तं सम्यक्तयैव व्यजहात्।

"प्रेममन्त्रप्रचारकस्य भगवतो गौराङ्गस्य जन्मभूमिः, विश्वविश्रुतानामध्यापकानामुत्पत्तिस्थानम्, विक्रान्तस्य कस्यचन हिन्दुराजवंशस्य च राजधान्ययं नवद्वीपस्तावदहोवताऽऽसीत् कदाचिद् वङ्गानां संस्कृतशिक्षायाः प्रधानं केन्द्रम्" इति "मृदुलमधुररागस्य सङ्गीतस्य विरामानन्तरमपि यथा तस्य किञ्चिन्मञ्जुलमनुरणनं हृदयेऽवतिष्ठते तथैव कष्टं साम्प्रतं स्मृतिविषयतां गतास्ते नष्टपूर्वगौरवस्यैतद्देशीयवैदुष्यस्य सम्प्रदायाः"—इति च गाढकरुणरसनिस्यन्दिभिरक्षरैरुदीरयांबभूवुर्नगररक्षासमितिसदस्या अभिभाषणप्रसङ्गे। "भूतोपसृष्टो विशालविजनप्रकोष्ठ इवेदं नगरं लोकान्तरगतानाम् एतद्देशप्रसूतानां विदुषां समुज्ज्वलाभिरनन्यथाकरणीयाभिश्च स्मृतिभिरेव साम्प्रतं जुष्टम्" इत्यात्मनिन्दास्वरेण पण्डितैरपि भणितम्। व्यक्तममृद्गात् तत्र नवीनभावः पुरातनभावम्, अप्रतीकारोऽक्षमश्च पुरातनो भावस्तस्मिन् सविषादममर्षमेवापुष्यत्।

नगरोपकण्ठेषु, नगरमध्ये, चतुष्पाठीषु च समवलोकितो मया ईषत् पीडाप्रदो भावः। चतुष्पाठ्यो बह्व्य एव मया परिदृष्टाः, तेषु तेषु च परिदर्शनावसरेषु हस्तेन परामृष्टाः पुरातना हस्तलिखिता ग्रन्थाः—येषामेकः श्रीचैतन्यस्य तातेनैवाऽऽसील्लिखितः; तत्र तत्र श्रुताश्च पण्डितानां संवादाः। सन्ध्याया मन्दालोके "चैतन्यचतुष्पाठ्याम्" अनुभूतं सङ्घविशेषरूपं दृश्यम् अद्यापि खलु स्फुटमेव चकास्ति मम चेतसि। तद्दर्शनादेव च विह्वलकारिणा दुर्निवारेण केनचिद् दृढसंसर्गेण झटित्याकृष्टः परिकीलितश्च ममाभिनिवेशः। अपि नाम मया पूर्वमेवैतत् प्रत्यक्षीकृतम्? [illegible]स्योत्तरलाभाय मृगयमाणस्य मे मनसि सहसैवैतत् समायातम्। मन्नेत्रपथागतस्य विषयस्यानुरूपं किञ्चित् सुलिखितमास्ते वर्णितं "निउ टेष्टामेण्ट" ग्रन्थस्य पत्रेषु। अतो न्यस्यतेऽत्र मयाऽस्य विषयस्य किञ्चिद्वर्णनम्।

आरुह्य किञ्चिन्निरायतं कुटिलञ्च सोपानं प्राप्तोऽस्माभिरुपरितनः प्रकोष्ठः। दीर्घविततते तस्मिन् प्रकोष्ठे कथमपि सज्जीकृतमेकं काष्ठमञ्चं कानिचित् काष्ठासनानि चाऽऽसन्। काष्ठमञ्चस्य पार्श्वे आसीनोऽभूत् कश्चन सुगृहीतनामधेयः पण्डितः। गवाक्षद्वारस्य रञ्जितकाचानामुपर्यालिखितां मूर्तिमिव रम्यमाननमुद्वहन्तं तं वेष्टयित्वा काष्ठमञ्चं परितः शुशुभिरे द्वादशपरिमिताश्छात्राः। जालमार्गनिःसृतत्वात् पवित्रेणाकठोरेण सन्ध्यालोकेनैव द्योतितं गृहस्य मुख्यं समुद्देश्यम्। मञ्चस्यैकस्मिन् प्रान्ते भूमेरुपर्यासीत् कश्चन काष्ठमयो विशालः प्रदीपाधारः। तत्स्थस्य प्रदीपस्य क्षुद्रालोकः प्रकोष्ठं सर्वतः स्थितस्यान्धकारस्य नाशेऽसमर्थ एवाभवत्। फलञ्चैतस्य विस्मयावहमेवाभूत्। तेनाऽऽलोकेन मञ्चस्य तत्प्रान्तेऽवस्थितानां छात्राणां कठिनान्याननानि प्रकाशतां गतानि, शुभ्रः परिच्छदश्च तेषां मलिनाभिः सकवाटाभिर्भित्तिभिस्तुलितो वैसादृश्यमेव भृशं दधे। स्मृतिशास्त्रवचनानां व्याख्यानिरतस्याध्यापकस्य वदने गाढं निखातान्येवाऽऽसंस्तेषां नयनानि। मुहुर्मुहुः स विरराम छात्राश्च तेषु तेषु विरामेषु सदुत्तरलाभाय चक्रिरे प्रश्नान्। पुरातनभारतस्य गुरुशिष्याणां दृश्यमिव किञ्चनाऽऽसीत् तद् दृश्यम्। अथवा तुलयितुं शक्यते तद् दृश्यं "गेलिलि" देशस्य शिक्षकच्छात्राणां दृश्येन। प्रतीच्यशिक्षाशिक्षितेषु विंशशतकीयेषु भारतीयेषु शिक्षकच्छात्रेषु नैतादृशो भावश्चिन्तयितुमप्यलम्।

भगवदुपासनायां चैतन्यप्रवर्तितं प्रेमभावम् अवर्णयित्वा नवद्वीपकथायाः परिसमापनमसम्भवमेव। समनन्तरमेव विवेचनीयस्य विषयस्य यद्यपि नायं नूनमेव प्रासङ्गिको विषयस्तथापि प्राच्यानां प्रकृतेराकारविशेषस्यावधारणेऽस्य साहायकं नैवापलपितुं शक्यते।

जगन्नाथमिश्र-पुरन्दरेण शच्यां जातो विश्वम्भरः स्वपाण्डित्या-

भिमानान्नवद्वीपस्य पण्डितान्तरमिव भक्तिमार्गं दुर्बलताया लक्षण-मित्यवमेने। ईश्वरपुरीसंज्ञकस्य वैष्णवसन्न्यासिनो दर्शनादेव समलक्ष्यत तस्मिन् काचन महती परिवृत्तिः, सञ्जातश्च स तदा प्रभृत्येवोत्कटो भक्तः। नवाधिकपञ्चदशशततमखृष्टाब्दे चतुर्विंश-वर्ष वयसि स कृष्णचैतन्यनाम्ना सन्न्यासदीक्षां भेजे। जीवनवृत्तान्त-निवेदकस्य कृष्णानन्दस्य चैतन्यचरितामृताभिधानाद् ग्रन्थादिदं तु स्फुटं ज्ञायते, यच्चैतन्यस्य मानसिकावस्थायास्तादृशं किञ्चन विचित्रं जातं परिवर्तनं यादृशस्य (मानसिकावस्थापरिवर्तनस्य) निदर्शनानि "टार्सास्" देशस्य "सल्" महोदयस्येतिहासादारभ्य "वेलस" देशस्य पुनरुत्थानसहायकानामितिहासं यावत् पठनेनास्माभिरुपलभ्यन्ते। कृष्णार्चनं तस्याऽऽसीद् धर्म्या काचि-दुन्मत्तता। तेन तत्सहचरेण भक्तेन नित्यानन्देन च परिचालिता यात्रा नृत्यन्त्यो गायन्त्यश्च पथिष्वचलन्। ताभ्य एव यात्राभ्यः समजनि "नामकीर्तनम्", यद्धि वैष्णवधर्मस्य विशिष्टं लिङ्गम्। जागरे स्वप्नसङ्गेन वा तस्याऽऽवेशविशेष एवाभूदपचीयमानाया-मपचित्यां भगवतोऽवतारस्य श्रीकृष्णस्य। कथं स पुरीमन्दिरे जगन्नाथमूर्तिं दृष्ट्वैव निपत्य कुट्टिमतले गाढमूर्छाभिभूतो दिवसस्य नीत्वा पादत्रयं लब्धसंज्ञो हरिर्हरिरित्यक्षराणि तारस्वरेण व्याजहार तत् तु कृष्णानन्देनैव वयमुक्ताः। नूनं नृत्यगीतादिभिरविरतं धर्म्यासून्मादावस्थास्ववस्थानाय ससहचरेण तेनेदमनुष्ठीयते स्मेति तदीयजीवनवृत्तान्तनिवेदकैर्वर्ण्यते। स्वेदलवैः कम्पैरानन्दाश्रुभि-र्निनादैर्निर्घोषैश्चोपलक्षितास्ते सहचरा मुहुर्मुहुः परिस्पृशन्तः प्रभोः पादयुगलमनारतं परिबभ्रमुः। सङ्गीतसमये भावविह्वलस्य तस्य कदाचित् प्रतिहता जाता गतिः कदाचित् पुनः स चकम्पे, कदाचिदजायत तस्य हर्षाश्रुपातः उदीरयामास च कदाचि स्खलितां गिरम् मुहुर्मुहु र्मुमूर्छ चेति। मूर्छया भूमौ पतनसमये तस्य

माता "शची"—"निमाइ-शरीरं मन्ये साम्प्रतं प्राणैर्वियुक्तमिति" करुणं रुरोद।

स्पर्शसञ्चारी किलाऽऽसीत्तस्योत्साहः। सार्वभौमनामानं नैयायिकं विचारयुद्धे पराजित्य तस्य धर्मे परिवृत्तिसाधनमेव पुरीप्राप्तेरनन्तरं तस्य प्रथममवदातं कर्म। निरसन-मिथ्या-हेतुप्रदर्शन-बाधाप्रदानादिभिर्न्यायशास्त्रसम्मतैः [illegible]ः सार्वभौमः स्वमतस्थापनाय समचेष्टत। परं प्रभुः सर्वस्य यथायथमुत्तरं परिकल्प्य स्वमतं स्थापयांचकार; उपदिदेश च तस्मै धर्मार्जन-द्वारतया हरिनामकीर्तनम्। "हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥"

सन्त्यज्य पुरीं दक्षिणां दिशं भ्रमन् स सर्वांस्तद्देशवासिनः स्वधर्मानुगांश्चकार। द्रष्टुं सन्निपतिता जनसङ्घा दृष्ट्वैव तस्या-प्रतिरूपं रूपं भक्तिश्च वैष्णवा बभूवुः। गाढं भावनिमग्नैः समुद्यद्-भुजैस्तैः परिकीर्तितं कृष्णस्य नाम। नैयायिका मीमांसका मायावादिनः सांख्यानुगाः पातञ्जलं स्मृतयः पुराणानि वेदाश्च सदोषाणीति सप्रमाणं प्रत्याख्याय सर्वत्र चाप्रत्याख्येयमिति वैष्णवमतं संस्थापितवांश्चैतन्य इति यत् सोत्साहमुच्यते तदीय-जीवितवृत्तान्तनिवेदकैस्तत्र तु निःसंशयमस्त्येव काचिदतिशयोक्तिः। परं यदि न भवति चैतन्यचरितामृतग्रन्थः केवलं कल्पनाप्रसूत तदा तस्य ग्रन्थस्य पत्रेषु सन्त्येव प्रमाणानि जनेषु परिलक्षितस्य सुस्थितस्य धर्मानुरागसामर्थस्य, अत्यर्थम् उपचितस्य च प्रेम-भावस्य। आधुनिककालोचितालोचितैरपि जनस्तमेव सिद्धान्तं गच्छेत्।

जगन्नाथस्य मन्दिरे चैतन्यानुष्ठितनृत्यस्य निपुणं दृश्यते वर्णनं चैतन्यचरितामृते। कथितञ्च "सदलः स जगन्नाथमन्दिरं प्रविश्य कीर्तनमारेभे। सन्ध्यारत्रिकसमापनान्ते समुपक्रान्तं तेन संकी-

र्तनम्। चतुर्दिक्षु चत्वारि दलान्यगायन् मध्ये च तेषाम् अनृत्य-च्छचीनन्दनश्चैतन्यः। अष्टौ पटहास्त्रिंशज्झल्लकानि च ताडितानि। सर्वैः सानन्दं हरिर्हरिरिति चीत्कृतम्। कीर्तनस्य मङ्गलध्वनि-श्चतुर्दश ब्रह्माण्डानि बिभेद।" नृत्यस्य गीतस्य चापरमपि सूक्ष्माणु-सूक्ष्मवर्णनं दत्तं जीवितवृत्तान्तनिवेदकेन, समापितश्च तेन तद् वर्णनं कीर्त्यमानया वाचा। "नृत्यम् अनुरागञ्च दृष्ट्वा श्रुत्वा च संकीर्तनं पुरीस्थितो जननिवह आनन्दसागरे पुप्लुवे। स्वयं च भूपालः समाकर्ण्य कीर्तनवैभवं सहसा प्रासादालिन्दादवतीर्य सपरिजनस्तद्दर्शनायैव तत्र जगाम" इति।

वर्णितचरं नृत्यं न मयाऽवलोकितं नवद्वीपे पुर्यां वा। चैतन्य-सहचरस्य नित्यानन्दस्य वंश्यास्त्रिपुराणां धर्मजीवितस्य कर्ण-धारत्वं प्राप्य ससम्मानं तत्रैव प्रतिवसन्ति। सुसंस्थिता एव साम्प्रतं वैष्णवमतवादाः परिसरस्थेषु जनेषु; प्रत्यक्षीकृतश्च मया वारद्वयं नाटकीयोत्कर्षो वैष्णवनृत्यस्य "आगरतला"स्थे "उज्जैयन्त" प्रासादे। वृन्दावनगोपसुन्दरीणां मध्ये स्थितं श्रीकृष्णमाश्रित्य प्रयुक्तायाः प्रस्तावनारूपायाः कथाया अवसाने निर्गतासु गोपी-भूमिकाश्रितासु बालासु शुभ्रवसनमात्रपरिहितैः पाटलकार्पा-सोष्णीषैः कण्ठावलम्बि-लघुपुष्पमाल्यविभूषितकृष्णकायैरष्टात्रिंशत्-संख्यकैर्नरैरधिकृतं तत् कुट्टिमतलम्। तेषु विशिष्टा आसन् सपटहा अष्टौ नराः। पटहानाश्च तेषां केचिदनुन्नत-विशालमुखाः केचिच्च साधारण्येन दृश्यमाना दीर्घाकाराः। एतैर्नरैरुपक्रान्तं नृत्यम्।

इतरेषां त्रिंशत्संख्यकानां नर्त्तकानां करतलवादनैः पादाघात-शब्दैश्चानुगम्यमानेन मन्दं मन्दं पटहताडनेन नृत्यं निराकुलं प्राव-र्तत। तालबद्धाः पादक्षेपाः परिवृत्तयश्चाविलम्बं सङ्गीतसहकारितां प्रापुः। क्रमेण चपलतरमभूच्चलनम्, प्रवृद्धिविशेषञ्च गतं सङ्गीतकम्,

चण्डतरे चाभूतां पादाघातः करतलवादनञ्च। एकैकश्च तेषां मण्डल-मध्यदेशं प्राप्य भ्रमिविशेषमुदपादयत्। हेतुभूतया चलनस्य परिवर्ध-मानया शक्त्या क्षिप्रतया च नृत्यस्य भावेन प्रायेणोन्मादावस्थां गते तेष्वेकस्मिन् समदृश्यत तत्र काचन नाटकीया परा काष्ठा। अचिन्त-नीयेन रयेण द्राग् वस्त्रान्तरादमुक्त सुस्ते पित्तलमयानि झल्लकानि। तदा प्रभृत्येव नृत्ये आवेशविशेषः समदृश्यत। यत्राऽऽसीत् पूर्वम् अपेक्षितः शक्तेर्विनियोगस्तत्राजायत काचनोन्मादना। विक्षुब्ध-सागरगर्जितमिव यावन्न प्रतिस्वनविकम्पितमासीद् वातमण्डलं तावत् त्रिंशत्-संख्यकैर्झल्लकयुगलैः शिञ्जितं संघट्टितञ्च। सर्वोत्कर्षेणा-वर्तत तदा धातुसंघट्टजातं किञ्चन कर्कशं शिञ्जितम्। पटह-निनादेनैवोग्रस्य झल्लकशिञ्जितस्य दत्तस्तालः। परलोकगत-मात्मानमुद्दिश्य विलपनं यथाऽवसादागमे क्षीणात् क्षीणतरं भवति तथैव ज्ञानतन्तुच्छेदनोचिते सकलध्वनिग्रसनक्षमे समुत्थिते तस्मिन् प्रचण्डहर्षघोषे अव्यक्तमेवाश्रूयन्त नर्तकानामुत्क्रोशाः। मुहूर्तः स समागतः, यदा शङ्कितमस्माभिः शारीरिकशक्त्या नैतस्मात् कर्कशतरः शब्दः शक्यते समुत्पादयितुमिति; भीषणाऽचिन्तनीया च काचित् परा काष्ठाऽप्यत्रैव समासादनीयेति; केनचिच्चरमस्फुटितमहानिनादेनैव परिसमापनीयोऽयं संरब्ध-कोलाहलविजयश्चेति। सहसैव ब्रह्माण्डस्फोटनदारुणरणत्कारेणेव तस्य विरामो जातः। युगव्यापिशून्यमार्गप्रधावनानन्तरं झटिति विरतं ब्रह्माण्डमिव तन्मण्डपं श्रमशिथिलीभूतज्ञानतन्तवश्च तदा नीरवताविशेषम् एव प्रपेदिरे। आसादितमस्माभिर्मुहूर्तदर्शनं तथाविधस्य कस्यचिद् भावजलाशयस्य यस्त्वप्रकट एव तिष्ठेत् परं नियतं न शुष्येद् विदेशीयशिल्पकौशलस्य बाह्यसौन्दर्यप्रभावेणैव।

---

## पञ्चमोल्लासः

### प्रतीच्यस्य नवीना मदिरा

याः खलु कथाः समाश्रित्य मया पूर्वं लिखितम्, ताश्चेदतीत-पर्यालोचनायैव गृह्यन्ते तदा जनस्य बुद्धिरूपायां तिरस्करिण्याम् आलोकचित्रपातनस्यानुरूपम् एव फलं जायेत। आलोकचित्रं तु प्रत्यक्षीकरणसमये सुव्यक्तं रुचिरम् उद्भासितं तिरस्करिण्यां सुष्ठु संक्रमितश्च जायते। विलयनशीलान्यालोकचित्राणीव ताः कथाः प्रतीच्यशिक्षाशिक्षितानां भारतीयानां वर्त्मनि प्रतिनिवृत्तस्य जनस्य मनसः क्वापि विलीयन्ते। परं विलीयमानाभिरपि ताभिर्न्यस्यत एव किञ्चन चिह्नं जनस्य मनसि। पूर्वं स्वाभाविकतया ससार-तया चानुभूयमानम् अपि प्रतीच्यशिक्षाशिक्षितानां भारतीयानां वर्त्म साम्प्रतं न तथैव गृह्यते। स्वोत्पत्तिभूभागस्य मौलिकं स्वरूपं प्रच्छादयन्त्या मरीचिकायाः स्वरूपमपि कदाचिदनेन स्वीक्रियते। प्रथमावलोकनेनैव या खलु सारवत्ताऽस्यास्माभिरनुभूयते कथं नामैतेन साऽधिगता? तस्य प्रश्नस्योत्तरदानाय विवेचनीयाः खलु त एव दशाविशेषा ये तावदासन् प्रचलिताः प्रतीच्यशिष्टेः स्रोतसि प्रथमं सवेगं प्रवहति भारतमहादेशे।

मोगलसाम्राज्यविध्वंसनाज्जातः कश्चनावसादोत्पादकः कालोऽभूत् तदा भारतीयैर्यापनीयः। अत्यर्थं तनुतां प्रपेदे तदा भारतस्य जातीयजीवितप्रवाहः। आकस्मिकस्य वेगवतो नवीनभावाना-मागमस्य निपुणं गुणदोषान् निरूप्य च ग्रहणोऽननुरूपैवाऽऽसीत्

तद्दीया तात्कालिकी समवस्था। राजा-राममोहनराय-देभ्रोयान्-रामकमलसेन-प्रमुखास्तेष्वासन् केचन गुणिनो जनाः ये तु प्रतीच्य-शिष्टैः साधुतयाऽवगतं सर्वम् एव विषयं स्वीचक्रुः ; निःसंशयममन्यन्त च ये प्राच्यप्रतीच्ययोर्भिन्तासु व्यवहारेषु च परिलक्षितानां प्रशस्त-तराणां विषयाणां संकलनम् एव काङ्क्षणीयं सम्पादनीयञ्चेति। परं कस्याश्चिन्निर्दिष्टाया आङ्गलशिक्षापद्धतेः प्रवर्तनात् पूर्वमेव जातास्ते हि नाम जना इति साकूतोऽयं विषयः। द्विसप्तत्यधिकसप्तदशशततमे खृष्टाब्दे जातो राजा राममोहनरायस्त्रयस्त्रिंशदधिकाष्टादशशततमे खृष्टाब्दे ममार। व्यवहारौपयिकम् अध्ययनमार्गम् अनुगतः "हिन्दु-कलेज" समाख्यो महाविद्यालयो हेतुवादिनामेवाऽऽनुकूल्येन सप्त-दशाधिकाष्टादशशततमे खृष्टाब्दे सत्तां लेभे। पञ्चत्रिंशदधिकाष्टा-दशशततमे खृष्टाब्दे मेकले-महोदयेन लिखितं तस्य प्रसिद्धं मन्तव्य-पुस्तकम्। तदनु हिन्दुत्वरूपपुरातनकाचभाजने प्रतीच्यविद्यारूपाया अभिनवमदिराया दुष्परिणामं जातम् अवपातनम्, प्राविशच्च सा मदिरा वङ्गीयतरुणानां बुद्धावित्यत्र नास्ति सन्देहगन्धोऽपि।

ऊनविंशशतकस्य मध्यभागे प्रावर्तत कश्चन बुद्धिविषयको विप्लवो येन छिन्नबन्धनकील-रज्जुः क्षुद्रपोत इव रयेणापनीताऽभिमुखागता तात्कालिकी भारतीया वंशपरम्परा। प्रतीच्यभावानुसरणमेवाभूत् तदानीं लोकरीतिः। तच्च पुनः प्रतीच्यभावानुसरणं स्वसेवकांस्तेषां स्वदेशस्य शिष्टैरवमाननायैव प्राणोदयत्। तदा सर्वेष्वेव प्रतीच्यवस्तु-षूत्कटप्रशंसापोषणं प्राच्यस्य सर्वेषाम् एव विषयाणां वर्जनेच्छा चेति द्वयं युगपदेव समधिकं बलवज्जातम्। तस्मिन् समये भारतीयैः समवज्ञाता स्वेषां पुरातनी विद्या ; दूरीकृता आत्मीयाः प्राचीना रीतयः सम्प्रदायाश्च, निन्दितश्च मूढविश्वासमूलको जीर्णश्चेति स्वधर्मः। यस्य प्राचीनभित्तिमूलस्योपरि जटिलहिन्दुसमाजरूपं भवनम् अभूद् विनिर्मितं तस्योच्छेदं संसाध्य देवतापतिमाभञ्जनरता

नवीना वंशपरम्परा निःशङ्कोत्पाटितभित्तिमूलस्य तस्य भवनस्य स्थापनयोग्यं नैवाविन्दन्नपरं किञ्चन भित्तिमूलम्। वङ्गीयेतिहासस्यास्मिन् संकटसङ्कुले काले कस्यचिन्महाविद्यालयस्य छात्रेण केनचिद्वङ्गीयेन भद्रमहोदयेनास्या अवस्थाया दत्तं किञ्चन स्पष्टं वर्णनम्। कथितञ्च तेन "कियद्भ्यश्चिद् वर्षेभ्यः पूर्वं याः संस्कृतपारसीकारवीया भाषा ज्ञानसम्पादनस्याद्वितीयकारणत्वेन सम्मानितास्ता अपि तदा तद्विधायाः शिक्षायाः परिणामेनात्यर्थमेवावज्ञाताः। ताश्च भाषा अशिष्टा अनुपकारिण्यो लोकरीतिविरुद्धाश्चेति तदा प्रतिपन्ना जाताः। उत्साहलाभाय तदानीन्तनास्तरुणा अनुत्तममाङ्गलकथारूपं विपुलमाविलं जलराशिं ममन्थुः। साधारण्येनेतिहासो विशेषतश्च भारतीयेतिहासस्तेषामासीदनिर्वचनीयं किञ्चिदाशङ्कास्थानम्। स्वदेशस्यातीतविषयेऽभिनवोपेक्षापोषणात् प्रादुरभूत् कश्चन धर्मविषयेऽप्यविश्वासस्तेन च पुनरुपद्रावकविशेषेणेव चण्डं क्षयं नीता नैतिकगुणा वङ्गीयानां तरुणानाम्। देशस्य धर्मशास्त्राणि विभिन्नहिन्दुसम्प्रदायजातानां महात्मनामाध्यात्मिकबोधस्य लेखप्रमाणानि च तदाऽविश्वास्यान्यजायन्त। उपनिषदो वेदाश्च तदाऽनुद्घाटनीया आसन् ग्रन्थाः। विशिष्टैस्तरुणैरसेवनीयेभ्यो वङ्गभाषात्मकानुवादेभ्य एवाविनश्वरीणां रामायण-महाभारत-भगवद्गीतानां सत्ता तदानीमस्माभिरुपलब्धा। अकिञ्चित्करमिव प्रत्यभात् तदा प्राचीनभारतस्य समग्रं धर्मशास्त्रम्। धर्मविषये नवीनज्ञानलाभायास्मद्देशीयास्तरुणाः संस्कारकाः "पेनि" महोदयस्य "एज्-अफ् रीसन्" समाख्यं पुस्तकम् अधिजगिरे। सुसूक्ष्ममेव केनचिद् वर्णितं तस्य फलम्। "समजनि धर्मे नीतावपि विश्वासोऽनुदिनं मन्दतरः क्षामतोन्मुखश्च। गुणदोषसंपिण्डिताया भृशव्यामिश्रशिष्टैर्लोकाचारानुरूपाया विषयोपसेवाया वोच्छलन् कश्चित् प्रवाहः सर्वेषां स्वसम्मुखीभूतानां पुरातनानां वस्तूनां दूरीकरणाय तर्जयांचक्रे।

प्रतीच्यतरुणानाम् अनादरणीयेष्वप्याचारेष्वादरपोषणाः आवेश-विशेष एवाभूदन्यशिक्षितानां कस्यचिदंशस्य, हिन्दुधर्मस्य सनातन-रीतीनां सस्पर्धमवमाननं च सम्मानविषयतां जगाहे। "शिष्टे-रङ्गानामेकतमं हि मद्यपानम् इति विश्वासः साधारण्येनैव व्यराजत महाविद्यालयच्छात्त्रेषु" इति, "सातिशयमद्यपानजनितेन दारुणे-नाऽऽमयेन चतुरशीत्यधिकाष्टादशशततमे खृष्टीये वर्षे स स्वयमेव समाक्रान्तोऽभूत्" इति च बाबुराजनारायणवसुशब्दितेनोनविंश-शतकस्य केनचित् प्रथितेन सुजनेन स्वरचितात्मजीवितवृत्तान्ते लिखितम्। गोमांसभक्षणं गर्वविषयं मन्यमानास्तात्कालिका-स्तरुणास्तेषां कर्म स्वमनोवृत्तेः प्रमाथकारणमिति तदसहमानान् जनान् लोकप्रत्यक्षमेवावाहसन् इति स्वबाल्येऽनुभूतं वृत्तं कैश्चन वङ्गीयैः सुजनैरहं कथितः। "अपरिमितं मद्यपानम् चिन्तायां रुच्यां चारित्र्ये व्यतिक्रमश्च तदास्तां घोरमुद्रिक्ते। अपत्रपम् अभ्युपगतानि व्यभिचारो धर्मे औदासीन्यम् असन्दिग्धा नास्तिकता च। शिक्षायास्तदानीमपकर्षो जातः। अनर्थकालङ्कारानुशीलनात् क्रीडनकीकरणाच्च साहित्यस्य नादृश्यत तदानीम् अपरः कोऽपि विशेषः शिक्षायाः।"

एवंविधास्ववस्थासु प्रत्यक्षदर्शिभिर्लिखितानि तथाविधान्येव वर्णितान्यसंशयं सन्देहगन्धवर्जितानि। जातीयताभिमानबोधेन नैतिकगुणैश्च क्रमेण द्रुतञ्च रिक्ता अभवन् वङ्गीयास्तरुणाः। तथापि तदा साधारणजनदृष्टिकर्षणोचितस्थानमधिकुर्वन्तोऽपि त एतद्देशस्य जनसंख्यायास्तुच्छमेवांशविशेषमभजन्त इति स्मर-णीयोऽयं विषयः। समुद्रवक्षसि वायुना सञ्चालितं फेनखण्ड-मनुकुर्वतां तेषामधस्ताद् अवर्तत गाढप्रसन्नैः पयोभिर्भारतीय-जीवितजलधिः। प्रथमतस्तावदार्थिकदैन्य-प्रणोदितानां मध्यम-वित्तानां प्रतीच्यशिक्षामात्रसाध्येषु शासकाधीनेष्वपरेष्वपि कर्मसु

नियोगलाभप्रचेष्टा ; द्वितीयतस्तावत् समुच्छ्रित-व्यक्तित्वचारित्र्याणाम्, ससहचरस्य 'राजा' राममोहनरायस्य मार्गमनुसृतवताम्, एशिया-युरोपदेशयोरुत्तमवस्तूनां सयुक्तिकं सङ्कलनं प्रार्थितवताम् प्राच्यादर्शस्य वाह्याकारेऽनुत्पाद्यैव सम्पूर्णां परिवृत्तिं प्रतीच्य-तर्कुजातैस्तन्तुभिरेव भारतीयजीवितरूपां चित्रां यवनिकां निर्मातु-कामानाम्, सूक्ष्मदर्शिनां केषाञ्चिज्जनानामाविर्भावश्च यदि नाभ-विष्यतां नूनं तदा प्रतीच्यतापादनविषये प्रत्यक्षीकृतोन्मादनेव प्रतीच्यतापादनप्रतिकूलप्रतिक्रियाऽप्याकस्मिकतां प्रबलताञ्चाध्य-करिष्यत्। तथाविधेषु केशवचन्द्रसेनस्तावदेको मुख्यो जनः।

अष्टात्रिंशदधिकाष्टादशशततमे खृष्टाब्दे जातः स "हिन्दु कलेज" "मेट्रोपलिटन् स्कुल" समाख्याते शिक्षाप्रतिष्ठानद्वये समाप्य विद्यां प्रतिमासलभ्यपञ्चविंशतिमुद्रावेतनेन "वेङ्क अफ् वेङ्गल्"—नामक-घनागारे लेखककर्म लेभे। तत्र तस्य द्रुतं समुन्नतिर्जाता। यदि स तत्रैवास्थास्यत् तदा नियतमेवाभविष्यत् तस्य समधिकोऽभ्यु-दय इत्यत्र नास्ति संशयलेशोऽपि। तत्कर्मकरणाय स प्राप बहून्येव प्रोत्साहनानि। एतद्विषयकनिदर्शनतया पुरतस्तस्याऽऽसीत् पितामहो विश्रुतो रामकमलसेनः। स हि तावत् प्रतिमासलभ्याष्ट-मुद्रावेतनेन "एशियाटिक् सोसाइटी अफ् वेङ्गल" नामधेये प्रतिष्ठाने तुच्छ-सहकार्यक्षरविन्यासकरूपेण प्रविश्य चारित्र्यबलेन कार्य-शक्त्या च प्रतिमासं द्विसहस्रमुद्रावेतनेन "काउन्सिल्-अफ्-दि-सोसाइटि-एराड्-अफ्-देश्रोयान्-अफ्-दि वेङ्क अफ् वेङ्गल्" सदस्य-पदवीम् अधिजगाम। परम् ऐहिकं साफल्यं केशवचन्द्रसेनं विलो-भयितुं न शशाक। स्वदेशवासिनां सेवया जीवितमतिवाहयितुं स तत्याज तत् कर्म। धर्मप्रचारणेऽत्यर्थमुत्साहवताम् अन्य-तमस्य तस्य तथाविधो वर्तनकालस्तस्मै स्वाभिलषितकर्मणोऽ-परिमितम् एव प्रसरं ददौ।

[illegible]स्वजीवनस्य चरमभागे नैतिकमानसिकदर्शनपाठे तस्याभिनिवेशविशेषोऽदृश्यत। तत्कालोद्धतस्य तथाविधस्य जिज्ञासोस्तुष्टये नैव समर्था जायेरन् प्राचीनाः सम्प्रदायाः सनातनो धर्मश्चेत्यत्र नास्ति नूनं विस्मयावकाशः। तत्समसामयिकीनां जनेषु दृश्यमानानां प्रवृत्तीनां प्रत्याख्यानात्, स्वदेशीयानां धर्म-सम्प्रदायानां शून्यांशस्य सम्पूरणाय कस्यचित्तथ्यस्याऽऽविष्करणात् पूर्वं तस्मिन् कृतार्थताऽदर्शनाच्च प्रकटीभूते तदीयं चारित्र्यबलं विश्वासदार्ढ्यञ्च। आदौ स गौतमबुद्धं स्वदेशीयानां चिरन्तनीं रीतिञ्च समनुसृत्य तापसस्य प्रसंख्यानपरस्य च जीवितं दधार, परं कर्मैवाऽऽसीत् तस्य जीवितस्य मुख्यं लक्ष्यम् अतो नातिचिरात् स कर्मपरो बभूव। कथं सप्तपञ्चाशदधिकाष्टादशशततमे खृष्टाब्दे सर्वनिगरणोचितान् संसृतिविषयकान् प्रश्नान् पर्यालोचयितुं संस्थापितस्तेन कश्चिद् धर्म्यः समाजः; कथं वा देवेन्द्रनाथठाकुरसंसर्गं समासाद्य स ब्राह्मसमाजेन संपृक्तोऽभूत्; कथं वा समाजसंस्कारोद्यमः प्रतिमाभङ्गकोचितप्रवृत्तयश्च ब्राह्मसमाजस्यापि नवीनविद्वेषिभावेभ्यस्तं दूरं नीत्वा स्वसाहाय्यकेनैव तस्य विश्लेषमुत्पादितवन्तः; चरमतश्च कथं पुनर्बहुभिरेवाऽऽत्मसहचरैरपि परित्यक्तः स "नवविधान" समाजसंस्थापनरूपं निजजीवितस्यावदाततमं कर्म चकार—इत्यादिरूपाणि तस्य कर्मोद्युक्तधर्मप्रचारकचरित्रस्य यथार्थवृत्तानि मदुद्देश्येनानपेक्षणीयानि।

ऐतिह[illegible]कुलान्येतानि वर्णानि सुपरिचितान्येव विद्यार्थिनाम्। तदैतिहासिकवृत्तस्य वर्णनं लेख्यप्रमाणपरिरक्षणार्थं न मयाऽत्रानुष्ठीयते। स्वकं कर्मेश्वरप्रेरितं मन्यमानः (स्वकर्मणि विश्वासातिरेकादित्यर्थः) सोऽपरेषां मतेष्वौदासीन्यमेवादर्शयद् इत्यस्य विषयस्य उत्कटप्रमाणदानाय कृतो मयाऽत्र तेषां समुल्लेखः। वस्तुतस्तु स चासीत् तथाविधः कश्चन विश्वासधनो जनः, यस्य

"धर्मप्रचारार्थं सृष्टोऽहम्" इति सहजोपलब्धबुद्ध्या प्रभावितोऽभूत् समग्रो वर्तनकालः। यश्च स्पर्शसञ्चारिणोद्यमेन उद्देश्यस्य स्थिरैकान्तिकतया च प्रतिबोधितस्यात्युच्छ्रितस्य स्वकीयव्यक्तित्वस्याप्रतिहतं प्रभावं स्वसहचरेषु वितेने।

अग्राम्यैर्मनोहरैः सालङ्कारैर्वाक्यैः काव्यरसिकानामानन्दजननक्षमो नासीत् स निपुणो वाग्मी। तथापि जगतः कृते भगवत्प्रेरितवार्ताविशेषेणेव प्रोत्साहितः, द्रष्टुमशक्यया कयाचिच्छक्त्या तत्प्रचारणे बलान्नियोजितश्च स वीर्यवद्वाग्विभवप्रवाहरूपेण विनिर्गताभिर्हृदयपयोधेरगाधतायाः स्वत एव सकल्लोलं समुद्गताभिस्तदीयां भविष्यद्दर्शितां न पुनर्निपुणवाग्मितां प्रतिपादयन्तीभिर्वाक्शक्तिभिरसंशयमेवाभूत् क्षमो विशालेऽपि जनगणे प्रभुत्वमाधिपत्यं च स्थापयितुम्। ज्ञानोत्कर्षमेवाऽऽश्रित्य चेद्विचार्यते तदा नैव शक्यतेऽस्मिञ् श्रेष्ठत्वमारोपयितुम्। केवलयुक्तिमूलकदर्शनशास्त्रनिर्माणे प्रीतिमतां बुद्धेः प्रकाराद् विभिन्नैवाऽऽसीत्तस्य बुद्धिः। कस्मिंश्चिदुत्साहपूर्णे भावराज्ये न तु तर्कस्य कर्कशाधिकारेऽतिवाहितमभूत् तस्य प्रातिभं जीवितम्। निर्माणशक्तेरभाव एव तस्मिन्नासीदिति मनसि निधायैव स खलु विचारणीयः। तत्कार्याणां प्रथमदर्शनादेव तानि क्षणिकेन मनोलौल्येन प्रणोदितानीति परिकल्पनस्याऽऽसीदेव कश्चिद् हेतुः। तस्य स्वभावस्य विशिष्टलिङ्गानां विशेषत ईशप्रार्थनपरिचालितस्य तस्य समग्रजीवितस्य ईशप्रार्थनसमधिगतानां प्रत्यादेशवचनानां च विषये क्रियेत चेच्चिन्तनं तदा प्रथमं तत्सम्बन्धे आवेगरूपेण प्रतीयमानो विषयो वस्तुत ईशप्रेरणत्वेनैव परिणमेत्।

तादृशं चेतः सदैव नवीनचिन्तासंस्काराणां विषये भवति जागरूकम्। केशवचन्द्रसेनस्यापि मनस्तत्काले सर्वतो भारतस्योपर्यवपातितान् वीर्यवच्चिन्ताप्रवाहान् प्रतनु यन्त्रमिवासंशयं प्रति-

जघान। द्रुतसमीकरणस्याऽऽनुषङ्गिकशक्त्या समं तादृशी मनसः सचेतनतैव तदीयधर्म्यविश्वासानां यथार्थभावग्रहणस्य दुःसाध्यतायाम् योज्या। तस्येश्वरवादित्वे नास्ति कापि विप्रतिपत्तिः; उपासनायाः प्रभावेऽपि तदीयो गाढविश्वासो मया प्रागेव वर्णितः। तस्य जीवितस्य प्रथमा शिक्षैवाऽऽसीदुपासनेति तेनैव लिखितं किञ्चिदास्ते प्रमाणम्। सोत्साहं निरवसानं च स उपासनमकरोत्। "वेदाद्वा वेदान्ताद्वा कोराणाद्वा पुराणाद्वा ईशोपासनमेव महत्तरम्" इति बुद्धिरादितः प्रभृत्येवाऽऽसीत्तस्यावलम्बः। तस्याऽऽस्तिकताऽभूत् सविशेषं धर्मानुशासनवर्जिता। सर्वे धर्मास्तेनाभिनन्दिता इत्यत्र विद्यत एव याथार्थ्यम्। तेनात्यर्थं सम्मानितस्य रामकृष्णपरमहंसस्य प्रभावादेव मन्ये परस्तात् सकलदर्शनमतसारसङ्कलननिर्मितमतस्य विशिष्टा पुष्टिर्जाता। सर्वेषु धर्मेषु तथ्यमस्तीत्यतः सर्वे "धर्माः सत्याः" इति तेन प्रतिपादितम्।

समाजसंस्काराय यो हि नामोत्साहस्तेन समाश्लिष्टस्तेनैव समुपलभ्यन्ते नवीनभावेषु तस्य सचेतनताया श्चिह्नानि। मनोऽभिनिवेशेनाधीत्य डीन्-ष्टेन्लि-स्वार्टसन्-लिडन्-सीलि-प्रमुखाणां ग्रन्थान् निपीतास्तेन कौतूहलात् सर्व एव खृष्टधर्मोपदेशाः। सांसारिकनीतेरुपरि गुरुत्वविशेषं संस्थापयन्तस्ते खृष्टीया धर्मोपदेशास्तमति हि नामाऽऽचकृषुः। देवेन्द्रनाथठाकुरपरिचालितब्राह्मसमाजस्य पुरातनभावसंरक्षणशीलतया सममुत्कटमेव वैसादृश्यं दधौ तस्य नवीनभावग्रहणेष्वैकान्तिकाग्रहविशेषः। समाजसंस्कारायाभिनवलोलुपतया आध्यात्मिकधर्मभावः परित्यक्तो भवेदिति गभीरा भीतिरसन्दिग्धमेवावर्तत देवेन्द्रनाथठाकुरस्य मनसीति मे प्रतिभाति। केशवचन्द्रसेनानुष्ठित-समाजसंस्कारस्य स्थिरप्रवृद्ध्या समं ब्राह्मसमाजस्य विभिन्नवर्गाणां मध्ये समलक्ष्यतापरिहार्यः कोऽपि विच्छेदः। सत्यधिकाष्टादशशततमखृष्टीये वर्षे इंलाड-

देशगमनात्, डीन्-ष्टेन्लि-मोक्षमूलार-ग्लाड्ष्टोन्-जन् ष्टुयार्ट्-मिल्-प्रमुखाणां तात्कालिक-मनीषिणां दर्शनलाभात्, इंलण्डीयानां नारीणां साधारणहितेष्वपि विशिष्टभागग्रहणदर्शनाच्च दृढीकृतोऽभूत् तस्य धर्मयुद्धोपक्रमसङ्कल्पः। प्रत्यावृत्य भारतं बहुशताब्दीर्यावत् सम्प्रदायक्रमेणाऽऽगतेभ्यः सामाजिक-नियमपाशेभ्यः स्वदेशीयान् मोक्तुं नवीभूतेनोद्यमेन यत् स समचेष्टत तद् युक्तमेवाऽऽसीत् तस्य चारित्र्यस्य स्वभावस्य च।

ब्राह्मविवाहस्य विध्य[illegible]गतत्वसाधनाय तस्यैवाऽऽग्रहेण द्विसप्तत्यधिकाष्टादशशततमखृष्टाब्दे व्यवस्थापिताद्विधेः सुस्पष्टतरं नास्ति लेखप्रमाणान्तरं तदीयस्य लक्ष्यस्य कार्यजातस्य वा। विधिना तेनोत्सादितो बाल्यविवाहो दण्डीकृतो बहुविवाहः सम[illegible]मादितश्च विधवाविवाह आन्तर्जातिक-विवाहश्च। सा[illegible]सिकमेवाऽऽसीत् तत् कर्म, प्रवर्तनमपि तस्यापैक्षतासाधारण-सा[illegible]सिकमेव कञ्चन पुरुषम्। अतः खलूक्तं पण्डितशिवनाथशास्त्रिणा—"इदं हि तावदेकं मुख्यं कारणं येन स्वदेशीयानां शास्त्रमार्गावल[illegible]म्बिनां सहानुभूतिं नैवाधिजग्मुस्तादृशाः समाजसंस्कर्तार इति।" ईशेच्छाप्रेरितेनैवानुष्ठीयते मया कार्यजातमित्यत्र जातनिश्चयः स कदाचिदपि न दोलायमानमतिर्बभूव स्वकेषु कर्मसु।

स्वसमसामयिकेषु शिक्षितवर्गेषु परिदृश्यमानस्य लाम्पट्यस्याधर्मस्य च प्रवाहस्य प्रतिसंरोधने, वर्तनरीतिरभिनवा शिक्षा प्राकृतिकविज्ञानस्य समासादनानि प्रतीच्यस्य स्वाधीनचिन्ता चेत्येवंरूपस्य तस्यैव च प्रवाहस्योत्पत्तिस्थानस्य प्रतिकूलतया जायमानाया अपरिहार्यप्रतिक्रियायाः संस्तम्भने च कीदृशं प्रभावं विस्तारयामा[illegible] केशवचन्द्रसेनस्त[illegible] संक्षिप्तादसमाप्तादप्यस्मा[illegible] तदीयस्य जीवितस्य चारित्र्यस्य च वर्णनात् सम्यगेव ज्ञातुं शक्यते। जा[illegible] लेकं स्वधर्मं शिष्टिं चासन्त्यज्यैव कथम् एशिया-[illegible]रोपदेशयोर्मध्ये स्थितस्य

व्यवधानस्यापनयनं सम्भवति तत् तु तेनैवोपदेशैरुदाहरणैश्च सुव्यक्तं प्रकटीकृतम्। प्रतीच्यस्याऽऽदर्शेषु व्यवहारेषु च शोभनतया प्रतीयमानानां विषयाणां ग्रहणे क्षमोऽपि स सदैव भारतीयं वैशिष्ट्यमेव शिश्रिये। इतरेषामनुकरणे नैव समलक्ष्यत तस्मिन् महाभागे पाटवविशेषः। न वा समपुष्यत् स महाशयस्तथाविधं कञ्चन स्वजात्यवगाहिनं मृषाभिमानबोधं येनान्धीक्रियते सर्वोऽपरेषां धर्मादिविषये। विहायान्योन्यविरोधकतां कथं प्राच्य-प्रतीच्ययोः परस्परपरिपूरकत्वं सम्भवेत् तदेव तेन प्रतिपादितम्। पुरातनस्य मान्यस्य च सामाजिकसम्प्रदायस्य निगडं नियन्त्रणं वा येषां न तस्यैवाभूद् वर्जनीयं येषां च तदीयोपदेशस्य भावो न पुनरक्षरार्थ एव ग्रहणीयस्तेषां सविधे तस्य जीवितमुत्तेजकत्वमेव दधौ।

केशवचन्द्रसेनसन्निभानां पुरुषाणां जीवितप्रभावेणैव बाहुल्येन साधितं घटिकायन्त्रगत-लोलदण्डविषयक-भीषणान्दोलनस्यैवास्य प्रतीच्यतापादनसमान्दोलनरयस्य परिमितत्वम्। विक्षुब्धभारतीय-जीवितप्रवाहस्योपरि तेनैव चोत्पादिता विभिन्नशिष्ट्योरुत्तमानां भावानां सङ्कलनस्य सम्भावना। "अपि नाम सा सम्भावना इष्टसिद्धये योग्या स्याद्" इत्येव खल्वाधुनिककालस्य व्यापकः प्रश्नः। इदानीन्तने काले प्रवर्धमानायाः प्रतीच्यप्रतिकूलप्रतिक्रियायाश्चरमपरिणतेः स्वरूपमेवावलम्बतेऽत्यर्थमेतस्य प्रश्नस्योत्तरम्। अनेनैव कारणेनाऽऽधुनिकावस्थायां प्रवृत्तिषु च तथाविधः समादरो गौरवञ्च न्यस्येते।

ऊनविंशशतकस्य मध्यो भागः समाजस्यावनतेर्गुणागुणज्ञानां स्थित्यैवाऽऽसीद् विशेषितः। तात्कालिक्याः शिथिलतायाश्चरित्रहीनतायाश्च विवरणप्रदानार्थं वङ्किमचन्द्रचट्टोपाध्यायस्य समसामयिकेन सहचरेण च दीनबन्धुमित्रेण लिखिता "सधवारएकादशी" समाख्याता काचिद् विश्रुता कथा। तथैव स्फुटमासीत्

कथावस्तुनो याथार्थ्यं यत् तदानीन्तनैः कलिकातास्थितैः पुस्तकानां गुणदोषविचारणाधिकारिभिः सुनीतिपरिपन्थित्वात् स्वल्पकालं प्रतिषिद्धमस्याः पुनर्मुद्रणम् ।

परं कालाचारस्य विरुद्धवाद एव तावन्न पुनरुत्थानविषये सहायकः। परिस्फुटतरस्तावदनन्तरोदीरितो भावः प्रतिक्रियाया अन्यास्ववस्थासु विशेषतः शिक्षाविषये। प्रतीच्यशिक्षापद्धत्याः प्रतिकूलप्रतिक्रियायां विद्यमानानि सावधानं विवेचनीयानि बहून्येव तावच्चिह्नानि मया वर्णितानि ।

---

## षष्ठोल्लासः

### शृङ्गाटकेषु

चतुर्थोल्लासे वर्णितं मया नवद्वीपस्थितानां संस्कृतचतुष्पाठीनां परिदर्शनम्, प्रदर्शिता च तत्राऽऽङ्गलभाषाशिक्षायै संस्थापितेषूच्चविद्यालयेषु महाविद्यालयेषु च द्रुतमुपचीयमानेष्वपि स्वदेशीया शिक्षारीतिः सम्यग् विनष्टेति बुद्धिर्भ्रान्तिमूलेति। स्वदेशीयरीत्या विद्यादानस्य प्रतिष्ठानानां संख्यानं सूक्ष्मतो निर्णेतुं नैव शक्यते, परं प्रभूतत्वं तस्यासन्दिग्धमेव। वङ्गेष्वेव विद्यन्ते पञ्चशताधिकपरिमिताश्चतुष्पाठ्यः। भारतीयशिक्षासम्बन्धिविषयस्य पञ्चवर्षीय-पुनरीक्षणग्रन्थस्य सप्तमसंख्यायां (१९१२—१७) प्रायेण द्वात्रिंशत्सहस्रसंख्यकानां विद्यालयानां परिस्थितिः प्रकटिता। चतुष्पाठी-पाठशाला-माद्रासा-मक्ताव-प्रभृतय एव तेषां विद्यालयानां बहुलो भागः। तथाप्यप्राप्तगणनाविषयाणामेतदतिरिक्तानाम् इतरेषामपि बहूनां विद्यालयानां स्थितौ नास्ति लेशतोऽपि सन्देहः।

सत्यपि प्रतीच्यरीत्या चिकित्साशास्त्रशिक्षायाः सुबहुलप्रसारे स्वदेशीयरीत्या वैद्यकशास्त्राभ्यासस्य विस्तारोऽपि विस्मयमेवाऽऽवहति। अत्रापि वैद्यकशास्त्रानुशीलनरतानां संख्याधिक्यं नैव ज्ञातुं शक्यते, परं सावधानानुसन्धानेन ज्ञातमस्माभिर्यद्वङ्गीयानां चिकित्सकानामनल्प एवांशोऽधिक्रियते वैद्यैः हाकिमैश्च इत्यसन्दिग्धोऽयं विषयः। ज्ञायते पुनस्तस्मादेवानुसन्धानाद् ग्राम्या वैद्या एव जनसंख्यानस्य बहुलांशस्य चिकित्सासहायकाः; शास्त्र-

मार्गावलम्बिनो वैद्या हाकिमाश्च सम्यग् आद्रियन्ते सम्भ्रान्तश्रे[illegible]-गतैरपि जनैः ; अन्तरान्तरा च प्रतीच्यरीत्याअयिभ्यश्चिकि[illegible]सके-भ्योऽपि समादराधिक्यमेव ते लभन्ते वैद्या हाकिमाश्चेत्यत्र नास्ति संशयावकाशश्चेति ।

भारतीयानामार्याणां पुरातनशिक्षापद्धतेर्विशिष्टानां लिङ्गानां किञ्चिन्मुख्यं लिङ्गमद्यापि दृश्यते वैद्यानामभ्या[illegible]नरीत्याम्। सर्वै-रेव विश्रुतैर्वैद्यैर्वासस्थानाहारदानाभ्यां परि[illegible]ल्यन्ते केचन विद्यार्थिनः। 'आयुर्वेदशिक्षायाः समुन्नतये को नाम मार्गः श्रयणीयः' [illegible]ासकेनेत्थमभियुक्तैर्वैद्यानां प्रतिनिधिभिर्द्वाभ्यामेव कारणाभ्यां प्रतीच्यानुरूपाणां विद्यालयानां संस्थापनं सप्रार्थनं निवा[illegible]रितः। तत्र प्रथमं तावत् एवंविधविद्यालयानां संस्थापनाद् वतन[illegible]निमात्र-लभ्या भवेद् वैद्यकविद्या इति हि नाम भावः शास्त्रमार्गावल[illegible] वैद्यानां सर्वथैवात्यर्थं प्रतिकूल एव। द्वितीयतस्ताव[illegible] नूनमेवं-प्रकाराणां विद्यालयानां स्था[illegible]नेन वैद्यकशास्त्रैः प्रतीच्या[illegible]न-स्यांशविशेषस्य संयोजनं जायेत। तस्य पुनः संयोजनस्य फलरूप[illegible] जनिष्यन्ते जनानामविश्वासभाजनानि सङ्करजाताः केचनार्धवैद्या अर्धप्रतीच्यचिकि[illegible]साशास्त्रश्चाधिकि[illegible]सकाः। लिखितञ्च पुनः केनचिद् विश्रुतेन वैद्येन,—"नहि देशेऽस्मिन् समपेक्षणीया वैद्य-प्रतीच्यचिकित्साशास्त्रयोर्मिश्रजाः केचन चिकित्सकाः। न च प्रतीच्यचिकित्साशास्त्रं स्वकीयज्ञानस्य परिपूर्तये जा[illegible]चिद् गृह्णाति कश्चिदेवांशमा[illegible]र्वेदस्य। कथं तर्ह्यायुर्वेदो नाम गृह्णीयात् स्व[illegible]र्णतायै प्रतीच्यचिकि[illegible]साशास्त्रस्यांशविशेष[illegible] ?"

स्वदेशीयप्रतिष्ठानेष्वाग्र[illegible]विशेषपोषणात् सर्वथैव प्रत[illegible]प्रकारे प्रतिष्ठाने संवर्धितानामपि जनानां [illegible] विरागप्रकटनं विशेषेण साभिप्रायम्। वङ्गविभागसमये विदेशीयैरनियन्त्रितानां सर्वतो-भावेन भारतीयोपायेन परिचालितानां केषाञ्चिद् जातीय[illegible]-

लयानां संस्थापनमेवाभूद् वङ्गीयराजनीतिकान्तःक्षोभस्य विशिष्टं लिङ्गम्। सत्यमेवेदं यच्छासकाधीनेभ्यः शासकसाहाय्यसंवर्धितेभ्यश्च विद्यालयेभ्यो विताडितानां शिक्षकाणां नियोजनार्थं, बृटीशद्वेषादेव न पुनः प्रतीच्यशिक्षापद्धतौ यथार्थविरोधपोषणात् तथाविधेषु विद्यालयेषु पठितुमनभिलाषिणां विद्यार्थिनाञ्च कृते, शासकप्रतिकूलतयोत्थापितानामेव जनानामिच्छासम्भूतान्येव तानि प्रतिष्ठानानि। परमुक्तरोक्तस्य भावस्याभावपरिकल्पनं साहसमेव स्यात्। मान्द्राजप्रदेशे जातीयशिक्षायाः समुन्नत्यै संस्थापितया सभया, महासमरावसाने राजनीतिकचाञ्चल्यचण्डवातजातैर्विवादैश्च तत् सविशेषं प्रकटीकृतम्।

बहुष्वेव प्रदेशेषु स्फुटमन्वभूयत तदा नवीनशिक्षापद्धतौ विरागः। शिक्षापद्धतौ परिदृश्यमानस्य केवलसाहित्यशिक्षापक्षपातस्य हेतुभूतैरेव जनैस्तदानीमाजीवानुकूलशिक्षामार्गप्रवर्तनाय चेष्टितम्। वस्तुतस्तु मध्यमवित्तानां जनानामर्थाभावेनैव न पुनः प्रतीच्यशिक्षारीतिविद्वेषेण प्रणोदिता सा प्रार्थना। बि-ए-परीक्षोत्तीर्णानाम् श्राइ-ए-परीक्षोत्तीर्णानां च छात्राणां प्राचुर्यादेव जातमाजीवानुकूलशिक्षामार्गप्रवर्तनसमान्दोलनम्। चिकित्साशास्त्रशिक्षाया विपुलो जातो विस्तारस्तदा वङ्गेषु। सत्यमावश्यकत्वं न पुनरनुरागोऽस्य समान्दोलनस्य हेतुः। भारतीय-परिचालितम् अमृतवाजारपत्रिकासमाख्यं कलिकातायाः किञ्चन विश्रुतं वार्तापत्रम् एकविंशत्यधिकोनविंशतिशततमे खृष्टाब्दे परिदेवनाक्षरैरुद्घोषितं कथमार्थिकेन दैन्येन प्रभाविताऽभूच्छिक्षेति। भारतीयाभिभावकानां बहुलांशेनैव बालकानां प्रतीच्यशिक्षायै यथार्थं कृच्छ्रमेव स्वीक्रियते। बालानां केवलसाहित्यशिक्षायै व्ययितस्य धनस्यानुरूपं धनं नैव ते पारयन्त्यर्जितुमिति विषयोत्थेनैव नैराश्येन केवलसाहित्यशिक्षाया लघूकरणप्रवृत्तिः साम्प्रतं दरीदृश्यते। अस्य नैराश्यस्य सुस्पष्टफल-

रूपेण दृश्यन्ते चिकित्साशास्त्रस्य वास्तुविद्याया अपरेषामपि शिल्पशास्त्राणां शिक्षाप्रतिष्ठानेषु सरभसं प्रविष्टाश्छात्राः ।

परं वर्जयित्वार्थिकं विषयं जातीयतावादिनामुत्कटकोटिगतैर्जनैः प्रतीच्यशिक्षेयमित्येव सा निन्दिता । सप्ताधिकोनविंशतिशततमखृष्टाब्दस्य विद्यालय-महाविद्यालय-विषयकाभियोगे दृश्यमानः स भावो विद्यालयान् महाविद्यालयांश्च दलशस्त्यक्तुं छात्रानुत्साहयता एकविंशत्यधिकोनविंशतिशततमवर्षीयेण द्वाविंशत्यधिकोनविंशतिशततमवर्षीयेण च गान्धीमहोदयपरिचालितेन शासकप्रतिकूलसमारम्भेणोच्चण्डमेव प्रकटीकृतः । राजनीतिकसंग्रामस्य तीव्रतया तदानीं राजनीतिकपक्षपातानुरागेण विवेकोऽपि निराकृतः । सर्वसमक्षं संघुषितश्चैतज्जितेन्द्रलालवन्द्योपाध्यायेन "भवतु नामाऽऽङ्गलदेशीयानां शिक्षा शोभना ; भवतु नाम तेषां शिष्टिः सुस्थिता ; भवन्तु नाम तेषां दर्शनशास्त्राणि दोषैरस्पृष्टानि ; भवन्तु नाम तेषां शासनम्, विधिः सर्वाण्येव च वस्तूनि गुणवन्ति ; परं तेषां प्रत्येकमेव द्रढयति नो दासत्व-शृङ्खलम् । अतः खल्वाङ्गलदेशीयान् विनिवेदयामि भद्राणि वस्तावदिमानि वस्तूनि दु[illegible]न्तु भवन्तः ; सकृपमपवाहयन्त्विमानि तूर्णं पारेसमुद्रं यौष्माकीणायां सुदूरस्थितायां प्रतीच्यवसतौ यतोऽस्माभिर्वाऽस्मदीयैर्वंश्यैर्वा किमप्येभिर्नो करणीयम् अपेक्षते, येन च पुनर्भद्रैरभद्रैर्वा युष्मदीयैर्वस्तुभिः संस्पर्शमेत्य नो गर्हणीया भवेम ।"

प्रबलराजनीतिकविक्षोभप्रभावादल्पसंख्या एव जना जितेन्द्रलालवन्द्योपाध्यायस्य सरणिमनुगताः । सागरवक्षसि चण्डवातसञ्जातेषु बुद्बुदफेनादिकेष्विव राजनीतिकवात्योत्पादितेष्वेवंविधेषु भावेष्वनादरपोषणं भ्रममेव नूनं जनयेत् । बृटीश्-संसर्गस्याप्रतिकूलाः सन्ति तावदपरे केचन भारतीयाः सानुरागं दिदृक्षन्ते ये विशिष्टया प्राच्ययैव रीत्या स्वदेशीयानां शिक्षणम् । एकादशाधिकोनविंशति-

शततमखृष्टाब्दे कस्यचन हिन्दुविद्यालयस्य संस्थापनं समर्थयतो मान्यस्य रासविहारिघोषस्य वाग्जालेनैव प्रकटितं तथाविधानां जनानां मतम्। कथितञ्च तेन "जातीयभावसम्प्रदायभूमौ सुबद्ध-मूलः स्यात् सर्वथा शिक्षापादपः। उत्तराधिकारिणो वयं कस्याश्चित् प्रज्ञायाः शिष्टेः। अस्माकं समाजस्य संस्कृतेश्च यैरादर्शैर्विहितं विशिष्टं रूपं तेषामेव क्रमिको यादृच्छिकश्चोपचयः शिक्षायाः स्यान्मुख्यं लक्ष्यम्। अतोऽस्माकं पाठ्यसूचिकायां हिन्दुनीतिरान्वीक्षिकी च प्रथमम् एव स्थानं लभेयाताम्। निदर्शन-वैलक्षण्यप्रदर्शनार्थमेव केवलं क्रोडीकुर्यात् सा प्रतीच्यदर्शनमपि। देशविषयकज्ञाने देशीयसाहित्यदर्शनेतिहासादिषु च विशेषेणैवाभिनिवेशो देयः। आधुनिके काले बहुभिरेव पुष्यते तदेव खलु मतम्। एक-विंशतिशततमे वर्षे मे-मासि मान्द्राजप्रदेशस्य शिक्षासम्मेलनस्य कस्यचिद् वार्षिकेऽधिवेशने सभापतिपदमलंकुर्वाणेन सि-श्रीनि-वास-आयेङ्गार-सि-आइ-इ-महोदयेनाभिभाषणप्रसङ्गेनोक्तम् "अफल-प्रसूः खलु प्रतीच्यशिक्षापद्धतिरिति पुष्यति तावद्विश्वासं शिक्षित-समाजः।" शिक्षापद्धतेरस्याः प्रवर्तनाय परिचालनाय च लब्धा-धिकारिणां भारतस्य जातीयमनोवृत्तेरितिहासस्य साहित्यस्य धर्मस्य स्वदेशप्रीत्यादर्शानाम् उच्चाशानाञ्च प्रत्याख्यानादेव जातेयं विफलतेति तेन निपुणमेव प्रतिपादितम्। वर्षान्तरे कलिकाता-विश्वविद्यालयमविचार्य दूषयतां प्रतिवचनावसरे, वैदेशिकपरि-चालिता शिक्षापद्धतिः सदुद्देश्यविमण्डिताऽपि विहाय राज-नीतिककारणं सर्वथाऽपरिहार्यतया च जनानां हृदयग्रहणेऽसमर्थैव जायत इत्येवं रूपस्य दोषस्यैवोपरि दत्तं प्रबलं गौरवं केनचिद् भारतीयवार्तापत्रसम्पादकेन। अस्माकं वास्तवजीवितस्यानु-रूपाया नवीनायाः कस्याश्चित् संस्कृतेः साधने विफलतैवाऽऽ-सादिताधुनिक्या शिक्षयेत्यासीत् तस्य निर्णयः। राममोहन-

रायस्य डेभिड्-हेयारस्य च समयाद् विपुलो जातः साम्प्रतं जनमतस्य परिवर्तः।

एकविंशत्यधिकोनविंशतिशततमे खृष्टीयाब्दे मान्द्राजप्रदेशस्य जातीयशिक्षासमुन्नतिसम्पादनसंसत्प्रकाशिते श्रीमद्रवीन्द्रनाथठाकुर-विलिखिते "दि सेण्टार अफ इण्डियान् काल्चार" शीर्षके प्रबन्धे उल्लिखितमतस्यानुगुणमेव किञ्चन मतं सुस्थापितं दृश्यते।

प्रतीच्यशिक्षाया न कोऽपि विद्यते समुपयोगः प्राच्यदेशजानां जनानां सविधे, न च खल्वयमेव तस्य प्रबन्धस्याऽऽशयः, परं विद्यमाना वैदेशिकशिक्षापद्धतिर्भारतीयानां मनसः सर्वमेवांशमधिकृत्य नूतनतत्त्वानां संयोगाज्जाताया नूत्नायाश्चिन्ताशक्तेः प्रसरणप्रसङ्गमपि समूलमुन्मूलयतीति। साम्प्रतं वितीर्यमाणा प्रतीच्यशिक्षा कथमपि जीवितधारणोचितस्य खाद्यस्य प्रकारविशेष एव, स चापि पुनर्नाविशीर्णः परं शुष्कः पेटिकाबद्धश्च। पुष्टिकरमस्माकं खाद्यं सर्वेषामेवोपकरणानां स्थितिमपेक्षते। उपकरणानि च तानि नैव स्यू रससंस्कारशालाजातानि शुष्कतां गतानि वा, परमस्माकं शरीरस्य पुष्टिसाधनोचितानि। उद्धृतानां वाक्यानां चरमांश एव विद्यते जटिलताऽस्य समग्रस्य विषयस्य। विभिन्नैरेव पदैः प्रकाशितस्त्वेक एव स भावो बहुशो नूनं दृष्टिपथातिथित्वं यायात्। "एकजातीयजनानां, समुच्छ्रितानामप्यपरजातीयानां जनानामादर्शेन निर्माणाय क्षणस्थायिनः सोत्क्रोशप्रार्थनस्य पूरणप्रचेष्टनं सर्वथैव निरर्थकं स्यात्। युरोपानुसृतवर्त्मना बलादात्मानं प्रवर्तयद् भारतं नैवाधिगमिष्यति युरोपत्वं परं वैरूप्यमेवाऽऽत्मनः साधयिष्यति।"

समग्रायामेव शिक्षासमस्यायां मुख्यविचार्यविषयरूपेण सविशेषं समालोचितस्तेन भाषाश्रित एव प्रश्नः। बहूनामेव छात्राणां भाषाशिक्षण एव न्यूनतां प्रकटयति तस्य शिक्षकीयाऽभिज्ञता। शिक्षाग्रहणोचितबुद्ध्यभिलाषादिसम्पन्नानामपि वैदेशिकभाषाधि-

गमात्तमाणामसंख्यानामेव छात्राणामुच्चशिक्षालाभसौकर्यनाशनाद् भीतिजनकोऽयं जातीयोपादानस्यापचय इति दुर्निवारोऽयं खलु सिद्धान्तः समुपन्यस्तस्य पक्षस्य। वैदेशिकभाषावाप्तौ सामान्य-सामर्थ्ययुतैर्विद्यार्थिभिरपि वैदेशिकशिक्षाद्वारे आघातं कुञ्चिका-चालनं च कृत्वा परिसमाप्यते तेषां जीवितकालस्य बहुलो भागः।

विभिन्नदृष्ट्या चेद् दृश्यते तदाङ्गलभाषायाः प्रयोगो भारतीयं मनः प्रेरणालाभाय प्रतीच्याभिमुखमेव नियतमुन्मुखं विदधातीति ज्ञातुं शक्यते। दुरन्तमरुभूमिकर्षणमिव निरर्थकं स्यादाधुनिक-शिक्षाफलमिति भाषा-मनोवृत्तिज्ञानानि च पारेसमुद्रं स्थितात् कस्माच्चिद्देशादेवाऽऽहर्तव्यानीति च विश्वविद्यालयैर्वितीर्णया विद्यया सर्वथैवोररीक्रियते। एतेनास्माकं शिक्षाऽत्यर्थमस्पष्टा कृत्रिमा जीवितस्य सर्वैरेव साहचर्यैर्विच्छिन्ना बहुसमयसाध्याप्यकिञ्चित्-करमेव फलं प्रसूते। शिक्षितवर्गाणां विदेशीयभाषाद्वारेण शिक्षा-ग्रहणस्याऽऽत्यन्तिकोद्वेगं प्रति दीयतेऽत्रावधारणम्, यतो यदा बङ्ग-भाषाप्रयोगः शिक्षितवर्गाणामभूद्गौरवकारणम्, यदा च "स्वप्नदर्शन-मप्यस्माकम् आङ्गलभाषयैव जायते" इति कथयन्तो माइकेल-मधु-सूदनदत्तप्र.ख्या अपि जना गर्वविशेषमेवोद्वहन्, तात्कालिकैः पञ्चाशत्संव.सरप्राचीनैर्मतैरिदानीन्तनानां मतानां तुलनं क्रियेत चेत् तदा नूनमेवेदानीन्तनानि मतानि समधिकमेव गौरवं लभेरन्।

भारतीयानां बहुसंख्यकत्वादनुभूयमानमसौकर्यम् असूक्ष्म-चिन्ताप्रसूतमेव। युरोपान्तर्गतानां देशानामेकत.स्य तुल्यं भारत-मिति मन्यमानस्य चिन्तैव तत्र कारणम्। परं सत्यपि भाषाणामेक-रूपताया अभावे बुद्धिविषयकेण सारूप्येण साधारणया शिष्ट्या चोपलक्षितस्य समग्रस्यैव युरोपस्य तुल्यमेव विचिन्तनीयं भारतम्। यथैव युरोपस्य संस्कृतेः प्रथमे भागे "लेटिन्" भाषैवाऽऽसीच्छिक्ष-णीया तथैव भारतीय-क्रमविकाशस्य प्रथमे भागे संस्कृतभाषैवाभूत्

साधारण्येनाधिगन्तव्या ; परं युरोपस्य मानसिकविकाशः परस्तादेव पूर्णतां लेभे। प्रत्येकश एकैकां भाषां स्वीकुर्वत्स्वेव युरोपीयदेशेषु तद्-देशानां संस्कृतिष्वजायत पारस्परिकसंश्लेषः। भाषारूपप्रणालीनां विभिन्नताभिरेव युरोपस्य भाववाणिज्यस्य विपुला विस्तृतिर्बहुमुखता च सम्पादिते। भाषाणां विभिन्नता विशिष्टशिष्टिसंस्कृत्योरुपचित्यामनुत्पाद्य बाधाविशेषं यदि सहायकत्वमेव जगाहे युरोपदेशे, कथं वा भारतेऽपि सा तथैव नाऽऽचरेत्।

समुपचीयमानस्य विचिन्तनीयस्य च जनमतस्यैव पुनरुदीरणं कृतं डक्टर-रवीन्द्रनाथठाकुरेण भाषाविषयकप्रश्नमधिकृत्य स्वमतप्रकाशनावसर इति मया प्रागेवोक्तम्। ऊनविंशतिशततमखृष्टाब्दे मान्द्राजप्रदेशे संस्थापितया भारतीयशिक्षासमितिरित्यभिहितया कयाचित् सभया द्वितीयस्तरीयशिक्षासरण्यां साहित्यातिरिक्तविषयाणां प्राकृतभाषा एवोपदेशद्वारतामयेरन्निति प्रदर्शितो निर्बन्धातिशयः। द्वितीयस्तरीयविद्यालयेष्ववश्यपाठ्यद्वितीयभाषात्वेनाऽऽङ्गलभाषाया ग्रहणे प्राकृतभाषाणाम् उपदेशप्रदानस्य द्वारतापादने च यत्नो विधेय इति प्रस्तावः पञ्चदशाधिकोनविंशतिशततमखृष्टाब्दे राजकीयव्यवस्थापकसमितौ अनारेवल्-मिष्टार-राम-रायानिङ्गरेण समुपस्थापितः। अन्यत्रास्य विषयस्य प्रकर्षविशेषस्तावल्लक्ष्यते। वर्षचतुष्टयानन्तरं हायदरावादराज्यं प्रस्तावममुं कार्ये परिणमयितुं सविशेषमयतत :

परिवर्धमानाधुनिकी शिक्षा साधारणजनानामपि चेदर्जनीया तदा तेषां स्वकीयया मातृभाषयैव सा तेषु वितरणीयेति स्थिरमुपचीयमानो विश्वासो राजपुरुषाणां स्वल्पसंख्याकेष्वेव समदृश्यत। तेषु विशिष्टावास्ताम् हायदरावादस्यार्थसचिवो नवाव-हायदार-नवाज्-जङ्ग-वाहादुरः, साधारणशिक्षापरिचालकः सुगृहीतनाम्न आलिगढ़प्रतिष्ठापकस्य पौत्रो नवाव-मसूद-जङ्ग-वाहादुरश्च।

एतयोः श्रमेण माननीयनिजाममहोदयस्य च निर्व्यलीकमनुमोदनेन शिक्षार्थं परीक्षणार्थञ्च विद्यार्थिनां "ओसमानिया-युनिभार्सिटि"-समाख्यो विश्वविद्यालयः प्रतिष्ठितोऽभूत्। तस्य तु विश्वविद्यालयस्योपदेशप्रदानाय उर्दु भाषाद्वारीकरणमेवाऽऽसीद् वैशिष्ट्यम्। उपयुक्तपाठ्यपुस्तकानामभावरूपं प्राथमिकमसौकर्यम् अपाकर्तुं प्रवर्तनसमयादेव विश्रुतस्य कस्यचिद् विपश्चितस्तत्त्वावधानेन निर्मितस्तैर्भाषान्तरीकरणकुशलानां कश्चिद् विभागः। तस्य च भाषान्तरीकरणविभागस्य निर्व्याजश्रमेणेतिहासस्य दर्शनस्यार्थशास्त्रस्य गणितस्य पदार्थविद्याया रसतन्त्रस्य व्यवहारशास्त्रस्यान्येषाम् अपि विभिन्नानां विषयाणां साकल्येन त्रिशदधिकशतसंख्याकानि पुस्तकानि सुष्ठु सम्पादितानि। मेट्रिकुलेशन्-परीक्षायै समपेक्षितानां विषयाणां केषुचिन्निपुणतायाम्, विद्यालयपरित्यागावसरे विद्यालयकर्तृपक्षदत्तं प्रशंसापत्रमेव प्रमाणत्वेन गृहीतं स्यात्; सर्वेष्वेव विद्यालयेषु महाविद्यालयेषु चावश्यपाठ्यद्वितीयभाषारूपेणाऽऽङ्गलभाषाया अध्यापनं जायेत, भवेच्च नीतिशास्त्रस्य ब्रह्मविद्यायाश्च शिक्षणं महाविद्यालयेष्वित्येतान्येव तस्याः शिक्षापद्धतेरुल्लेखयोग्यानि वैशिष्ट्यानि।

आ संस्थापनसमयात् षडभिर्वर्षैरेव समासादितः सुमहान् समुदयस्तेन विश्वविद्यालयेन। ओसमानिया-महाविद्यालयस्य कृते चतुर्दशसंख्यका विद्यालयाश्छात्रान् अध्यापयन्ति, अधीयते च तस्मिन् महाविद्यालये सप्तशतसंख्यकाश्छात्राः आइन-पाठ्यम्, अदूरभविष्यत्काले च तस्य महते विस्ताराय संगृहीत एवाऽऽस्ते समुचितः सम्भारः। विश्वविद्यालयस्य गृहनिर्माणाय सुविस्तीर्णो भूखण्डः (१४ एकारपरिमितः) कोटिमिता मुद्राश्च शासकेन दत्ताः। राष्ट्रस्य सवषां प्रदेशानां मुख्येषु स्थानेषु विश्वविद्यालयाधीनाम् उच्चशिक्षालयानां स्थापनाय, षडवर्षाभ्यन्तरे वि वविद्यालय

द्विसहस्रविद्यार्थिनाम् अध्ययनव्यवस्थायै च प्रयत्नोऽदृश्यत। शारीरिक-मानसिकाध्यात्मिकसंस्कृतेः पुरातनीनां नूतनानां च पद्धतीनामुत्तमांशं सङ्कलय्य जातीयशिक्षाप्रतिष्ठाननिर्माणमेवाऽऽसीद् राष्ट्रस्य लक्ष्यमिति निजामवचनमुद्धृत्यैव वक्तुं शक्यते।

एतैः सर्वैर्विषयैस्तात्कालिकानामेव रुचिप्रवाहाणां गतिर्निर्दिश्यते। धर्म्योपदेशाः शिक्षायाः पूर्णतां नयन्त्विति भावो बहुष्वेव प्रदेशेषु प्रकटोऽभवत्; आलिगडे वाराणस्यां च साम्प्रदायिक-विश्वविद्यालयानां प्रतिष्ठापनमेव तद्भावसम्पन्नानां कार्यस्य निदर्शनम्। परमेते शिक्षाप्रतिष्ठाने सुविदिते अपि प्रकारविशेषस्य निदर्शने एव। मद्वर्णितप्रकारस्य मनसोऽशान्तिविशेषस्य साक्ष्यमेवोद्वहन्तोऽपरे तावद् विस्मयावहा उद्यमा वङ्गान्तर्गतखुलना-विभागस्थित-दौलतपुरग्रामे संस्थापिते "हिन्दु-एकाडेमि" समाख्ये महाविद्यालये, पाञ्चावेषु युक्तप्रदेशेषु चाऽऽर्यसमाजप्रतिष्ठापितेषु शिक्षाप्रतिष्ठानेषु, डक्टर्-रवीन्द्रनाथठाकुरप्रवर्तिते विश्वभारतीति नाम्ना प्रथिते पश्चिमवङ्गान्तर्गत-बोलपुरस्थिते विश्वविद्यालये च द्रष्टव्याः। उत्तरोक्तशिक्षाप्रतिष्ठानमाश्रित्य परस्तात् किञ्चन भाषिष्ये; साम्प्रतं परिचालयामि मे पाठकान् वङ्गानां ग्रामबहुले कस्मिंश्चिद् विभागे भैरवनदतटस्थिते दौलतपुराभिहिते ग्रामविशेषे, यत्र विराजन्ते हिन्दु-एकाडेमि-महाविद्यालयस्य हर्म्याणि।

---

## सप्तमोल्लासः

### लक्ष्यस्य पुनः प्राच्यतापादनम्

दौलतपुरस्याध्यापकमण्डली षट्शतपरिमितानामध्ययननिरतानां छात्राणां बहुलांशश्च विभिन्नप्रकारेषु छात्रावासेष्वेव वसन्ति। तेषु केचन च्छात्रावासाः स्मरणातीतकालादागतेन वङ्गीयग्राम्यरीत्यनुसारेणैव निर्मिताः पर्णकुटीराः। विहाय च्छात्रावासान्, रसक्रियास्थानानि प्रपाठप्रकोष्ठांश्च विद्येते कश्चिदतिथिनिवासो रमणीयो देवालयश्च।

शासककार्येणासम्पृक्तस्यास्य महाविद्यालयस्य परिदर्शनावसरे अस्यैव प्रतिष्ठानस्य निर्माणे हेतुभूतेनाध्यवसायिना कर्मपरायणेन केनचित् क्षुद्रेण कर्मिसंघेन व्याख्यातमस्मत्सविधे प्रयोजनमस्य प्रतिष्ठानस्य। प्रायेण विंशतेः संवत्सरेभ्यः पूर्वं सम्यक्तया धर्मभावविवर्जितायां शिक्षापद्धतौ परिदृश्यमानो भयावहो दोषः समुद्वेगमेव समजनयत्तेषां मनसीति तैरभिहितोऽहम्। अपि नाम प्राच्यस्य धर्मेण दर्शनेन च प्रतीच्यस्य साहित्यविज्ञानानां सुसंङ्गतं सम्मेलनं नैव सम्भवेदिति तदानीं चेतसि तेषां समुद्गता काचिच्चिन्ता। प्राच्य-प्रतीच्यभावानां सम्मेलनार्थं तैरनुष्ठीयमानं कर्म प्रदर्शयितुम्, चतुर्दिक्षु स्थितानि हर्म्याणि, बाहुल्येन तत्-स्थानजातैरेवोपकरणैर्विनिर्मितानि पदार्थविद्याया रसतन्त्रस्य च रसक्रियास्थानानि, वङ्गानां सुपरिचितैरेव पादपैरन्तरितान् आलक्ष्यमाणांश्छात्रावासान्, आक्रीडान्, अध्यौत्सुक्ययुतानां छात्राणां सविधे

शास्त्रवाक्यव्याख्याननिरतेन केनचित् संस्कृतभाषानिष्णातेना-ध्यापकेनाध्यासितेन विविक्तेन छायाच्छन्नेन च प्राङ्गणेनोपलक्षितं देवायतनं च ते दर्शयांबभूवुः। येनैव भावेनानुप्राणितास्ते समारेभिरे कार्यजातं तस्यैव भावस्य सुस्पष्टविकाशविशेषफलीभूतमेवाऽऽसीत् तत् समग्रं दृश्यम्। तेषामेव वचनमुद्धृत्य चेदुच्यते तदा समदृश्य-तैव तत्र वर्तमानकालोचितया शिक्षया समं नैतिकानां, जीवितस्यो-न्नतमादर्शान् समाश्रित्य प्रत्नैरार्याचार्यैर्वितीर्णानां धर्म्या-णाञ्चोपदेशानां संयोगः।

युगपदेव विवृद्धिविशेषमश्नुवाते तत्र प्राच्या प्रतीच्या च शिक्षापद्धती चतुष्पाठ्यां कलिकाताविश्वविद्यालयसंश्लिष्टे महा-विद्यालये च। हिन्दूनां प्रत्नमेवाऽऽदर्शं संश्रित्य प्रवर्तते ताव-च्चतुष्पाठी। चतुष्पाठ्यां साधारण्येन सर्व एव विद्यार्थिनो विनैव वेतनं शास्त्रोपदेशं लभन्ते, तत्रस्थाः पुनर्वासस्थानम् आहारमपि प्राप्नुवन्ति। देवायतनचत्वरे आचार्यः शास्त्रनिष्णाता अन्ये च पण्डिताः व्याकरण-साहित्य-स्मृति-मीमांसा-वेदान्तादीनि शास्त्राणि विद्यार्थिनोऽध्यापयन्ति। सम्यक्तया देशीयमेवेदं प्रतिष्ठानम्; छात्राणां चास्य प्रतिष्ठानस्य न किमपि विद्यते करणीयं प्रतीच्य-विद्याध्ययननिरतेन महाविद्यालयविभागेन; परं तस्य महाविद्या-लयस्योपरि संलक्ष्यतेऽस्याश्चतुष्पाठ्याः प्रभावविशेषो यतस्तद् देवा-यतनमेवावलम्ब्य रीतिद्वयमत्र मिलति।

सम्पत्तेर्न्यासाधिकारे स्थितानां तत्त्वावधायकानां पत्र एवं तावदास्ते विलिखितम्—"दशाधिकत्रयोदशशततमे वङ्गाब्दे माघस्य नवमदिने चतुरधिकोनविंशतिशततमे खृष्टाब्दे फेब्रुयारीमासस्य प्रथमेऽहनि प्रतिष्ठितोऽभूदत्र दधिवामनाख्यस्य भगवतो विष्णो-र्विग्रहविशेषः। सकलसम्पत्तियुतं शिक्षाप्रतिष्ठानमिदं समर्प्यतेऽ-स्माभिरद्य तस्यैव भगवतश्चरणारविन्दे। अद्य प्रभृति परिकल्प्यतेऽ-

स्माभिरत्रैव तस्याऽऽसनम्। सर्वा चेयं सम्पत्तिः सर्वाणि चास्य प्रति ानस्य कर्माणि, भवन्ति भविष्यन्ति वा, सर्वथैवास्य भगवतोऽधिकार एव चिराय स्थास्यन्ति।" ेवायतन प्रतिष्ठितस्यानन्तस्य भगवतो विग्र विशेषस्यैव पुरतो म ाविद्यालयस्य चतुष्पाठ्याश्च विद्यार्थिनोऽध्यापकाश्च मिलित्वा प्रत्नस्य धर्मशास्त्रस्य व्याख्यानं शृण्वन्ति।

कियत्प्रमाणं भवति धर्मशास्त्रोपदेशनं तत् सविनयमेव मह्यं निवेदयामासुर्मदभ्यर्थनाकारि ः। प्रायेणाऽऽचार्यस्य रुचिरेवास्मिन् विषये प्रकर्षविशेषम् अवगाहते, परं विश्वविद्यालयस्य केनचित् पारे र्शकेन कियद्भ्यश्चिद्वर्षेभ्यः पूर्वं लिखितायां विज्ञप्तौ हिन्दुच्छात्रा- ामवश्यमवाधिगमनीयमासीद् मनुसंहितोपदेशनमिति मतं दृश्यते विन्यस्त ः। दैनन्दिनानां कार्याणां निर्विघ्नपरिसमाप्तिकामनया जन्मभूमेः सुखाय स ्नतये च दिनस्याऽऽद्यावसानेऽपि सर्वैर्मिलित्वा पठ्यते यः खलु स्तवः स त्वेतद्विषयानभि ानामपि मनसि स्थितिशीलमेव नूनं जनयेत् कञ्चन भावविशेषम् इति तेनैव तत्राभिहितम्।

म ाविद्यालयस्यापरि चतुष्पाठ्या देवायतनेन च पातितः प्राच्यसम्प्रदाया ुगः प्रभावोऽनायासेनापीति ज्ञातुं शक्यते। ुस्तकागारस्य पुस्तकाधारेषु "एनसाइक्लोपिडिया बृटानिका" ग्रन्थेन समं शब्दकल्पद्रुमः, रासायनिकसभायाः पत्रिकाभिः समं ऋग्वेदसंहिताश्च सर्वेषामेव दृष्टिं स्वत एव समाकर्षेयुः। प्रातः षष्ठहोरातो द ा ाद्वां यावत्, माध्यन्दिनं दीर्घं समयं वर्जयित्वा पुनरपराह्णे च महाविद्यालयेष्वध्यापनं ्रोपरीतिविरुद्धं सर्वथैव प्राच्यरीत्य ुगञ्च।

म ाठप्रको ष्ठेभ्यश ्ावासान् प्रति चलता जनेनानायासेनैवास्य स्थानीयं वैशिष्ट्यं ज्ञायेत। ायतनस्य छायायां स्थित्वा प्रतिष्ठान-ा ्यैकायनैः कर्मिभिः सह संलापं कुर्वता मया, पर्वतेभ्यो विनिर्गत्य सागराभिमुखं चिराय प्रवहतो भैरवनदस्य कलस्वनैर्दूरीक्रिय-

माणां माध्यमिकानां स्तब्धतामवधार्य, समीक्ष्य च सूक्ष्मवसनावृतायां मूर्तिमय्यां यामिन्यामिवोन्नत्कळ्द्वारस्य देवायतनस्यान्तःस्थितायां तमिस्रायां ग्रामीणैः पण्डितैः सममालिखितामिवाऽऽचार्यस्य शान्तां मूर्तिं सहसैवानुभूतं नूनं सफलतां गताऽत्र प्रतिष्ठातॄणामाशेति। समुपाजायत च मे मनसि देवायतनस्य च्छायायां संवर्धितस्यास्य महाविद्यालयस्याध्येतृभिरध्यापकैश्च समासादितः स्वेषां ज्ञानचर्चावसरेष्वपि भागवदुपासनोपायश्चेति।

आर्यसमाजस्य शिक्षाविषयकप्रथायां दौलतपुरेऽनुष्ठितात् प्रयत्नाद् अधिका दृश्यते कापि शक्तिः प्रतीच्यसंस्कृतिभञ्जने प्राच्यरीतेः पुनः प्रतिष्ठापने च। साम्प्रतं स्वामि-दयानन्द-सरस्वतीतिनाम्ना प्रथितस्यास्य समाजस्य प्रतिष्ठातुर्मूलशङ्करस्य जीवितवृत्तस्याऽऽद्येतिहासे परिलक्ष्यते गौतमबुद्धस्य जीवितस्याऽऽद्येतिवृत्तस्यानुरूपं विस्मयोद्दीपकं किञ्चन सादृश्यम्।

विश्रुतः शाक्यवंशावतंस इव स गभीरं समचिन्तयज्जीवितसमस्याविषयम्, प्रतिवासिनां स्वस्य च वंशस्य प्रचलिते धर्मे विश्वासस्थापनम् असम्भवं च मेने। गौतमस्य पितराविव मूलशङ्करस्यापि पितरौ विवाहितजीवितस्य सुखैः कर्तव्यैश्च तस्य तां महतीं चिन्तामपाकर्तुमैच्छताम्। परमेतद्विषये गौतमवृत्तस्यासदृशेन तेन नानुमोदितो विवाहप्रस्तावः। पितुराग्रहातिशय्यात् स्वमतस्य पराजयं समुत्प्रेक्ष्य विंशे वर्षे वयसि गौतम इव स गैरिकवसनविनिमयेन विसृज्य सर्वमैहिकं सुखमेकस्यैव तत्त्वस्यानुसन्धानाय सन्न्यासं शिश्रिये। द्विसहस्राधिकवर्षाणि यावद् यया नाम चिन्तया भारतीयानां चेतसो व्याकुलतैवोत्पाद्यते तयैवाभिभूतः स चित्तविभ्रान्तिकरस्य विचित्रस्य मानवजीवितरहस्यस्योद्घाटनाय समचेष्टत। पञ्चचत्वारिंशदधिकाष्टादशशततमवर्षाब्दस्येयं कथा।

सत्यानुसन्धित्सुर्मूलशङ्करः पञ्चदश वर्षाणि यावद् महत्यागेन

पर्यटकस्येव जीवितं धृत्वा देशाद्देशान्तरं परिभ्रमन् विपश्चितः सन्न्यासिनश्च तत् (सत्यं) पप्रच्छ। परं न प्राप्याविन्दत स तृप्तिम्। निर्वापितग्नेर्भस्मततिमिव निष्फलाममन्यत स तदानीन्तनीं शिक्षाम्। निःशेषं व्ययितस्तदा पूर्वतनानामृषीणां धीशक्तेः प्रभावः। धर्मान्धताया दासास्तात्कालिकाः शिक्षका मानसिकेष्वाध्यात्मिकेषु च विषयेषु निःस्वा एवाऽऽसन्। सुदीर्घसन्धानावसाने प्रथितस्य भगवतः श्रीकृष्णस्य जन्मभूमौ मथुरायां नगर्यां दयानन्दसम्प्रदायगतं वीर्यानन्दसरस्वतीनामानं ज्ञानिनं कञ्चन सन्न्यासिनमासाद्य सानन्दं तच्चरणप्रान्तमशिश्रियत्। वर्षत्रयं समभावानुप्राणितौ तौ गुरुशिष्यभावेनैवोषतुः। अथ वि..यकालः समागतः। प्राचीनां रीतिमनुसृत्य वीर्यानन्दः स्वशिष्याच्चिरप्रचलिताया धर्मान्धतायाः पुराणानुमोदितायाः पौत्तलिकतायाश्च प्रतिकूलतयोत्थान..., बौद्ध..गात् पूर्वं समनुष्ठितस्य महतो ब्राह्मणधर्मस्य प्रवर्तनाय यथोचितानां शिक्षाप्रतिष्ठानानां संस्थापनञ्चेति वरद्वयं ययाचे।

कठोरदेवताप्रतिमाभञ्जक...चित... सुदीर्घपरीक्षणात् समुत्तीर्णं दयानन्दमनुसृत्यैवाविलम्बितं तेन तत् प्रतिज्ञातम्। रोमीयमतविरुद्धवा..नः संस्कारका इव प्रचण्डेनो..साहेन..पलक्षितः स वेदान्तिनोऽपकृष्याद् धर्ममतात् सपरिकरं निष्काशितवान्। विनि...तानि तेन षड्दर्शनान्यष्टादश..राणानि च। जगतां वेदानाञ्च निर्मातुरेकस्यैव परमेश्वरस्योपासनादेव लभ्या मुक्तिरिति; वेदवृक्षस्कन्धे समुत्पन्नं तरुरुहमिव पौत्तलिकता..राणादिरूपं धर्मशास्त्रस्य बहुलं भागं वर्जयित्वा विशुद्धां वैदिकीमेव शिक्षां पुनराश्रयेयुस्तस्य स्वदेशवासिनश्चेति समपुष्यत् स मतम्। पञ्चसप्तत्यधिकाष्टादशशततमे खृष्टाब्दे बोम्बाइ-प्रदेशे लब्धसत्तस्य, वर्ष..... च लाहोरेषु सुसंस्थापितस्याऽऽर्यसमाजस्यैतादृश एवाऽऽसीत् प्रतिष्ठाता। नवीनधर्मस्य सम्प्रद..... वा ..... न मया स..ल्पतामिति तेन

स्पष्टमेव स्वयमभिहितम्। ईश्वरप्रोक्ते वेदरूपे ज्ञानस्य, धर्म्मस्य सत्यस्य च भाण्डारे स्वकीयानां परिचालनमेवास्तु तस्य लक्ष्यम्।

स्वस्य स्थिरतापादनायदीन्तन्या भारतीयमन... तदुपरि यो हि नाम प्रभावोऽनेन वितन्यते विशेषतस्तेनैव समग्र आर्यसमाजस्येतिहासः समधिकमादरणीयः। अत्र तावत् प्राधान्यना... मस्य शिक्षाविषयकै रेव कार्यजातैः सम्बद्धः। तान्येव खलु कार्याणि पुरातनाहिन्दुधर्मस्य भावावेशस्य पुनरुद्धारे बलसम्पादने च वीर्यवतोऽस्य समान्दोलनस्याऽऽदर्शभूतं लक्ष्यं मार्गश्च। सर्वैरेवाऽऽर्यैः परिपालनीयं समाजस्य धर्मघटकं नियमदशकम्। नियमेषु तेष्वष्टमो मूर्खताया दूरीकरणाय ज्ञानस्य विततये च प्रावर्तत। युक्तप्रदेशेषु पाञ्जावेषु च ... तुलनया द्वितीयमेव स्थानमधिकृतं समाजेनेति तस्य नियमस्य सोद्योगविनियोगे प्रमाणम्। लाहोरस्थित "दयानन्द एंग्लो वेदिक् कलेज" हरिद्वारं निकषा विश्रुतं "गुरुकुल"ञ्चेति महाविद्यालयद्वयमस्य शिक्षाविषयकादर्शस्य स्वरूपमिति वक्तुं शक्यते। विभिन्नप्रकाराः प्राथमिकविद्यालया माध्यमिकविद्यालयाश्च समाजस्यास्यापराणि शिक्षाप्रतिष्ठानानि। तेषु तावच्छिक्षाप्रतिष्ठानेषु हरिद्वारस्थितस्य गुरुकुलस्यैवाऽऽदर्शेन कानिचिदभवन् संस्थापितानि।

"दयानन्द एङ्ग्लो वेदिक् कलेज" समाख्यस्य महाविद्यालयस्य प्रय...यां विज्ञप्तावेव समुपन्यस्तानि दृश्यन्ते शिक्षाप्रतिष्ठानानामेतेषां संस्थापनकारणानि; विज्ञप्त्याऽनया प्रतीच्यशिक्षया प्रोत्सा...यन्त्या बुद्धिविषयकं समारम्भमुत्पादिता देशस्य गर्वकारणभूताः केचन जना इत्यादौ प्रदर्श्य, तादृश्यैव च शिक्षया समुत्पादितः समाजे शोच्यः कश्चन भेद इति प्रत्यपादि। जगति सर्वेष्वेव देशे... जातेव...लांशादेव मनोवृत्त्या भिन्नः कश्चन शिक्षितानां वर्गो जायत एवास्याः प्रतीच्यशिक्षायाः। अपरेष्वपि विषयेषु जातीय-

भाषायाः साहित्यस्य च योग्येनाध्ययनेन सममात्मतत्त्वम्, धर्मम्, सृष्टिम्, पदार्थान्, गुरुप्रयत्नसाध्यं भगवद्विषयकं ज्ञानञ्चाधिकृत्य समुपस्थितानां विविक्तव्यानानां फलैः परिपूर्णस्य संस्कृतस्य पठनं विशेषत एव समपेक्षणीयं जातीयशिक्षया। जातीयभाषायाः प्राकृतभाषाणाञ्च पठने समुत्पाद्य जनानामुत्साहं शिक्षिताशिक्षित-वर्गाणां संहतिसाधनम्; संस्कृताध्ययनस्य विस्तारसम्पादनेन नैतिकाध्यात्मिकसत्यविषयकज्ञानस्य प्रसारणम्; निपुणभावेनाऽऽ-ङ्गलभाषाध्ययनस्य प्रोत्साहनम्; जडविज्ञानस्य प्रयोज्यविज्ञानस्य च प्रसारं विधाय देशस्य पार्थिवोन्नतिसाधनञ्चेत्येते तावदासन् महाविद्यालयप्रतिष्ठातॄणां मौलाः समुद्देशाः। प्राच्यप्रतीच्यशिक्षयो-र्युक्तिसिद्धं सम्मेलनमेवात्राऽऽसीत् सुव्यक्तं लक्षीकृतं प्रतिष्ठातृभिः। प्रादुष्कृत्य हिन्दूनां यथार्थं जातीयं भावं लोकहितेषु व्यक्तिगतविष-येषु च देशेऽस्मिन् श्रेष्ठं स्थानविशेषमधिकुर्वन्तः समापितविद्या जना अप्येभिरेव प्रतिष्ठानैरुत्पाद्यन्त इति सर्वसम्मतमेव।

परम्, येन तावदार्यसमाजेन द्व्यधिकोनविंशतिशततमे खृष्टाब्दे हरिद्वारसमीपे संस्थापितो गुरुकुलाख्यो महाविद्यालयः, येन च साम्प्रतमनुभूतादपि वीर्यवत्तरः प्रार्थितो विश्लेषः प्रतीच्य-सम्प्रदायेन, तस्या नाद्यापि जातो यथाभिलषितन्तोषः।

प्राचीनकालस्य ब्रह्मचर्याभ्यासस्य पुनः प्रवर्तनम्, प्रज्ञानां भार-तीयदर्शनसाहित्यादीनां प्रत्युज्जीवनम्, प्रतीचीनचिन्तायाः सार-वस्तुग्रहणक्षमस्य हिन्दुसाहित्यस्य निर्माणम्, वैदिकधर्मप्रवचनो-चितानां विदुषामुत्पादनम्, अविरोधेन मिश्रीकृतयोः प्राच्य-प्रतीच्य-सभ्यतयोरुन्नततमैरेव विषयैः कस्याश्चित् संस्कृतेर्निष्पादनमित्ये-तानि तावदस्य प्रतिष्ठातुर्मुन्सीराममहोदयस्याभ्युपगतमेवाभूल्लक्ष्यम्। ओदन्तापुरी-तक्षशिला-श्रीधन्यकटक-नालांदा-विक्रमशिला-प्रमुखाणां भारतस्य पुरातनानां प्रथितानां विश्वविद्यालयानामेवाऽऽदर्शेन हरि-

...रोपकण्ठे पूताया गङ्गायाः समुद्गमनभूमौ महति हिमालयस्य वक्षसि जनानां व्याकुलैर्व्यवसायैर्विशेषेण विवर्जितायां चिरं भारतीयैर्महर्षिभिरध्यासितायां प्रशंसितायाञ्च कस्याञ्चित् स्थल्यां प्रतिष्ठितेन वेदानामुपनिषदाञ्च ध्वनिभिर्निनादितेन ...कुलमहाविद्यालयेन कियत्परिमाणं साफल्यं समधिगतमित्येतद्विषये आमेरिका महादेशस्य मिस्‌न्-फेल्प् ...कस्य ... विवृतिस्तावत् प्रमाणत्वेन परिगृहीता प्रतिष्ठात्रा। महाविद्यालयस्थापनोचिताया भूमेरनुसन्धानावसरे गुल्मावृतस्थानबहुलं विशालमिदं भूखण्डं कथं ...न्सीराममहोदयेनोपायनरूपेण लब्धम्, दत्तमेव तेन तस्य सुविस्तृतं वर्णनम्। भारतस्यातीतचिन्ता...निर्माणे कत्यंशानग्रहीत् प्रकृतिरिति विषयस्याभिज्ञो जनः सहसैव बुध्येत कीदृशेन परितोषेण परिवृतः स मुन्सीराम उपायनमिदमगृह्णादिति। पूर्ववदद्यापि भारतीयं मनोऽनवग्रहं धावति प्रकृतिं प्रति। विजने मन्दालोकेऽकृत्रिमे मन्दिर इव तरुगहने वने भगवदुपा...नया कालमतिवाहयता भारतीयेनाऽऽनन्दविशेष एवाद्याप्यनुभूयते। कालजलनिधेः क्लेशसंकुलायां वेलायां विपुलं निरवसानञ्चाऽऽवर्तनमनुभवतां नराणां वंशपरम्परया सादरं प्रपूजितानां पवित्राणां नदीनामनपायेषु कलकलध्वनिष्वद्यापि पूर्ववत् समाकर्ण्यते भगवतः परमात्मनो धीरप्रशान्तः स्वरो भारतीयेन। अवाङ्मनसगोचरस्य सनातनस्य शिल्पिनः शिल्पचातुर्यमद्याप्यवलोकयति स निर्विकारेषु समुच्छ्रितेषु च स्वदेशीयेषु शिखरिषु। तथाविधपारिपार्श्विकावस्थां परिगतेनाप्याध्यात्मिकस्यैक्यस्य समानयनाय प्रभयस्याप्रमेयोप...र्पणोचितो जीवात्मपरमात्...नोर्मेलनक्षमः स्थानविशेष एव तेनान्विष्यते। मृगयते स प्रकृतेर्विशालं मन्दिरम्, यत्र जीवान्तःस्थितपरमेश्वररूपेणावभासतेऽनन्तशक्तिः सर्वज्ञोऽपि भक्त्यैव सुखोपसर्प्यः सनातनः।

सप्ताष्टवर्षदेशीयो बालः षोडशवर्षाणि यावद् वश्यतादारिद्र्यब्रह्मचर्यपरिपालनरूपं व्रतं स्वीकृत्य बाह्यजगतः सम्यक्तया विश्लिष्टः सन् गुरुकुलं प्रविशति। यद्यपि बालस्य पितरावन्तरान्तरा प्रतिष्ठानमागत्य स्वस्वतनुजान् द्रष्टुमनुमतिं लभन्ते तथापि शिक्षासमये [illegible]न्यं गुरु च कारणं विना छात्रा नैव स्वगेहं ग[illegible]माधन्ते। विनियमनं कठोरम्, जीवितञ्च वि[illegible]शासितम्। प्रातश्चतुर्थहोरायां दिवसकृत्यस्याऽऽरम्भो जायते, सायं प्रातश्च प्रार्थनापचित्यादिकं भवति। संस्कृतग्रन्थांशविशेषस्याऽऽ[illegible]त्तिरुपस्तावक्षादिमः, इतरच्च वेदमन्त्रोच्चारणपूर्वकं विधिवदग्नाव[illegible]तिदानम्। नीत्याचारधर्मविषयकोपदेशायैवानल्पो नियुज्यते कालांशः। तत्रोप[illegible] भाषा तु "हिन्दी" एव, परम् संस्कृतम् आङ्ग्लभाषा च [illegible]मेवाभजताम्। सप्तदशेऽष्टादशे वा वर्षे विद्यार्थिनः संस्कृतमस्खलितं पठितुं लिखितुं वदितुं च पारयन्ति। भारतीये दर्शने न्याये चाधिकतरो दीयतेऽभिनिवेशः। षड्वर्षा[illegible]दशवर्षं यावदाङ्गलभाषाऽवश्यपाठ्यत्वेन पठ्यते। व्यायामकी[illegible] [illegible]कमप्यध्ययनमार्गे यथाविधि गुरुतया च सन्निवेशितं वर्तते।

शासकसाहाय्यसंवर्धितायाः [illegible]प्रतीच्यशिक्षापद्धतेः प्रत्याख्यानम्, हिन्दुजातेः सम्प्रदायानां प्रतिभादीनाञ्चानुरूपायां पद्धत्यां प्रत्यावर्तनञ्च यद्यपि गुरुकुलस्य समुच्छ्रितः स[illegible]देशस्तथापि [illegible]शिक्षा तत्र कथमपि ना[illegible] मन्यते। वर्षदशकं गुरुकुलेऽधीतवतो विद्यार्थिनोऽपरेषां महाविद्यालयानाम् आइ-ए-पाठ्यं समापितवद्भिर्विद्यार्थिभिर्बुद्धिविषयकोत्कर्षे तुल्यतैव लक्ष्यत इति मिस्‌र्-फेल्प्स्-महोदयस्य वि[illegible]तेरेव ज्ञायते।

आर्यसमाजस्य बृटीशशासनानुरागो वर्तते नवेत्यपरि[illegible]र्योऽयं चिन्ताविषयः। [illegible]ऽथवा केचन तत्प्रदेशस्था विशिष्टा जनाः समा[illegible]प्रति-

शततमखृष्टाब्दीयेषु च राजनीतिविषयकसमान्दोलनेषु नैवागृह्णन् कञ्चन भागविशेषम्। अस्त्येवास्मिन् विषये मतभेदः। विषयोऽयं तीव्रप्रतिवादं सोत्साहसमर्थनञ्च लेभे। यमुद्देश्यविशेषमाश्रित्य क्रियतेऽत्राऽऽर्यसमाजस्य कार्यजातानां वर्णनं तेनासंलग्न एव भवेत् तत्समाजस्य राजभक्तिविषयको बृटीशशासनानुरागविषयको वा प्रश्नः। विदेशीयादर्शस्य प्रभुत्वमसहमानानां विद्रोहादेव समजन्यस्य शिक्षाविषयकं कार्यजातमित्येव तावद् वस्तु प्राधान्येनात्र गौरव-विशेषमर्हति। जातेः प्रत्नैर्धर्मशास्त्रैर्द्विजातीनामनुसरणीयत्वेनानु-शिष्टान्मार्गाद् रेखामात्रमपि न व्यतीयाय मुन्सीराममहोदय इत्य-वधानविशेषार्होऽयं खलु विषयः। सप्तदशाधिकोनविंशतिशततमे खृष्टाब्दे स्वीकृतं तेन मनुसंहितोक्तं सन्न्यासिजनोचितं जीवितम्। ततः प्रभृति स्वामी श्रद्धानन्द इति नाम्ना स प्रथितोऽभवत्। महम्म-दीयधर्मे दीक्षितानां हिन्दुसन्ततीनां पुनर्हिन्दुत्वसम्पादनाय शुद्धि-समान्दोलनेन समं तस्य घनिष्ठः सम्पर्को यद्यपि न सर्वतो-भावेन संसारत्यागिनः सन्न्यासिजनस्य च समुचितस्तथापि धर्मप्रचारक-सङ्घविशेषे आर्यसमाजे तस्याऽऽग्रहातिरेक एवैतेन विशदीकृतः।

साम्प्रतं विभिन्नप्रदेशेषु भारतीयसम्प्रदाये प्रत्यावर्तनाय यानि खलु चेष्टितानि परिलक्ष्यन्ते, तेषु दौलतपुरस्थितो हिन्दुएकाडेमि-समाख्यो महाविद्यालयो हरिद्वारस्थ गुरुकुलमहाविद्यालयश्च सवि-शेषमुल्लेखनीयौ। प्रतीच्यशिक्षापद्धतेराश्रयभूतेष्वपि स्थानेषु दृश्यत एव काचिद् एतत्समजातीया प्रतिक्रिया। प्रतीच्यशिक्षाशिक्षिता इदानीन्तना भारतीयाः पञ्चाशद्वर्षेभ्यः पूर्वं जाताः स्वेषां पूर्वपुरुषा इव नैव सावज्ञमीक्षन्ते स्वदेशस्यातीतं वृत्तम्। प्रत्युत ते देशस्या-तीतवृत्तस्य समुत्कर्षसाधनेऽनुचितामपि काञ्चित् पुष्यन्ति साम्प्रतं प्रवृत्तिम्। "सर्वेष्वेव शिक्षाकेन्द्रेषु कलिकाताविश्वविद्यालय एव प्रथमं पौरस्त्यविद्यायां विशिष्टं गौरवं समभिज्ञाय विद्यार्थिनां मनोज्ञयोः

प्राचीनभारतीयेतिहास-संस्कृत्योरुपदेशलाभमन्वेषणाञ्च समभिप्रेत्य कश्चनाध्यक्षं न्ययुङ्क्त, गुणसम्पन्नस्य विद्यार्थिनः प्रोत्साहनं लक्ष्यीकृत्य विशिष्टोपपददानं प्रावर्तयञ्चेति व्याहरन् गर्वविशेषमेवानुभवाम्यहम्"—इति स्वदेशस्यातीतवृत्तविषये भारतीयानां द्रुतमुपचीयमानस्याऽऽदरविशेषस्य पिशुनतया परिकल्पितायाः पौरस्त्यपरिषदो द्वितीयेऽधिवेशने कलिकाताविश्वविद्यालयस्य प्रधानतमाध्यक्षेण सार्-आशुतोषमुखोपाध्याय-सि-एस्-आइ-महोदयेनाभाणि। मेकलेमहोदयेन रुचिविरुद्धबालकत्वस्य काल्पनिकमूढविश्वासस्य च समुच्चय इति यो नाम प्रत्नविद्यायाः कोषः सावज्ञमेव प्रत्याख्यातस्तस्मिन्नेव साम्प्रतं स्वत एव साग्रहं प्रवेशमाकाङ्क्षन्ति प्रतीच्यशिक्षाशिक्षिता भारतीया इति सप्तदशाधिकोनविंशतिशततमस्यखृष्टाब्दस्य चरमे भागे लब्धसत्त्वस्य वि-ए-उपपदप्राप्तेः समनन्तरमप्यध्येतुकामानां महाविद्यालयस्य कार्यजातानां परीक्षणादेव ज्ञायते।

तन्महाविद्यालयविभागस्य च प्रतिष्ठानसमय एव प्रत्नाया भारतीयविद्याया विभिन्नानां शाखानामध्यापनमन्वेषणाञ्चाभिलक्ष्य छत्रच्छायायामानीताः पञ्चाशत्संख्यका एकायना विद्वांसः। प्रायेणैकशताब्दीतः पूर्वं मेकलेमहोदय इतिहासस्य पदार्थविद्यायाः परमार्थविद्याया आन्वीक्षिक्याश्च दीनं शकटं मत्वा यस्य संस्कृतसाहित्यस्य कृते शशविषाणातिरिक्तं नाविन्दतापरं किञ्चन विशेषणपदम्, तत् संस्कृतं साहित्यं दशसु भागेषु विभज्य विंशतिसंख्याकानामध्यापकानां करेषु न्यासीकृतं साम्प्रतं विश्वविद्यालयेन। प्राचीनभारतीयेतिहाससंस्कृतीनां कृते चतुर्दश, पालीभाषार्थं दश, षट् चाऽऽरबीयपारसिकात्मकस्य इस्लामसाहित्यस्य हेतोर्विनियुक्ता अभवन्नध्यापकाः। डक्टर् अवनीन्द्रनाथठाकुराभिधो विश्रुतो भारतीयः कलावित् संस्थापितस्य भारतीयसुकुमारकलाविभागस्याधिजगामाध्यक्षपदम्। भारतीयप्राकृतभाषाणामध्ययनार्थं तद्विषये विशिष्टोपपद-

प्रदानार्थं च व्यवस्था सञ्जाता। एकषष्ट्यधिकाष्टादशशततमखृष्टाब्दे येन विश्वविद्यालयेन प्रवेशिकापरीक्षार्थिनां स्वमातृभाषया प्रश्नानामुत्तरदानव्यवस्था प्रतिसंहृता, येन च पुनश्चतुःषष्ट्यधिकाष्टादशशततमे खृष्टाब्दे निःशङ्कं बि-ए-परीक्षायाः पाठ्यभूतेभ्यो विषयेभ्यः प्राकृतभाषाणामपाकरणमप्यनुष्ठितम्, तस्यैव विश्वविद्यालयस्य भारतीयेन प्रधानतमाध्यक्षेण द्वाविंशत्यधिकोनविंशतिशततमे खृष्टीये वर्षे सोत्साहमभिहितम्—"भारतीयानां प्राकृतभाषाणां कृते संस्थापितो विशालो विभाग एवाऽऽस्माकीनस्य विश्वविद्यालयस्य वैशिष्ट्यम्, स्वदेशानुरागिणां जनहितव्रतिनाञ्च नगरवासिनां नूनमनेन जायेत सुमहद् गर्वकारणम्"—इति। बृटीशपरिपालितस्य भारतस्योच्चशिक्षाया इतिवृत्ते विद्यार्थिनां सविधे भारतीयशिलालिपिविद्याया भारतीयसुकुमारकलाविद्याया भारतीयप्रतिमालिखनविद्याया भारतीयमुद्राविद्याया भारतीयप्रत्नलिपिविद्याया भारतीयस्थपतिविद्याया भारतीयार्थशास्त्रस्य भारतीयसामाजिकजीवितस्य भारतीयराजतन्त्रस्य भारतीयधर्मशास्त्रस्य भारतीयज्योतिःशास्त्रस्य भारतीयगणितस्य भारतीयजात्युत्पत्तिशास्त्रस्य चोपदेशदानप्रचेष्टनमप्यत्रैव तावत् प्रथमं जातम् इति सुव्यक्तेनैव सन्तोषेणोपलक्षितेन तेन समुद्घोषितम्। पञ्चशतानि वर्षाणि यावद् वृद्धिं गतायाः शिक्षापद्धतेर्विलीयमानां वीथिं समुद्दिश्य च समुदीरितं तेन स्वकीयं मतम्। सर्वतोभावेन भारतीयानादर्शानवमत्य परायभूतया प्रतीच्यसंस्कृत्या प्राच्यस्याऽऽधुनिकतोत्पादनचेष्टितं साम्प्रतं निष्फलमेव जातम्। मन्ये स्वेषां विदेशीयत्वेन हेतुना जातीयजीविते नैव बद्धमूलतां जगाहिरे भारतीया विश्वविद्यालयाः। गच्छतु जातेः समुन्नतौ निम्नतां गताऽपि प्रतीच्यसभ्यता मा नामास्मदीयां सभ्यतां जातुचिदतिक्रामतु समूलमुन्मूलयतु वा तस्या वैशिष्ट्यानीति भाषमाणेनोपसंहृतं तेन स्वकीयं वाक्पाटवम्।

कलिकाताविश्वविद्यालयस्य प्रतीच्यशिक्षाशिक्षितेषु भारतीयेष्वेव न केवलं दृश्यन्ते स्वदेशस्यातीतवृत्तविषये द्रुतमुपचीयमानस्य गौरव-बोधस्य लिङ्गानि। पुराणवस्तुशास्त्रविषयिण्या अनुज्झितक्रमाया अन्वेषणायाः प्रसूतिसम्पादनायोत्तरवङ्गेषु दशाधिकोनविंशतिशत-तमे खृष्टाब्दे कतिपयैरेव भारतीयैर्विद्वद्भिः संस्थापिता काचित् सभा। क्षीणभूयिष्ठायां खृष्टीयाष्टादशशताब्द्यां लब्धोदयस्य प्रथि-तस्य पालवंशस्य निवासस्थानम्—बौद्धसंस्कृतेः सुमहत् केन्द्रं संस्कृतसाहित्ये "वरेन्द्र" इति नाम्ना परिचितं विशालं भूखण्ड-मेवाभूत् तेषां कर्मभूमिः। ऊनविंशत्यधिकोनविंशति-शततमे खृष्टाब्दे नभेम्बरमासि तस्याः सभायाः कार्याणां प्रथमफलस्य विस्मयावहस्य दुर्लभवस्तुसं[illegible]नन्दानुभवनसमये पञ्चदशाधिकत्रयो[illegible]ख्यका हस्तलिखिता ग्रन्थाः, स्वर्णरजत-ताम्रमुद्राः, भारतभूमावाविष्कृतानां ताम्रशासनानां कानिचित् प्रत-तमानि ताम्रशासनानि, काश्चिद् धातुनिर्मिता मूर्तयः, किय[illegible]-मिताः प्रस्तरमयाः प्रतिमाश्चेत्येतानि मया तत्र समवलोकितानि।

अर्थवन्ति खल्वेतानि सर्वाणि। आङ्गलभाषाया आङ्गलशिक्षा-याश्च चमत्कारकारिणः साम्प्रतिकाद् विकाशात् पूर्वं बृटीशैरनुभूतस्य दशाविशेषस्य भारतेष्वपि परिलक्ष्यते पुनरावृत्तिः। यथैवोनविंश-शताब्द्यां भारतीयैस्तेषां शिक्षार्थं वैदेशिकभाषायाः प्रयोजनमन्व-भावि, तथैव षोडशशताब्द्यां तत्पूर्ववर्तिनि च काले ग्रेट्बृटेन्-देशी-यैरपि तत् समनुभूतमिति, यत् सत्यमेतदस्माभिरन्तरान्तरा विस्मर्यते। ऊनविंशशतकोपक्रमे भारतीयप्राकृतभाषाभिरधिगता दुर्दशा न च न प्रत्यक्षीकृता शतकानि व्याप्याऽऽङ्गलभाषयाऽपि। नीचजनजल्पितेव सावज्ञं सा ( आङ्गलभाषा ) परित्यक्ता शिक्षित-समाजैः। ग्रन्थनिबद्धेन विशुद्धया वाचा च स्वर्गगतै[illegible]धमानैश्च महात्मभिः संसर्गमभिलाषिणो जनस्य लेटिन्-भा[illegible]रेक्षार्थ-

मेवेति केनचिद् गुणिकेन वयं स्मारिता लेखकेन। याजको वा शासको वा मन्त्रणाकुशलो वा किमपीह न गण्यते। वैज्ञानिको वा वैद्यो वा व्यवहारज्ञो वा पण्डितो वा यथा तथा वाऽन्यो भवतु नाम कश्चन सर्वथा तेनाऽऽन्तर्जातिकभाषितेनैवास्खलितं वक्तव्यम्, ससौकर्यं लिखितव्यं पठितव्यञ्च। आङ्गलभाषाविनिर्मितानां पुस्तकानामभावादधिगन्तव्यमेव तेन लेटिन्भाषितम्। विना लेटिन्भाषितम् अध्ययनम् अध्यापनं वा किमपि नाऽऽसीत् तदा साध्यम्। परं शनैः शनैरविज्ञातञ्च स्वकीयैरेव परिच्छदैरुपलक्षितं विकाशविशेषमधिगन्तुं समचेष्टत सर्वथा इंलण्डीयानामात्मा। तासु शताब्दीषु प्रचलिताऽशिष्टाऽस्थिरा च प्रादेशिकी भाषा साम्प्रतम् अष्टादशकोटिपरिमितानां मानवानां मातृभाषा। युरोपीयासु भाषास्वस्या एव दृश्यते सुबहुलः प्रचारो जगतीस्थितेषु सर्वेष्वेव महादेशेषु। अतः खलु नवीनभारतस्य स्वकीये बुद्धिविषयके क्षेत्रे बद्धमूलतालाभप्रयत्नः सहानुभूतिविशेषमेवार्हति इंलण्डदेशवासिनाम्। राजनीतिक्षेत्रे पुनरुत्थानभावोऽन्यायेन पथा परिचालयन् भारतं विधमानायाः शृङ्खलायाः प्रतिकूलाय विद्रोहाय यदि नाकल्पिष्यत, तदा तदिदानीं नूनम् इंलण्डीयानां गभीरां विपुलाञ्च सहानुभूतिम् असंशयमेव प्राप्स्यत्। एतद्विषये सञ्चिन्तनीयं खलु सप्ताधिकोनविंशतिशततमख्रीष्टाब्दादूर्ध्वं दशवर्षाणि यावत् स्थितं दारुणराजनीतिकापराधानामनुयोगाधीनं वङ्गीयं राजपरिवृत्तिसमान्दोलनम्। पूर्वाचरितकार्याणां पुनरनुष्ठानक्षम तादृश एव कस्मिंश्चिद् दृश्ये अहोवत सञ्जाता साम्प्रतमप्यशुभावहा तस्यैव पुनरागतिः। सापराधराजद्रोहस्य प्रवर्तकैः प्रणोदितानां केषाञ्चिद् वङ्गीयतरुणजनानां भावप्रेरितोत्साहस्याविनीतापव्यय[illegible]वार्ताया नास्ति मन्येऽधिकतरदुःखदायिनी काचिदपरा कथा नवीनभारतस्येतिहासे। एतद्विषयकाद्विचारादेव तत् सर्वं क्रमेण प्रकटीभविष्यति।

# अष्टमोल्लासः

## विकृता स्वदेशप्रीतिः

भारतीयराजपरिवृत्तिसमान्दोलनसम्बद्धानां सापराधराजद्रोहाणां स्वरूपप्रसारादेर्निरूपणं विवृतिप्रदानञ्चाभिप्रेत्याष्टादशाधिकोनविंशतिशततमे खृष्टाब्दे जानुयारीमासि महामान्यस्य सम्राज उच्चतमविचारालयस्य राजकीय-व्यवहारासनविभागस्य विचारपतेः अनारेबल् मिष्टार् जाष्टिस्-राउलट्-महोदयस्य सभापतित्वेन कलिकातायां नगर्यां सञ्जाता काचित् सभा। एप्रिल्मासस्य पञ्चदशदिवसे समुपन्यस्ता तत्सदस्यैः शासकसविधे काचिद् विवृतिः। बलाद् भारतभूमेर्बृटीशशासनस्यापाकरणमेव तैरालोचितानां सर्वेषा मेव राजद्रोहाणां समुद्देश इत्यभूत् तेषां सिद्धान्तः। विरूपितस्य धर्मस्य विकृतायाः स्वदेशप्रीतेश्चैकस्मादेव व्यापकात् समान्दोलनाज्जातो वङ्गीयो राजपरिवृत्तिविषयको विप्लव इति सविशेषमेव तैर्भणितम्।

षडधिकोनविंशतिशततमे खृष्टाब्दे वङ्गेषु समान्दोलनमिदं विप्लवाकारं दधौ। ततः प्रभृति दशसु वर्षेषु विप्लवपरम्परा विशेषिताऽभूदुपांशुघातैः।

षडधिकोनविंशतिशततमात् खृष्टीयाद् वर्षात् सप्तदशाधिकोनविंशतिशततमखृष्टाब्दं यावदेकविंशतिर्नगररक्षिणो विप्लविभिर्घातिताः प्रेसिडेन्सि-विभागे। विहाय च तानेकस्य राजकीयाभियोक्तुः, विद्यालयद्वयस्य प्रधानशिक्षकयोः, राजद्रोहिदलस्य सभ्यानां

प्रतिकूलतया साह्यदानात् साचिव्यस्य, शासकस्य चरत्वं तूप्रेक्ष्य [illegible]संख्यकानां जनानाञ्च घातनमपि तैरनुष्ठितम्। वङ्गेषु तत्-काले साकल्येन द्व्यशीतिसंख्यका जनास्तैर्घातिताः, एकविंशत्य-धिकशतपरिमिताश्च जनाः क्षतविग्रहतां नीताः। कियद्भिश्चिदुच्चपद-स्थितै राजपुरुषैः सममेकस्य प्रतिशासकस्य, कस्यचित् प्रादेशिक-विचारपतेः, कस्यचन प्रादेशिकधर्माधिकारिणश्च हननेऽपि तैः प्रदर्शितो यत्नः। त्रयोविंशत्यधिकोनविंशतिशततमे खृष्टाब्दे आगष्ट्-मासस्य तृतीये दिवसे कस्यचन भारतीय-पत्रवाहाध्यक्षस्य नृशंस-घातनम्, चतुर्विंशतिशततमे खृष्टाब्दे जानुयारीमासस्य द्वादशेऽहनि युरोपीयैरध्यासिते स्थानविशेषे उन्मुक्तराजपथे प्रकाश्यदिवालोके कस्यचिद् वणिजो वाणिज्यपरिचालने सहायतां गतस्याऽऽङ्गल-देशीयस्य जनस्य निष्ठुरोपांशुहननञ्चेत्येतौ विशेषेण वीभत्सावप-राधौ त्रयोविंशत्यधिकोनविंशतिशततमे खृष्टाब्दे नवीभूत्वाविर्भूता-देव राजद्रोहाल्लब्धप्रणोदनौ सन्तौ मालिन्यजननायैवाकल्पेतां वङ्गानां यशसि। "कश्चिदुच्चपदस्थं राजपुरुषं निहन्तुकामेन मया भ्रमा-देवास्यानुष्ठितं घातनमि"ति स्वीकुर्वतोऽपराधिनो वचनं न च नाभव-दरुन्तुदम्। "आशास्महेऽस्मदसमाप्तमिदं कर्म समापयिष्यन्त्यस्मत्-परवर्तिनः" इति विचारालयेऽपराधिजनोचितं स्थानमधिकुर्वताऽपि तेन सावलेपं समुद्घोषितेन वचनेन हत्याया नृशंसतरत्व-मेवोद पादि। दारुणं हि स्वरूपमेवंविधराजद्रोहात्मककार्ये[illegible] प्रवर्तनक्षमायाः प्रणोदनायाः।

भारताद्बहिःस्थितेभ्योऽपि समुत्पत्तिस्थानेभ्योऽसन्दिग्धमेव समधिगतः समान्दोलनेनांशविशेषः स्वकीयस्य वेगस्य। महासमर-समये राजद्रोहस्य चास्य प्रवर्तकेषु केचिद् जार्माणदेशीयैः प्रतिनि-धिभिः कुटिलैरुपायैः संस्पर्शं लेभिरे। राजद्रोहा[illegible]-स्याऽऽधुनिकोपचितिं राशियादेशस्य वैरभावं चान्तरा परिलक्ष्यत

एव किञ्चन साहम्यम्। अनपेक्षणीयमेव मे [illegible]ऽऽमूला-दनुधावनम्। ये केऽपि भवन्तु तेषां समुद्देशाः करिष्यतेऽत्र मया तेषां तस्या एव रीतेः परीक्षणं यया तै राजभक्तानां पितॄणामनल्प-संख्यकास्त[illegible]स्तनया दारुणे विप्लवात्मके कर्मणि ससाफल्यं विनियुक्ताः। एवंविधानामेव जनानां मानसिकवृत्त्या स[illegible]त्पाद्यते खल्वैकान्तिकाग्रहस्य सुसूक्ष्मो विचारः। कारागारपरि[illegible]र्शनावसरे नगररक्षिराज[illegible]रुषघातापराधेनाभियुक्तैः कैश्चित् तरुणैः सह कृतो मया संलापः। ते तु सर्व एवाऽऽसन् "भद्रलोक"-श्रेणीगता मध्यमवित्ता हिन्दवः। नैव तैः प्रदर्शितः स्वद[illegible]ः, परं सापराधजनोचितेन दुःखेन सर्वतोभावेनासंस्पृष्टा इव ते विरेजिरे। सत्यपि व्यक्तिगतविद्वेषस्यात्यन्तविरहेऽवस्थाविशेषवश्यस्याऽऽत्मनः कस्यचि[illegible]पुरुषस्योपांशुवधविषयके दलेऽवस्थानात् तेष्वेकः पुष्यन्नपि निर्व्यलीकं मनस्तापं स्वकर्मणो नाय्यत्वेऽसन्दिग्ध इव समलक्ष्यत।

समान्दोलनविषयकेण साहित्येन विशेषतो राजपरिवृत्ति-साधनोचितदलनिर्माणविषयकसुविस्तृतपद्धतिगर्भितेन लेखप्रमा[illegible]न च समान्दोलनस्य दशाविशेषोऽयं सविशेषं प्रकटीक्रियते। सङ्घस्य [illegible]र्वेषामेव सभ्यानां मुक्तिरेव तावन्मुख्योऽधिगन्तव्यो विषय इति [illegible]नायामेव तत्र ग्रन्थकृद्भिः प्रतिपादितम्। तस्यैव [illegible]किरूपस्या-भिलषितलक्ष्यस्यावाप्तौ केषाञ्चन सारवदुपायानां समुल्लेखोऽपि तैः कृतः। [illegible]र्वावयवेन प्रजाया हिन्दूनामाध्यात्मिकसंस्कृतेः पुनरुज्जीवनं बिना मुक्तिः सुदुर्लभेति तैर्भणितम्। भारतीयैरेव परिचालितेषु स्व[illegible]ीयेषु शिक्षाप्रतिष्ठानेषु स्वदेशीयां शिक्षां समधिगम्य जातीय-चरित्रस्यो[illegible]कर्षसाधनं [illegible] आध्यात्मिको भाव इति तैर्दत्तं व्याख्यानम्। एतदर्थमेव प्रथमं समपेक्षणीया सम्पूर्णाङ्गी राजनीतिक-[illegible]धीनता। समासेन परिसमाप्ये[illegible] प्राथमिकं व्याख्यानं लेखकेन

सङ्घस्य सृष्टेर्दत्तं सविस्तरं किञ्चिद् वर्णनम्। शिक्षा, साहित्य-विस्तारः, चरित्रनिर्माणम्, विनियमनम्, वैदग्ध्यम्, धनागतिः, शक्तिवर्धनञ्चेत्येतेषु विभिन्नेषु विषयेषु सङ्घस्य सोत्साहाः कर्मिणोऽलभन्तोपदेशान्। साकूत एवाऽऽसीच्चरमोक्तविषयस्योपदेशः। विद्यालयानां शिक्षकाः, महाविद्यालयानामध्यापकाः, जनहितकामाः सङ्घाः, धर्म्याः शिक्षालयाः समाजाश्च, विभिन्नप्रकाराश्छात्रावासाः पुस्तकालयाश्चेत्येते सर्व एवापरे च केचन विनियुक्ता अभवन् नवीनसभ्यसंग्रहे कर्मणि। नवागतैः सभ्यैः सममालोचनीयानां विषयाणां दृश्यते तत्र सुष्ठु सङ्कलनम्। मानवजातेः स्वरूपम्, तदीयावस्थितिस्तत्कारणञ्च, तस्य जन्म, जगति जीवितधारणस्य हेतुः, जगता स्वीयपारिपार्श्विकावस्थया च तस्य सम्बन्धः कर्तव्यञ्चेत्येतेषां खलु विषयाणां जिज्ञासनमभूत् ततस्तत्सविधे कार्यम्। पृष्ट्वैतान् व्यापकान् प्रश्नान् विशेषप्रश्ना अपि केचन तत्समीपे समुपस्थापनीयाः। प्रष्टव्यः स ततो भारतं प्रति तस्य कर्तव्यानि। ततो भारतस्यातीतानागतविद्यमानदशानाञ्च धर्म्यम्, सामाजिकम्, राजनीतिकञ्च चित्रं प्रति समाकर्षणीयं तस्य चेतः। भविष्यद्भारतस्य चित्रं तदीयप्रयत्नस्य लक्ष्यत्वेनैव वर्णनीयम्।

दार्शनिकं धर्म्यञ्च शास्त्रं पठनाय तस्मै देयम्। धर्मः स्यात् तस्य लक्ष्यम् नैतिकसन्देहाश्च तस्य परिचालका इति, धर्मार्थं प्रेरितं हि जीवितं कर्तव्यपरिपालनं श्रेष्ठो विधिरिति च स विज्ञापनीयः। सर्वे स्वं स्वमात्मानम् अहङ्कारादेर्वर्जनेन देवायतनमिव पवित्रं कुर्युः; निजजीवितसमस्याविषयकचिन्तने धर्म्येणैव भावेनानुप्राणिता गौरवं दध्युः; परितः परिवर्तिनां जनानामपरिहार्यं प्रयोजनञ्च सततं समनुतिष्ठेयुश्चेत्येतदपि समुद्घोषितं लेखकेन। चरमतश्च सङ्घस्य यथार्थां सभ्यपदवीमभीप्सुना जनेन राजनीतिकस्य नैतिकस्य चैक्यस्य लालसयैव सर्वथा सम्यक्तया च परिगतेन भवितव्यम्।

सा तावल्लालसा कस्यचिन्महतः, प्रमाणतया परिगृहीतस्य च भावस्योपरि प्रतिष्ठिता। स्वदेशप्रीतिर्वा, भारतसपर्या वा, सत्ये पवित्रतायाञ्च भारतीयानां पुनः प्रवर्तनरूपस्य भारतीयभागधेयस्योदारा कल्पना वा, तस्य भावस्य स्वरूपम्।

भारतीयमनोवृत्तेर्वैशिष्ट्यस्याध्यात्मवादस्य प्रमाणीकरणादेव नवीनसभ्यानां संग्रहस्य सफलता जातेत्यत्रोल्लिखितस्य लेखप्रमाणस्य सुसंक्षिप्तवर्णनपाठेनैवावधूयते सन्देहगन्धोऽपि। शासनपरिपालने तैर्यो हि नाम परिदर्शितोऽनुरागविशेषस्तस्य बहून्येव निदर्शनानि प्रदर्शयितुं शक्यन्ते। कस्यचिदुच्चशिक्षालयस्य केनचिद्ध्यापकेन प्रणोदितः सन् कथं कश्चित् तरुणो विद्यार्थी समान्दोलनेन संश्लेषं लेभे, तत् तेनैव सुस्पष्टं वर्णितम्। "डिसेम्बरमासादेव शिक्षकमहोदयेन समारब्धं मत्सविधे धर्माणां नैतिकानाञ्च विषयाणां व्याख्यानम्। उपदिष्टोऽस्मि तेन ब्रह्मचर्यानुष्ठानाय [ब्रह्मचर्यविषयकज्ञानार्जनाय] क्रीडादेर्विवर्जनाय च। प्रदत्तानि तेन मे धर्म्याणि नीतिविषयकाणि च पुस्तकानि। देशस्य हितमेव लक्ष्यीकृत्य संस्थापिता तावदास्ते "अनुशीलनसमिति"-समाख्या काचन सभेति विषयः क्रमेण तेन मद्बुद्धिविषयतां नीतः। समर्थ्यन्ते तावत् समित्याऽनया हत्या दस्युकर्माणि चेति विषये नासीन्मे प्रथमं ज्ञानम्, परं शनैः शनैर्मयैतद् बुद्धम्।"

अनेनैव कपटेनोपायेन राजद्रोहसमान्दोलनस्याभवदुप्तं बीजम् इत्यस्य कथितचरं वृत्तमेव सुष्ठु निदर्शनम्। ब्रह्मचर्याभ्यासाय—"ब्रह्मविषयकज्ञानानुशीलनायेति यावद्"—अनुशिष्टोऽभूद् बालकः। ब्रह्मचर्यशब्दस्यार्थस्य गौरवं सुविदितमेव हिन्दुबालस्य। मनुसंहितयाऽनुशिष्टस्य ब्राह्मणवर्णस्य कठोरं संयतञ्च जीवितं सुव्यक्तमेव ब्रह्मचर्यशब्दोऽद्यापि स्मारयत्यार्यतनूजान्। चतुर्षु स्तरविशेषेषु मनुना विप्रवर्णस्य जीवितं विभक्तम्। तत्र वेदाध्ययन-

कठोर-नियम-परिपालनरूपं ब्रह्मचर्यं तावत् प्रथमः, गृहिजनोचित-कर्तव्यैरुपेतं गार्हस्थ्यं द्वितीयः, आत्मपरिशुद्धये समाजादिकं विहाय वनाश्रयणात्मकं वानप्रस्थत्वं तृतीयः, सर्वतो भावेन संसारबन्धनं छित्त्वा सन्न्यासावलम्बनरूपं भैक्ष्यञ्च चतुर्थः। अपरश्चैतेन जायते तस्य मनसि विशिष्टः कश्चन भारतीयो भावः। स्वस्य भारतीयत्वमेव तस्य तद्भावागमे कारणम्। भारतस्यातीतस्य विषयस्य चिन्तनाय प्रणोदितेन तेन भारतस्य वर्तमानदशया तस्य तुलनं सम्यक स्वाभाविकमेव। अतीत-वर्तमानयोर्दशाविशेषयोः परिचिन्तनाद् भविष्यद्भारतस्य कृते कस्यचन चित्रस्य परिकल्पनमाशंसनं वाऽव-धारितमेव।

विदग्धयाऽनया सविनयप्रार्थनया वङ्गीयानां तरुणानां मनांसि कथमपाह्रियन्त तन्मतुसमीपे समुपस्थापितेभ्य इतरेभ्योऽप्युपन्या-सेभ्यो मया सम्यक् समधिगतम्।

एतद्विषयाकृष्टमानसेन केनचिद् वङ्गीयेन तरुणेन लिखितम्—
"आ बाल्याद् धर्मप्रवणोऽहमासम्। पीडितानां सेवा दरिद्राणां भरणञ्च मे तदास्तां करणीये। समनुभूतो मया तदानीं कश्चिन्निर्वेद-विशेषः। विमृष्टञ्च तदानीं मया दरिद्राणां दुर्गतानाञ्चावस्थायाः समुन्नतिसम्पादनमेव मे जीवितस्य स्याल्लक्ष्यम्। एवम्भूते काले समधिगतं मया कस्यचिदप्रकटनीयनामधेयस्य पुरुषस्य दर्शनम्। तेन साकमेतद्विषयकं सञ्जातं मे किञ्चिज्जल्पितम्। कियद्भ्यश्चिद् दिवसेभ्यः परं पुनरप्यासादितो मया तदीयः संसर्गः। मामकीनाया धर्मप्रवणताया अनुगुणमेव किञ्चिदुक्त्वा प्रोत्साहिता तेन मे चिन्ता-धारा। पुनर्गच्छत्सु केषुचिद् दिवसेषु "देशेर कथा"-समाख्यं दत्तं तेन मे पठनाय किञ्चन पुस्तकम्, मयापि च तत् पठितम्। तस्य पुस्तकस्य पठनात् स्वदेशवासिनां जनानामतीतगौरववार्तानां वर्त-मानायाः शोचनीयायाश्च दशायाः परिज्ञानाच्च मनसि मे समुपस्थिता

काचित् समुद्दीपना। असन्दिग्धमतेर्मे तेनाभूद् गाढः प्रणयः। अन्तरान्तरा समजन्यावयोर्मध्ये धर्म्यः संलापः। धर्मो राजनयश्च न सहेते पारस्परिकं विश्लेषम्, स्वदेशवासिनां मङ्गलसाधनमेवास्माकं परमं कर्तव्यमित्यादिभिरक्षरैर्धर्मप्रवणे मे मनसि निवेशितास्तेन क्रमेण राजविप्लवस्य भावाः।" ततः कथं लेखकेन विवेकानन्दस्य "पत्रावली" समाख्यातं पुस्तकं लब्धम्, कथञ्च पुनस्तस्मादेव पुस्तकात् स्वदेशवासिनां हितमभिलषितवतस्तत्प्रणेतुरात्मोत्सर्गवार्त्ता तेनाज्ञायत, तत् सर्वमेव तेन पत्रे समारोपितम्। ततो न पठितानि चेत् त्वया वङ्किमबाबुविरचितानि पुस्तकानि तदाऽवश्यमेव पठितव्यस्त्वया 'आनन्दमठः' इति स तेनाप्रकटनीयनामधेयेनोपदेशकेनाभिहितः। तथा समनुष्ठितवति तस्मिन् तेनैवोपदेष्ट्रा कथाया नीतिम् आश्रित्य तेन समं समालोचितम्, जनानामिच्छाधीनं हि देशस्य मङ्गलसम्पादनमित्यपि प्रदर्शितञ्च।

एवंविधानां प्रमाणानां सुविपुलात् संग्रहादेव समान्दोलनेन समं सुसंश्लिष्टानाम् उद्दीपनपरवशानां तरुणानामादर्शविशेषान्वेषणायैकान्तिकाग्रहपोषणं परिस्फुटतया ज्ञातुं शक्यते। परं प्रायेण सर्वथा राजद्रोहात्मकानां कर्मणां समनुष्ठानादेवोत्थिताभिर्विद्वेषधूलिभिर्नश्यति स आदर्शस्तेषां लक्ष्यपथात्। धाराद्वयेन सनाथीकृतं विप्लवास्त्रं तत्प्रयोक्तॄणामपि स्वार्थसाधने विनियुक्तमभूदित्यत्र विद्यन्त एव तावद् बह्व्यः कथाः। उच्चादर्शलाभाय दस्युवृत्तिं स्वीकुर्वञ्जनो नातिचिरादेव स्वार्थसिद्धयेऽपि तां प्रयोजयेत्। शिक्षितेषु वङ्गीयमध्यमवित्तेषु दारुणं सन्ततमास्त आर्थिकं दैन्यम्। दलीयस्य कोषस्यापहरणात् सर्वदैव राजद्रोहिषु पर्यलक्ष्यन्त कलहाः। आर्थिकादेव दैन्याज्जातेयं खलु तेषामवनतिः। आदर्शविशेषलाभायाऽऽश्रितचौर्यस्य साधारणचौर्यत्वप्राप्तिः क्रमेण स्वत एव जायते।

तथापि य एव तावदादर्शो हिन्दुजातेः पुरातनसंस्कृतेः पुनरु-

ञ्जीवनप्रचेष्टा ; य एव तावदादर्शः पूर्वतनेषूल्लासेषु वर्णितस्यात्यन्तप्रतीच्यतापादनस्य प्रतिकूलतयोत्थितायाः प्रतिक्रियायाः स्वाभाविक उपसिद्धान्तः, स एव खल्वादर्शस्तत्रैवाऽऽसीत् स्थिरः। प्रच्छन्नसंसदां श्रेणीषु भारतीयार्यजातेर्विशिष्टशिष्टैरुत्तराधिकारिताविषये सचेतनानां मध्यमवित्तानां हिन्दूनां न तु महम्मदीयानां कर्षकाणां वा स्थितिरूपाद् एवैतस्माद् विषयाद् वङ्गीयराजद्रोहसमान्दोलनस्य विशिष्टहिन्दुप्रकृतिकतायाः प्रकृष्टं व्याख्यानं लभ्यते। वङ्गीयं वैप्लविकं समान्दोलनं मूलतो हिंसात्मकस्यास्येच्छाविशेषस्यैवाभिव्यक्तिः। इयमेवास्य भारतीयै रेव विहिता व्याख्या। राजद्रोहिदलेनाऽऽश्रितायां सरण्यां पुष्यन्तोऽपि मतभेदं केचन भारतीयाः स्वदेशीयानामाध्यात्मिकज्ञानेषु सानुरागं विस्मयं स्वजातेः पुरातन संस्कृतेर्नवीनतया विकाशाय लालसाञ्च सर्वथा तद्दलान्तःपातिन इव पुपुषुः। विद्यते खलु वङ्गीयवैप्लविकसमान्दोलनस्यैतादृशं व्याख्यानं मत्करतलगतेष्वपि केषुचित् स्मारकेषु पत्रेषु। अवस्थाविशेषस्याऽऽसादनात् समान्दोलनसंश्लिष्टानां केषाञ्चिद् विश्वासभाजनतां गतेन केनचिद् भारतीयेनोपहृते कस्मिंश्चिन्मत्करतलगते स्मारके पत्रेऽपि वङ्गीयवैप्लविकसमान्दोलनस्यैतादृशम् एव दृश्यते किञ्चन व्याख्यानम्। कीर्त्यमानेन संक्षिप्तवृत्तेनैव मन्ये लेखकस्य मतं सुष्ठु प्रतिपादितं स्यात्।

---

# नवमोल्लासः

## व्यतीतप्रशंसा

मद्वर्णितं स्मारकं पत्रं महासमरावसानानन्तरमेवावधानयोग्यस्य दश वर्षाणि यावद् भारतवक्षसि समुपचीयमानस्य राजद्रोहचण्ड-वातस्य व्याख्यानत्वेनैवोपकल्पते। वैदेशिकानां तत्त्वावधानान्मुक्ति-लाभाय भारतीयैस्तदा प्रबला स्वीकृता काचिद्वासना। स्वदेशस्य शासनविधौ इंलण्डस्थितां बृटीश्पार्लमेण्ट-समाख्यातां महासभां स्वकीयवाह्यरूपत्वेनाङ्गीकृतवतो जातीयस्वाधीनताभावस्याऽऽनयनाय यास्तावद् रीतयः शिक्षितैर्भारतीयैः परिगृहीतास्तासामेव रीतीना-मितिवृत्तस्यानुधावनेन समारब्धं लेखकेन तत् पत्रम्।

प्रथमं तावत् प्रतिष्ठापिताऽभूत् काचिद् भारतीयजातीयमहासभा। नेतृभिस्तस्यां कृता वक्तृताः, गृहीताः सङ्कल्पाः, पुनः पुनः प्रार्थनयाऽ-भिलषितवस्तुनः सिद्धयश्च सञ्चिन्तिताः। परं प्रत्यासन्न एवाऽऽसीत् तस्यातिसरलस्य राजनीतिकमतस्य नाशः। क्लीबोचितया याचक-वृत्त्या भारतीयानां स्वायत्तशासनलाभविषयकस्य स्वप्नस्य वङ्गविभागे-नैवावसानं जातम्। वैधैरेवोपायैः स्वाभिलषितां सिद्धिं समन्विष्यतां कार्यस्य शासकमनोवृत्त्यैव परिकल्पितं उत्तरम्। समग्रया जात्या समस्वरेणैव कृतस्तस्य प्रतिवादः, परमरण्येरुदितमिव स निष्फलतां प्रायात्। न केनापि तत् समाकर्णितम्। शासनसौकर्याय वङ्गविभाग-विधायकः प्रबन्धः प्रधानराजप्रतिनिधिना साध्यवसायं समर्थितः समभिनन्दितश्च स इंलिश्-पार्लमेण्ट्-समाख्यया महासभया।

जातीयमहासभाया राजनीतिकं मतं विफलतां भेजे, जनाश्च विरक्ताः सञ्जाताः।

नैराश्यस्य गाढतरेऽन्धकारे सहसा समनुभूत आलोकलव-सम्पातः। तदानीं जापानसंज्ञः कश्चित् प्राच्यगोलार्धोद्भूतो जाति-विशेषः पराजित्य राशियादेशवासिनः प्रतीच्यस्य कठोरशासनमवधूय चासन्दानितायां स्वाधीनतायां स्वकीयमधिकारं सगौरवं समुद्-घोषयामास। ततः प्रभृति वङ्गीयानां मानसेषूज्ज्वलं जज्वाल कश्चि-न्नवीनोऽपारतन्त्र्यस्य स्वाधीनतायाश्चाऽऽशावह्निः। विपिनचन्द्रपाल इत्युदाहृतः समजनि कश्चिदस्य नवीनमन्त्रस्य प्रचारकः। सर्वात्मना साग्रहेण समचेष्टत स स्वदेशीयान् स्वप्रचारितमन्त्रवशगान् विधातुम्। विपिनचन्द्रपालस्यानुपदमेवाऽऽजगामारविन्दघोषः। यः खलु मानवा-त्मनो मुक्तिमन्त्रो वङ्गेषु विपिनचन्द्रपालमहोदयेन प्रचारितस्तमेव मन्त्रं समग्रे भारते वर्षे प्रचारयितुम् अरविन्दघोषः समचेष्टत।

अत्यर्थं स्वाभाविकमेवैतावन्मात्रत्वं वङ्गीयराजनीतिकसमान्दोल-नस्य। निर्णयान् प्रभावयितुं वैदेशिकशासकानां कर्माणि च निरो-द्धुम् अक्षमं स्वेषां दौर्बल्यं दूषयतां केषाञ्चित् पराधीनजनानां योग्य एव कश्चित् सुविदितो विषय एतेन प्रकटीक्रियते। साम्प्रतमासा-दितोऽस्माभिरधिकतरसूक्ष्मालीकस्वभावः कश्चिद् गुरुतरो विषयः। अरविन्दघोषमुद्दिश्य लेखकेन लिखितानि वक्ष्यमाणानि कानिचिद् वाक्यानि। यस्य स्वाधीनतारूपस्य देवदूतस्य पक्षसञ्चालनध्वनिना मुखरितोऽभूद् एशियामहादेशस्तस्य स्वाधीनतारसस्य गूढतत्त्वम्, उच्चपदारोपणम्, गौरवम्, स्वदेशसेवायै स्वदेशीयानां सादरसमा-ह्वानम्, स्वदेशेन पूर्वानुभूते महिमनि तस्य पुनः प्रतिष्ठापनाय स्वदेश-वासिनः समुद्दिश्य सानुरागं प्रार्थनञ्चेत्येतानि भारतीयतरुणाना-मुच्चैरभिलषितानि तदीयकृतिषु सुसन्निविष्टान्यासन्। किं नाधि-गता तया भारतभुवा कदाचित् प्राच्यभूभागस्य प्रधानाचार्यायाः

पदवी? किं न वितता भारतेन तस्य शिष्टिः एशियामहादेशस्य चरमसीमास्वपि? आधुनिकस्य जगतोऽशिष्टताया अतितृष्णा यं नाम भावं नित्यं नाशयितुं यतते, स एव भावो रक्ष्यते साम्प्रतमपि भारतेन। वाचा प्रतिपन्नः परमेश्वरो यत्र कार्यतः प्रत्याख्यायते, तादृशे धर्मध्वजिभिर्जुष्टेऽस्मिन् भुवनेऽधुनापि भारतम् एवैकान्तिकाग्रहेणोपलक्षितं सत् तस्मै पूजामुपहरति। भारतमेव केवलमद्यापि जनयति तादृशान् महापुरुषान्, ये तावद् विहाय श्रेष्ठानपि पार्थिवान् भोगान् जीवितस्य मूलतत्त्वमनुसन्धातुं सततं प्रवर्तन्ते। ऊनविंशशताब्द्यां भारतं विना कोऽन्यो देशो दक्षिणेश्वरस्य सन्न्यासिनोऽनुरूपस्य कस्यचनापरस्य सन्न्यासिनो निर्माणेऽभूद् अलम्। मानवसमाजस्य श्रेष्ठैरभिजातैरुपनिषदां निबन्धकैर्वेदानां निर्मातृभिर्दार्शनिकैः पुरोहितैः स्वेषां वनभवनेषु यः खलु ज्ञानराशिः संगृहीतः संरक्षितश्चाद्याप्यव्ययशीलः स भगवतो ज्ञानं प्रत्यक्षीकरणोपायांश्च जनान् शिक्षयति। वैदेशिकशासनसंरक्षितस्यानात्मवादस्य प्राधान्यापादकेऽस्मिन् साम्प्रतिके काले कथं बताध्यात्मवादः स्वावस्थानेन न वियुक्तो भवेत्। युरोपीयचिन्तायास्त्वचि संवर्धिताया असारायाः शिक्षायाः मूढजनोचितैर्मनसः सङ्कीर्णतासम्पादकैः संख्यातीतैः कार्यजातैरधुनैवोपहस्यते तेषां स्वदेशस्यातीतं वृत्तम्। चित्रं पूर्वेषां ज्ञानस्य दूषणोऽप्येते साम्प्रतं निःशङ्का इव लक्ष्यन्ते। अपि नाम भगवतो मन्दिरस्य विनिमयेन विशालामगौरवकरीमाङ्गलसभ्यतायाः पर्यन्तभूमिं गृह्णीयाद् भारतीयो जनः? स्तोत्रे काव्ये च सुप्रतिष्ठितं वसन्ताधिदैवतं सौन्दर्यम्, क्षुत्पीडितस्य, धर्मं कलाश्चावमत्यापकृष्टानां कुत्सितानाञ्च पण्यद्रव्याणामवपातननिरतस्य, व्यवसायबुद्धिरूपस्य मृगयोः साम्प्रतं लक्ष्यपथं गतम्। अपनोदनीयः खल्वेष स्वदेशस्य सन्निकृष्टो विपत्सम्पातः। येन वैदेशिकशासनेन न केवलं शारीरिकं परमाध्यात्मिकमपि दैन्यं सम्पादितं

भारतस्य, तद्वैदेशिकशासनं कथाशेषतां प्रापयद् भारतमात्मानमद्य रक्षेत्। येनाऽऽदर्शेन प्रणोदितः सर्व आत्मज्ञानानुशीलनेन, गौतमबुद्धानुशिष्टदयाधर्मविषयकज्ञानलाभप्रचेष्टनेन च जीवितकालं नयति, समुच्छ्रितायाश्चिन्तायाः पवित्रजीवितस्य च सर्वाङ्गसम्पन्नः स आदर्शः स्वकरधृतात्मनिर्णयप्रग्रहे स्वाधीने भारत एव स्थापयितुं शक्यते। भारतस्यैतद् भविष्यच्चित्रं मनसि निधायैव स्वाधीनताऽर्जनयोग्यतामाप्तुं समाहूतास्तेन स्वदेशवासिनः, न तु यस्य स्वायत्तशासनस्य धनस्य चैहिकत्वे कृत्रिमदेवत्वमारोप्य तदीयासु वेदिकासु युरोपदेशेन स्वात्मा उपहारीकृतः, यस्मै समुपहरिष्यंश्च स्वात्मानं नूनं कदाचित् स समाप्तिं प्रापयिष्यत्यात्मनः पार्थिवीमपि सत्ताम्, तस्यैहिकफलदान एव क्षमस्य स्वायत्तशासनस्य धनस्य च कृते।

अस्मादेव केवलाद् राजनीतिकसमान्दोलनात् कस्यचनापरस्यापि विषयस्य सुव्यक्तमिङ्गितमस्माभिर्लभ्यते। विशिष्टयोः प्राच्यप्रतीच्यसंस्कृत्योः संघर्षस्य सुस्पष्टो बोधो जायते खल्वेतेभ्य एव वाक्येभ्यः। एकस्याध्यात्मवादोऽपरस्यानात्मवादेन वैसादृश्यमेव दधाति। ग्रन्थस्य पूर्वतनेषूल्लासेषु वर्णितानाम् ऊनविंशशताब्द्याः प्रवृत्तीनां प्रतिकूलाया दारुणायाः प्रतिक्रियायाश्चित्रविशेषमालिखति स ग्रन्थांशः, प्रमाणयति च स हिन्दूनां मानसेषु सुबद्धमूलान् भावान्। अतिगम्भीरमभूच्चास्य फलम्। हृदयस्य स्पन्दने द्रुतताम्, शोणितप्रवाहे उद्दीपनाम्, दीर्घकालं मूकीभूतायां जातीयताबोधतन्त्र्यां कम्पनञ्चान्वभूत् तदानीं हिन्दुजातिः।

नवीनसमान्दोलनस्य नेतारो जनानां मनसो धर्मभावस्य साहाय्यग्रहणे नैव मन्थरा जाताः। विपिनचन्द्रपालम् अरविन्दघोषञ्च समनुसृत्य समाजगाम नवीनजातीयताबोधमन्त्रस्य तेजस्वी प्रचारको वारीन्द्रकुमारघोषः। नियमतन्त्रिणां विरुद्धमुदघोषयदसावधसाधहासान्। भारतसकाशात् प्रार्थितास्तेन तथाविधा जनाः, ये

लक्षशो निर्गत्य स्वदेहशोणितैश्चिरानुभूतायाः पराधीनतायाः कलङ्कमपनेष्यन्ति। अभ्रान्तश्चेद् वारीन्द्रकुमारघोषस्य सङ्केतं व्याख्यातं लेखकेन, तदा "प्रतीच्यस्यानात्मवादेन कण्ठपीडं पीड्यते भारतस्याऽऽत्मैति तस्य भावः" इति वक्तुं पार्यते। त्यक्तोद्यमास्ते चिरायैव दासत्वमनुभविष्यन्ति। "अत आमन्त्रये व्यास-वाल्मीकि-प्रमुखाणां जन्मभूमिम्, वेदानां वेदान्तस्य चोत्पत्तिस्थानम्, गौतमबुद्धस्य भगवतः श्रीकृष्णस्य च लीलाक्षेत्रमिदं भारतम्। आपृच्छेऽहमेष त्वाम् एशिया-महादेशस्याऽऽचार्ये पूर्वसागराणां शासयित्रि भारतभूमि, स्वस्ति ते पालेष्टाइन्-काथे-प्रदेशागतानां तीर्थयात्रिणां निर्वाणमन्दिरभूतायै। नवीनजीवितलाभाय मृत्युसङ्कल्पपरिचालितास्त्वरध्वं त्वरध्वं यूयमतो मे स्वदेशीया भ्रातरः। स्मर्तव्यं खल्वेतद् भवद्भिर्यद्—युष्मच्छोणितसिक्ताद् भूमिखण्डादेव जनिष्येते खलु नराणामुद्धरणशीला काचित् प्रसूनसमृद्धिः, जगतो दोषादोषाणां पुनः समाधानक्षमो नूतनस्य नरत्वस्य फलोच्चयश्च।"

स्वभावत एव कल्पनाशीलो भावप्रवणश्च वङ्गीयो जनः। जात्यभिमानप्रमाणीकरणादेवात्यर्थं विचलितास्ते समभवन्। वारीन्द्रकुमारघोषस्य तत्सहकर्मिणश्च ज्वालामयी वाग्मिता, नवीनसमान्दोलनेन समं संप्राप्तसत्तानां वार्तापत्राणामनियन्त्रितानि लिखितानि च दानवीयां तन्त्रीमिव जनानां मानसं ताडयित्वा तादृशं कञ्चित् तुमुलं कोलाहलं समुत्पादितवन्ति, यादृशः कोलाहलो नानुभूतो वङ्गीयैर्बहुशताब्दीर्यावत् स्थिते स्वेषां राजनीतिके दास्ये।

धर्मशब्दवाच्यो जातीयतावादोऽत्र कस्यचिज् जटिलविषयस्य कारणत्वं गाहत इत्युल्लिखितादस्मात् संग्रहादेव स्पष्टीभवेत्। वस्तुतस्तु भारते भारतीयानां विषयान्तरेष्विव राजनीतावपि दृश्यते धर्मस्य प्रवेशः। प्रतीच्यभूखण्डे तु ते विषयाः सांसारिकतयैव परिगण्यन्ते। नातिचिरात् पूर्वम् इदानीन्तनेषु राजनीति[illegible]देष

मुख्यतामधिगतवतोऽसहयोगसमान्दोलनस्य समालोचनाय वङ्गेषु समाहूतायां कस्याञ्चिद् राजनीतिकोविदानां गोष्ठ्यां प्रधानवक्तुः बाबु-शरच्चन्द्रघोषस्याभिभाषणं श्रुत्वा केनचिदभिहितम् हिन्दु-दर्शनानां तत्त्वानामालोचनमिदं न तु राजनीतिकस्येति। तथैवैतस्मादपि पूर्वतने कालेऽसहयोगसमान्दोलनस्याऽऽविर्भावात् पूर्वं वङ्गीय-चरममार्गिणां नेतृपदेऽभिषिक्तेन, सप्तदशाधिकोनविंशतिशततमे खृष्टीये वर्षे सञ्जाताया वङ्गीयप्रादेशिकजातीयमहासभाया वार्षिकाधिवेशनस्य सभापतिपदमलंकुर्वाणेन सि, आर, दाश-महोदयेनापि पूर्वोक्तरूपेणैव समापितं स्वकीयम् अभिभाषणम्।

सत्यं सर्वैरेव प्रचारकजनोचितैरुत्साहैरुपलक्षितेन दाशमहोदयेन तद् भणितम्। अनात्मवादरूपं युरोपस्याऽऽदर्शं स्वमतेन शकलीकुर्वन् उत्कटः सिद्धजन इव स स्वदेशीयान् योग्ये लक्ष्यपथे परिचालयामास। प्रतीच्यगन्धिषु सर्वेष्वेव विषयेषु भीतिविद्वेषादिभाव-पोषणमेवाभूत् तस्मिन् परिदृश्यमानः प्रभविष्णू रसः। शिल्पं वाणिज्यं शिक्षणं युरोपीया वर्तनरीतिश्चेत्येतानि सर्वाण्येव तेन विनिन्दितानि तीव्रमविचारितञ्च प्रत्याख्यातानि। एतेषामलीकदेवानां पूजनादेव सुखैश्वर्यैर्हास्यमयी वङ्गभूमिः साम्प्रतं दैन्यमृत्यु-प्रभृतीनां निवासभूमित्वेन परिणता। बृटीशशासनाधीनाद् भारतात् तत्पूर्वकालस्य भारतम् अधिकतरसुखसमृद्धीनां निकेतनमासीदित्युदाराक्षरैर्वर्णितं तेनावमत्यैवैतिहासिकं तथ्यम्। "शस्यैः शस्यागाराणि, मीनैश्च सरांस्यासन् पूर्णानि। विमलनीलेन नभसा विटपिनां श्यामलैः पर्णराशिभिश्च तदोदपादि नयनसन्तोषः। दिवसं क्षेत्रेषु भ्रमित्वा सन्ध्यायां क्षुद्रालोकोद्दीप्तं प्राप्य स्वकं मन्दिरं कर्षकाः सानन्दमगायन् सङ्गीतानि। परं ते हि नो दिवसा गताः। साम्प्रतं स्वर्णाभैः शस्यनिवहैः शून्यान्यस्मदीयानि शस्यागाराणि। दुग्धहीनाभ्यो धेनुभ्यो नैव लभ्यते दुग्धम्। मरुस्थलतां

गतानि साम्प्रतं तान्येव श्यामलानि शस्यक्षेत्राणि। पूर्वानुभूतस्य सुखस्य स्मृतिः साम्प्रतिकस्य निरवच्छिन्नदुःखदारिद्र्यस्यावसादश्चैवेदानीमवशिष्येते।" कुतः समागतेयं दीनता मृतिर्वा? प्रश्नस्यास्य यदुत्तरं तेन परिकल्पितं तदेवोत्तरं तस्याभिभाषणस्य गौरवजनने हेतुः। वक्तृताप्रसङ्गेन बहुधा बहुभिरुपायैश्च कृतं तेनैतस्य विघोषणम्। "साधितमस्माभिः स्वजातीयानां विजातीयत्वं विस्मृताश्च हृदयेनाभ्यनुज्ञाताः पूर्वतना आदर्शाः। विगतशताब्द्याः क्रियेत चेदनुधावनं तदा तस्या अस्पष्टाभिर्भीषणाभिः पिशाचाकृतिभिर्जुष्टत्वं नूनं प्राकट्यं लभेत। अतः खलु पुनरप्यहं ब्रवीमि वयमेवात्र दूषनीया इति। नष्टमधुनाऽस्माकं पुरुषत्वम्। पुरुषत्वहीनानां नो जीवितधारणाधिकारं विना विनष्टाः सर्व एवाधिकाराः। मन्दभाग्यैरस्माभिर्विदेशीयानां वणिजां वेदिकायामस्माकं वाणिज्यं कृषिकार्यं शिल्पञ्च सर्वाण्येवैतान्युपायनीकृतानि। भग्नमस्माकं गेहस्थितं तर्कुट्या समं सूत्रनिर्माणचक्रम्, कर्तितमस्माभिरास्माकीनं पाणिपादम् श्वासावरोधेन घातितञ्च स्वकीयायामेव दोलिकायां स्थितं भाग्याधिदैवतम्।"

बृटीशागमनात् पूर्वं समनुभूतानां शान्तिस्वाच्छन्द्यादीनां सुचारु वर्णनं जातीयतावादिनां वक्तॄणां यतः साधारणी सम्पत्तिर्जाता, ततस्तदधिकृत्य किञ्चिदत्र विवदिषामि। कर्षकसमाजपरिलालितः साहित्यविशेष एवैतासामैतिहासिकविच्युतीनां मन्ये संशोधनाय सुष्ठु कल्पिष्यते। बहुशताब्दीर्यावत् पूर्ववङ्गीयकर्षकसमाजानां वंशपरम्परया गीयन्ते खलु कानिचिद् गीतानि। तानि तावद् गीतानि ग्रामस्थितैः कविभिर्देशस्य तात्कालिकीमवस्थामवलम्ब्यैव विरचितानि। वङ्गीयसाहित्यगतानां रत्नराशीनां जगत्या सह परिचितिमुत्पादयितुकामेन राय-दीनेशचन्द्रसेन-वाहादुरेण तेषु गीतेषु कानिचित् संगृह्यानूद्य च साम्प्रतं प्रकाशितानि। तेषु पुनर्दीनेश-

चन्द्रसेन-सङ्कलितेषु गीतेषु विख्यातस्य केनाराम-दस्योः कथा प्रधाना। काव्यनिर्माणकोविदायाश्चन्द्रावत्या मनोहारिणी कृतिरियं षोडशशताब्द्याश्चरमे भागे जातानां विषयाणामैतिहासिकत्वोत्पादनायैवाभूत् सम्पादितेति गीतसंग्रहप्रकाशकेनैव प्रतिपादितम्। अतो बृटीशागमनात् पूर्वं स्थितस्य दाशमहोदयवर्णितस्य सुखमयकालस्य नूनं यथायथं वर्णनमास्ते तस्यां चन्द्रावत्याः कृताविति दृढमस्माभिर्वक्तुं शक्यते।

राजद्रोहेण संपीडितस्य विपन्नस्य च कस्यचिद्देशस्य, शून्यीकृतानां वेश्मभूखण्डानाम्, अस्तव्यस्तशासने स्थितानां क्लिष्टानां भयविप्लुतानां जनानाञ्च वृत्तं सम्यक् समुद्घाट्यते केनारामकथया। दस्युभयेन धरणीगर्भे रक्षितव्यमासीत् तदानीं जनानां धनमिति चन्द्रावत्यैव गीतम्। "रज्जुनिर्मितकण्ठपाशैः श्वासावरोधेन दस्युभिर्घातिताः पथिकाः पथिषु। 'काजी'नां शासनाधीना ग्रामाश्च प्रपेदिरे निर्मक्षिकत्वम्।" केनारामस्य कार्याणि वर्णयन्त्या तया तावदेवमभिहितम्।—"तद्भयाद् वृक्षस्य पर्णान्यपि चकम्पिरे। गेहं सोऽस्मदीयं पश्येदिति भीत्या न केनापि रात्रौ प्रज्वलितः प्रदीपः। सन्ध्यासमागमानन्तरञ्च न कोऽपि भवनान्निर्जगाम।" दिवसं क्षेत्रेषु भ्रमित्वा सन्ध्यायां प्रदीपिकादीपितं स्वं मन्दिरं प्रविश्य सानन्दमगायत् कर्षक इति यत् सोत्साहं वर्णितं दाश-महोदयेन मन्ये मनोहरमेवैतत्तस्य किञ्चन भाष्यम्।

दुर्भिक्षं बृटीश्शासनस्य फलमिति यदुक्तं सानुगेन दाशमहोदयेन तदप्येतेनैतिहासिकेन गीतेन नानुमोद्यते। वङ्गेषु परिदृष्टानां दुर्भिक्षाणां दारुणतमेन दुर्भिक्षेण तत्काले समाक्रान्तोऽभूद् मैमन्सिंह-प्रदेश इति चन्द्रावत्यैव काव्यनिर्मात्र्या समुद्घोषितम्। सुसूक्ष्मं वर्णिता च तया तस्य दुर्भिक्षस्य भीषणता। "बहूनां गृहिणां गृहाः करालस्य क्लेशस्याऽऽवासत्वं दधिरे, शतशो नरा नार्यश्चाम्रियन्त।

विक्रीताः पतिभिः स्त्रियः पुत्राश्च स्त्रीभिः। विलुप्ताश्च तदा सर्वे स्नेहा आचारा भावाश्च। नरास्तदानीं तिर्यञ्च इवाऽऽहारान्वेषणाय दिवसेषु स्थानात् स्थानान्तरं बभ्रमुः।

शस्यपूर्णैः शस्यागारैर्मानसिकेन सन्तोषेण च जुष्टो बृटीशा-गमनात् पूर्ववर्तिकालोऽप्यन्तरान्तरा दुर्भिक्षादिभिः पीडितोऽभूदित्य-त्रास्त्येव तावदतः प्रमाणम्। यद्यप्येतेषां गीतानां मौलिकमाधुर्यस्य कालवशात् कथञ्चिद्विपर्यासो जातस्तथाप्येतेषां सयत्नपठनेन दाश-महोदयनिर्मितस्येतिहासस्योत्कर्षविशेष एवाभविष्यत्।

साम्प्रतं दाश-महोदयस्य वचनानि पुनरालोचयामः। ग्रामाणां ग्लान्यादिकं वर्णयित्वा नगरावस्थावर्णने सञ्जातेच्छः स तात्-कालिकीं वाणिज्यपरायणतां भृशं निनिन्द।

युरोपस्य वाणिज्यपरायणता तावत् कश्चनाभिशप्तो विषय-विशेषः। खृष्टधर्मावलम्बिभिर्युरोपदेशवासिभिर्द्विशतवर्षाणि यावद्-वमत्य 'क्राइष्ट्'मतं बाणिज्यपरायणतैव पूज्यते प्रवृत्यते च क्लेशसंकुले वर्त्मनि। प्राकारस्थितेषु लिखितेष्वभिनिवेशदानं किमासीत् तेषा-मसाध्यम्? गाढेऽन्धकार एतस्य वाणिज्यपरायणतारूपस्य दानव-स्यान्वेषणमपि नाम तेषां समुचितं कर्म? अस्माकं मनोवृत्तौ कदा-चिदपि नासीन्न भविष्यति वा वाणिज्यपरायणतायाः स्थानमित्येतत् सततं सर्वथैवास्माभिः स्मरणीयमेव। क्रियेत चेदस्माभिरस्माकं देशे वाणिज्यपरायणतायाः प्रतिष्ठापनम्, तदा स्वैरेवास्माभिर्विरचितो भवेत् स्वेषां विनाशमार्गः। महाकाया दानवा इव पण्यनिर्माण-स्थानानि क्षीणमनुभूयमानानां नो जीवितानां निष्काशनं विधा-स्यन्ति। पण्यनिर्माणस्थानानां विशालाभिश्चक्रधाराभिः परिपीड्य-माना गतजीविता वयं प्राणहीना यन्त्रविशेषा इव भवामः। एवं प्रकारेण नीरक्तीकृतेष्वप्यस्मासु शोणितलवपरिस्थितिं समुत्प्रेक्ष्य लिहन्तोऽस्मान् कथाशेषतां प्रापयिष्यन्ति सुदूरस्थिता धनिनः।

शृं खलयेव प्रतीच्यशिक्षापद्धत्याऽधुना संयन्त्रिता अस्मद्देशवासिनः। गुरुगृहात्, गार्हस्थ्यधर्मशिक्षाप्रतिष्ठानात्, यात्राभ्यः, कथकताभ्यः, चण्डी-रामायणविषयकेभ्यो गीतेभ्यः, संकीर्तनेभ्यः स्त्रीजनानुष्ठितव्रतेभ्यश्च जनानां हितकारिण्याः शिक्षाया विस्तारो जातस्तदानीम् आर्यावर्तस्य सुखसमृद्ध्यादीनां समये। अपरे आदर्शा इव शिक्षाया आदर्शोऽपि समधिगतः साम्प्रतं दारिद्र्यं नीचताञ्च। निर्मितोऽस्माभिरिदानीं विशालः कश्चिद्विश्वविद्यालयः। परम् स्वभावविरुद्धाया अस्याः शिक्षापद्धत्या जायन्ते जनिष्यन्ते च बहव एव तावद् दोषाः। शिक्षापद्धत्याऽनया अनावश्यकस्याऽऽङ्गलभावस्य निवेशनं क्रियतेऽस्माकम् आचारेषु वर्तनरीतिष्वपि। तेन च हेतुना आधुनिकशिक्षाप्राप्तो वङ्गीयो जनः प्रतीच्यशिक्षामनासादितवतां स्वदेशीयानां हृदयेनाप्यसम्बद्ध इव प्रतीयते। अनयैव तावद्रीत्या नश्यति खलु वङ्गानां मतिप्रकर्षोऽपि। अपरेषु देशेष्वपरासु जातिषु वा भवतु नामेयं रीतिः सम्यक्तया प्रयोज्या तथापि वङ्गेष्वस्याः प्रसारोऽनपेक्षणीय एव। कर्दमनिर्मितः पादयोरुपरि स्थितः प्राणहीनः प्रतिकृतिविशेष इव निःसारेयं रीतिर्जातीयशिक्षामन्दिराद् भङ्क्त्वा दूरीकरणीया। नवीनतयोज्जीवितमस्माकं जातीयभावं यथार्थज्ञानलाभस्य वर्त्मसु परिचालयितुं यदि नाम वयं पुष्यामोऽभिलाषम्, तदा द्वारीभूताभिरस्मद्देशीयाभिरेव प्राकृतभाषाभिः शिक्षायाः प्रसारोऽस्माभिः साधनीयो न त्वहितावहेनाऽऽङ्गलभाषाद्वारेण। साम्प्रतमस्माभिर्या नाम शिक्षा लभ्यते सा त्वन्यस्माद् गृहीताऽनुकरणेन लब्धा च। जातीयमतिप्रकर्षेण समं तस्याः शिक्षायाः सहकारिताऽभावाद् अस्माकं मनोवृत्तेः समुन्नतिसाधने सा सर्वथा निर्वीर्या जाता।

वैदेशिकराजनीतेरनुकरणात् तेषां स्वकीयायां राजनीतावपि नाऽऽसीत् सारः सत्यं वेत्युद्घोषितं वाग्मिप्रवरेण। प्रतीच्यस्य

सर्वमेव तैर्गृहीतम्। ग्रहणावसरे पुनस्तेषामेको मुख्यो विषयस्तैरवज्ञातः। जातुचित् तैर्नो निपातिता स्वेषां दृष्टिः स्वदेशं प्रति। नवा तैर्विचिन्तितः कदाचिद् वङ्गानां विषयः। नाऽऽलोचितश्च तैः पुनर्जातीयेतिवृत्तस्यातीतो वर्तमानो वा दशाविशेषः। अतस्तेषां राजनीतिकसमान्दोलनम् असारं निरर्थकं जनानामैकान्तिकेनाऽऽग्रहेण विवर्जितञ्च जातम्। शिक्षितानां जनानां हृदये गाढमुप्तोऽभूदाङ्गलभावः। पठितं चिन्तितञ्च तैराङ्गलभाषयैव। अकिञ्चित्करादनुकरणाद् अकृत्रिमेषु वस्तुषु समादराधिक्यं पुष्यन्तः स्वदेशस्य साधारणा जनाः प्रत्यादिष्टा आङ्गलभावानुप्राणितैर्जनवर्गैः। एवं रीत्या वाणिज्यं शिल्पं शिक्षा राजनीतिः समाजिकविधिश्चेत्येतेषु सर्वेष्वेवेदानीन्तनेषु विषयेषु दृश्यन्त एवाऽऽङ्गलभावस्य चिह्नानि। आङ्गलभावस्यानुकरणं साम्प्रतमस्माकमावेशविशेष एव। अस्माकं जीवितस्य सर्वेष्वेव वर्त्मसु चेष्टितेषु च सर्वत्रैवाऽऽलोक्यन्तेऽस्माभिस्तस्य कृष्णाः पदाङ्काः। उपकल्पितान्यस्माभिर्देवायतनानां स्थाने सभागृहाणि। रङ्गमञ्चेष्वभिनीय आनन्दानुभूतेः पणयतां विधाय चास्माभिरद्यानुष्ठीयते दानधर्मः। गुटिकापातक्रीडादिभिः क्रियतेऽस्माभिरनाथालयानां सहायता। देशीयं स्वास्थ्यप्रदं क्रीडादिकं वर्जयित्वा विदेशीयाः क्रीडा अस्माभिः प्रवर्तिताः। वेशे चिन्तायां भावे संस्कृतौ चास्माकं साङ्कर्यं जातम्। नच न दृश्यते जन्मविषयेऽपि तत्साङ्कर्यानयनायाधुना मदविक्षिप्ता चेष्टा।

अवतारितवाक्यानां संख्यानं यथेच्छं वर्धयितुं शक्यते, परं, कञ्चिन्मन्त्रं नीतिविशेषञ्च प्रचारयितुं वाग्मिवरेण तथा कृतमिति प्रदर्शनाय मन्य एतावन्मात्रमेवालं स्यात्। वङ्गानां प्राचीनयाऽवस्थया शोचनीयमेव वैसादृश्यं बिभर्त्ति तदीया साम्प्रतिक्यवस्था। प्राच्यप्रतीच्यादर्शयोः पारस्परिकसङ्घर्षोत्थितैर्धूलिभिरन्धीकृतैर्जनैः स्वोपास्यानि दैवतानि विहायादृष्टचराणां दैवतानां वेदिकासु

समनुष्ठिताद् बलिप्रदानादेव समुपस्थितोऽयं व्यसनसम्पातः। परं तत्रैव नाभूद् विरतः स वक्ता। कथं जना उत्पथं नीयन्ते स्मेति प्रश्नस्य श्रोतृवर्गाणां सविधे समाधानं कृत्वा दुर्निमित्तानि विशेषेण तेन प्रदर्शितानि। तेषु दुर्निमित्तेषु जनानां दृष्टिं समाकर्षन् स सिद्धः पुरुष इव लक्ष्यावाप्तेः पन्थानं प्रदर्शयांबभूव। कथं ते विदेशीयान् आदर्शान् अधिगन्तुमस्या लोलुपताया वशं गताः? वङ्गेष्वाङ्गलदेशीयानामागतिसमयेऽवसन्नास्तावदासन् वङ्गदेशीयाः। क्षीणतमासीत् तदानीं तेषां जीवनीशक्तिः, निरर्थकानां भण्डतानामाचरितेन विलुप्तो दयाधर्मोऽवाहसत् तेषां पूर्ववृत्तम्। धर्मस्येव ज्ञानस्याप्यवनतिर्जाता। स्मृतिविषयतां गतास्तदानीं नवद्वीपस्य प्राचीनस्य यशसो वैदुष्यस्य च सम्प्रदायाः; अतः खलु सर्वेषां दुर्बलानामिव तेषामपि जातस्तदा तथाविधः कश्चनावस्थाविशेषः। स्वेषां निःसारतैव तेषामाङ्गलशासनस्वीकरणे बीजम्। आङ्गलशासनस्वीकरणेन सममाङ्गलदेशीयानां शिष्टिसंस्कृतिविलासादिकं सर्वमेव तैः परिगृहीतम्। परं प्राप्तावसरैः साम्प्रतं वर्जनीयं खलु तैस्तदाङ्गलवस्तुष्वाकर्षणम्। प्राचीनासु वेदिकासु पुनरपि संस्थापित एव वह्निः केनचिज्जातीयेन सिद्धेन। कृत एव वङ्किमेन मातृभूमौ मातृत्वस्याऽऽरोपः। समग्रामेव जातिं समामन्त्र्य तेनाभाणि "सुजलां सुफलां मलयजशीतलां शस्यश्यामलां मातरं वन्दस्व, स्थापय च तां स्वेषु भवनेष्विति।" समयः स व्यतीतः। अधिकोनविंशतिशततमात् खृष्टीयाब्दादेव स्वदेशितायाः श्रूयते पटहनिनादः। चण्डवात इव समुपागतः स्वदेशीयान्दोलनप्रवाहः। विपुलो जलोच्छ्वास इव स्वदेशीयान्दोलनप्रवाहः सरभसं प्रविश्य सर्वाणि निमज्जयन् विक्षिपंश्चोदपादयन्नवीभूतां काञ्चन जीवितशक्तिम्। अस्य सञ्जीवके प्रभावे स्थितैर्वङ्गीयैः पुनरप्यनुभूतं स्वदेशस्य वक्षसि निरन्तरं प्रवहति शिष्टि-संस्कृत्योः स्रोतस्यवगाहनसुखम्।

तेषां जातीयेतिहासस्य यथार्थसम्प्रदायविच्छेदं पुनरप्यनुभवितुं जातास्ते तदा योग्याः। नवीनतया प्रबुद्धस्य वङ्गानां जातीयजीवितस्य यथोचितं संपूर्णं चोन्नयनं कथं स्यादित्येवाऽऽसीत् तेषां तदानीन्तनः समालोचनीयो विषयः। पुरोहित इव सिद्धः पुरुष इव वा प्रदर्शितस्तेन तस्य मार्गः। गुणागुणविवेचनोचितेऽस्मिन् जातिनिर्माणकाले समूलमुन्मूल्य युरोपीयमसंयमस्याऽऽदर्शं दूर एव स तैर्निक्षेपणीयः, दृढं श्रयणीयश्च प्रत्नस्य प्राच्यदेशजातस्य स्वार्थत्यागस्याऽऽदर्शः। शिक्षासंस्कृतिविषयिणी कृषिवाणिज्यविषयिणी वा समस्या पुरातन्यैव रीत्या तैः समाधेया। एतेषां विषयाणां प्राचीनसामाजिक-पद्धत्या सम्बन्धोऽपि विवेचनीय एव। नहि तावदेतावतैवालं भवेत्। विचिन्तनीयश्च तैस्तेषां चिन्ताभिश्चेष्टाभिः कार्यैश्च धर्मविषयकप्रश्नस्य सूक्ष्मः सम्बन्धः। एते तावद्विषयाश्चेत् तेषां मतौ नावतिष्ठेरन् तदैतेषामपि विषयाणामसत्यताज्ञानस्य जायेत नूनं काचित् सम्भावना। ग्रहणीयस्तैः स्वजातेर्मतिप्रकर्षस्यानुरूपो विषयः, वर्जनीयो दूरे निक्षेपणीयश्च सर्वो विदेशीयो विषयः। तैः पूर्वं समनुभूता तेषां शक्तेः स्थिरा निरन्तरा च योनिस्तदापि तेष्वेवाऽऽसीन्निहिता। अद्यापि पूर्ववद् वङ्गानां वेगवत्यो विशाला नद्योऽप्रतिहतेन रयेण सागराभिमुखं द्रुतं धावन्ति। प्राचीनकालस्य समुच्छ्रितः स हिमालयोऽद्यापि पूर्ववदेव गगनं परिच्युम्ब्य तिष्ठति। जगतो येषां स्थायिनां भावानामुपरि वङ्गानां जीवितं मनोवृत्तिश्च प्रतिष्ठामलभेताम्, तेषां स्थैर्यं निर्विकारता गौरवञ्च तावदद्यापि तथैवाऽऽसते। गतजीवितानां वङ्गानां पूर्वावस्थाप्रापणं पुनरुज्जीवनञ्च तेषां मृतस्याऽऽत्मनः साम्प्रतं वङ्गीयानामेव कर्म।

वाष्पीययन्त्राणां प्रवर्तनात् पूर्वं सर्वेष्वेव देशेषु परिदृश्यमानेन शिल्पनिर्माणरीतेरुत्कर्षरूपेण दाशमहोदयनिर्णीतेनार्थशास्त्रविषयकेण मतेन नास्ति मेऽत्र कोऽपि सम्बन्धः। वक्तुर्मनसः परिचय एतेन

लभ्यत इत्येव तावदभिभाषणस्य यथार्थगौरवकारणम्। जातीयविद्वेषेण प्रभावितमभूत् तस्य जीवितमिति स्पष्टतयैवास्माज् ज्ञातुं शक्यते। जातीयवैरपोषणमेवाऽऽसीत् तस्य लक्ष्यमित्यत्र नास्त्येव तावत् सन्देहगन्धोऽपि। सत्यं वङ्गीयतरुणानां मनसि प्रविष्टस्य नैराश्यस्याधैर्यस्य च भावानां वाह्याकारतया दाशमहोदयेन वर्णितो वैप्लविकोऽपराधस्तेनैव दूषितः। जन्मभूमेः सेवायै महती प्रबला च वासना साम्प्रतिकेन राजतन्त्रेण मोघीकृता सती जनयत्येतान् अधैर्यस्य नैराश्यस्य च भावान्। परं दाशमहोदयेनान्यैश्च स्थापितमिदमेव तावन्मतम्। मतस्यास्य प्रचारणं तावदाबद्धस्योत्साहस्य विधिविरुद्धपरिवाहनिर्माणे प्रष्टव्यमेव। वाग्मितायाः शक्त्याऽनायासेनैव वशं नीयन्ते वङ्गीयाः। वीर्यवद्वचोभिर्वर्णिताऽतीतगौरवकथा तेषामात्मानं दारुणमेवोद्दीपयितुमलम्। यस्मिन् समये ग्रेट्बृटेन्देशीयैर्गृहीतमिदं हितकरं भारतशासनकर्म तत्कालस्य भारतीयजीवितस्यानुज्ज्वलांशो भासुरास्वपि काल्पनिकासु व्यतीतप्रशंसासु नैव निवेशितो दृश्यते। वेदानुमोदितमिति ब्राह्मणैः कीर्त्यमानं क्रूरं सतीदाहविधिमनुसृत्य यत् तैर्दग्धाः संख्यातीताः सजीवा नार्यस्तासां मृतानां भर्तॄणां चितासु, तस्य नोल्लेखस्तत्र परिदृश्यते। भवानीपूजनमिषाद् दस्युतयाऽनुगम्यमानं श्वासावरोधेन नरघातनमनुष्ठितवतां ठगानामुपप्लववार्तायाः, देशस्यांशविशेषेषु बालिकाहत्यारूपस्य निर्घृणशिशुहननविधेर्वा नास्ति तत्र समुल्लेखः। केनचिद् बृटीशेनैव प्रधानतमराजप्रतिनिधिना निवारितः सतीदाहः, षड्वर्षाभ्यन्तरे द्विसहस्रसंख्यकानां ठगानां दण्डं विधाय केनचिद् बृटीशेनैव दूरीकृतो देशस्य भयङ्कर उत्पातः, केनचिद् बृटीशेनैव पुनः शिशुहत्यामपनीय विशोधितो भारतस्य तनुव्रणः। बृटीशानां सानुक्रोशविधेः प्रवर्तनात् पूर्वमपराधिषु कामचारतः प्रयोज्या अङ्गकर्तनादिरूपा नानाप्रकाराः क्रूरा दण्डाः साम्प्रतं विस्मृता भारतीयैः।

चित्रं विस्मृताश्च तैस्तेषां पि।डारिजातीयानां करालाः करवालाः, यैस्तावत् पिण्डारिजातीयैर्देशस्योपरि निपत्य स्तूपीकृतैर्भस्मभिः, विध्वस्तैर्गेहैः, आर्तानां विपन्नानाञ्च नरनारीणां करुणस्वरैः, रक्त-पिपासया घातितानां जनानां मृतदेहैश्च पूरितः स्वेषां गमनमार्गः। अहोवततैतेषामेव विषयाणां कृते विंशशताब्द्या अपि श्रोतृवर्गः सि आर् दाश-महोदयस्य तत्सहकर्मिणाञ्च वाचस्पत्येन विमुग्धो जातः। बृटीशशासने तावन्नैवाभविष्यदेतेषां सम्भवः। बृटीशा-गमनात् पूर्वं भारतमासीत् सुखशान्त्यादीनां निवासोऽधुना पुनः प्रतीच्यस्य मारात्मकच्छायायां दुःखदारिद्र्यक्लिष्टं तद् वैवर्ण्यं मालिन्यञ्चाधिगच्छतीति तैर्मन्यते।

---

## दशमोल्लासः

### आनन्दमठः

अर्वाचीनकालीनस्य चरममार्गिसमान्दोलनस्योद्दीपकस्वभावता पूर्वतनेषूल्लासेषु सम्यग् वर्णिता। वङ्गीयवैप्लविकान्दोलनस्य प्रधानाः प्रवर्तका यैर्धर्मानुशासनैस्तद् वैप्लविकान्दोलनं योजयितुमचेष्टन्त तस्य साहित्यञ्चेत् सुष्ठु समालोच्यते, तदा तानि धर्मानुशासनानि परिस्फुटान्येव स्युः। लेखाः शासनानि घोषणपत्राणि पत्रिकाश्चेति सर्वाण्येतानि वैप्लविकलेखप्रमाणानि "ॐ" इति हिन्दूनां प्रार्थनाक्षरेण विभूषितशीर्षाण्यासन्। गूढार्थेन तेन प्रणवाक्षरेण प्रायेण साहचर्यम् अदृश्यत "वन्दे मातरम्" शब्दस्य।

द्वयोरेतयोः प्रार्थनमन्त्रयोः प्रथमस्तावज्जातेर्विशिष्टदर्शनेन समं सर्वेषामेव हिन्दूनां मनःसु विराजते। "ओमित्येतदक्षरमुद्गीथमुपासीत" इति खलु छान्दोग्योपनिषदः प्रारम्भकं वाक्यम्। एतदक्षरसमाहितचित्तस्य जनस्य मनसो वाह्यविषया विनिवर्तन्ते। ओमित्यक्षरेण विना सर्वैरन्यैर्विषयैर्यावन्न रिक्तं भवति तस्य मनस्तावदनुभूयते तेन काचिन्मानसिकी सुषुप्तिः। तदनन्तरं तदानीं सर्वातिशायिना सर्वगतेन परमात्मस्वरूपेण ब्रह्मात्मना परिणमति। परमात्मनो ज्ञानात् "जीवात्मना परमात्मनो ब्रह्मणस्तादात्म्य"मिति वेदान्तदर्शनस्य मूलतत्त्वं लभ्यते। अत ओमित्यक्षरं भारतीयानामनितरसाधारणस्य श्रद्धाविशेषस्य (हिन्दुमते ज्ञानस्य) उद्बोधकम्। वि-सि-पाल-महोदयनये श्रद्धेयं खलु हिन्दूनां जातीयजीवितस्य

परमोऽर्थ इतिकृत्वेदानीन्तनैर्भारतीयैर्जातिनिर्मातृभिः सर्वथैव स्मरणीयोऽयं विषयः।

परं भारते धर्म-दर्शनयोर्मध्ये दृश्यते खल्वविनश्वरः सम्बन्धः। जातोयसमान्दोलनस्य मूर्धनि स्थितम् ओम् इत्यक्षरं यथा जातीयदर्शनाङ्कितया मुद्रया तद् विशेषयति, तथा "वन्दे मातरम्" ध्वनिरपि धर्म्यया स्वदेशप्रीत्या तस्य समान्दोलनस्य वैलक्षण्यं सूचयति। कथितञ्च वि-सि-पालमहोदयेन "वन्दे मातरम्" ध्वनिना यो नाम नूत्नो जातीयतावादः प्रकटीक्रियते स तु न राज्यपरिपालनविषयको न पुनरर्थनीतिविषयको न वा पुना राजनीतिकादर्शविशेषः। धर्मविशेषः खल्वयम्। "वन्दे मातरम्" इति प्रार्थनम् अवस्थाविशेषाज्ज्ञातत्वाद् गौरवविशेषमेवाधिगच्छति। ग्रन्थस्यास्य पूर्वतनेषूल्लासेषु कस्मिंश्चित् प्रसङ्गतो निर्दिष्टस्य, वङ्गीयकथाकारेषु जनानां प्रियतमस्य, विश्रुतस्य वङ्किमचन्द्र-चट्टोपाध्यायस्याऽऽनन्दमठसमाख्यातस्य कथाकाव्यस्य पात्रविशेषेणैतत् समुदीरितं प्रार्थनम्। नवीनसभ्यसंग्रहाय वैप्लविकप्रतिष्ठानानां सदस्यैर्वङ्गीयतरुणानां मनःसु स्वेषां भावान् वपुमस्य पुस्तकस्य व्यवहारः कृत इत्यत्र किञ्चनोदाहरणं मया प्रदर्शितमष्टम उल्लासे। वङ्गीयविप्लववादिनां दलैस्तथैव महताऽभिनिवेशेन गृहीता अस्य काव्यस्य भावाः यथाऽस्मादेव काव्यात् समान्दोलनेन लब्धा काचित् प्रणोदनेति वक्तुं शक्यते।

वङ्गानां साहित्यजगति वङ्किमचन्द्रचट्टोपाध्यायेन यत् स्थानमधिकृतं तद्विषये तृतीयोल्लासे मया समालोचना कृता। तदीयवर्तनकालात् पूर्वं संस्कृतस्यैवाऽऽसीत् प्राधान्यम्। शिक्षितसमाजैर्नीचजनाश्रितेति पुस्तकेषु निवेशनस्यायोग्येति च विनिन्दिता वङ्गभाषा। एतस्या अवस्थाया वङ्किमचन्द्रचट्टोपाध्यायेन महताऽऽधुनि[illegible]नाञ्च सर्वेषां चिन्तनानां भावानाञ्चाभिव्यञ्जनक्षमा काचिन्निर्मिता सजीवा भाषा। द्विसप्तत्यधिकाष्टादशशततमे खृष्टाब्दे

तत्प्रवर्तितं वङ्गदर्शनसमाख्यं सामयिकं वार्तापत्रं विदग्धजनानां वैदुष्यप्रदर्शनस्य केन्द्रत्वं लेभे। तद्वार्तापत्रस्य लेखकानां नामसूच्यां नाट्यकारो दीनबन्धुमित्रः; कविर्हेमचन्द्रवन्द्योपाध्यायः, ऐतिहासिको रामदाससेनः, कृष्णकमलभट्टाचार्यः, अक्षयचन्द्र-सरकारश्चाऽऽसन्। परं सर्वेष्वेव लेखकेषु कथाभिर्नवीनसाहित्यानां तीव्रसमालोचनाभिश्च वङ्किमः श्रेष्ठत्वं प्राप। वङ्गभाषायाश्चिरस्य दुर्बलताम् एकरीतिसेवनञ्चापाकर्तुं साहित्यस्य समालोचकरूपे लिखितानि तेन बहून्येव पत्राणि वङ्गदर्शनस्य। निर्दयया लेखन्या समापितं तेन स्वप्रवर्तितं कर्म। तत्स्वदेशीयैः सानन्दं सविस्मयञ्च पठितास्तत्प्रणीताः कथाः। तास्तावत् कथाः आर्-डब्लिउ-फ्रेजार्-महोदयेन तदीये "लिटारारि हिष्ट्रि अफ् इण्डिया" पुस्तके भारतीयानां जीवितस्य चिन्तायाश्चान्तःस्थितस्य भावस्य प्रकाशने ऐशोन्मेषविशेषतया प्रतीच्यपाठकानां साहाय्यमनुतिष्ठन्तीति वर्णितम्। तेनैव लेखकेन निर्माणशक्तिसम्पन्नेष्वर्वाचीनेषु भारतीयेषु तत्कृते परिकल्पितं प्रथमं स्थानम्। तदीयैः प्रशंसकैस्तदीयासु कथासु स्वदेशप्रीतेर्भावावस्थानात् सार् वाल्टार् स्कट्-महोदयेनापि तस्य तुलनं क्रियते। तस्य स्वदेशप्रीतिर्धर्मभावेन गाढं रञ्जितेति द्रष्टव्योऽयं खलु तावद्विषयः। भारतीयानां प्रबलतमो भावः, प्राच्यसभ्यतायाः श्रेष्ठमुपादानञ्च धर्म्यस्तावत् कश्चन भाव इति तेन बुद्धम्, अतो न केवलं तेनाभिरञ्जितो धर्मेण स्वदेशप्रीतिरसः, परं धर्मस्याङ्गविशेषरूपेण परिकल्पितस्तेन जातीयताभावः। तदीयाया लेखन्या मोहिनीशक्तिर्वङ्गभाषायै जीवितं शक्तिविशेषञ्च ददाविति लिखित्वाऽभिहितं केनचिदपरेण लेखकेन—"प्राच्यदेशजातानां जीवितवृत्तस्यापरिहार्यां परिणतिमनुसृत्य धर्माचरणेन धर्मसाहित्याध्ययनेन च व्ययितो मया जीवितस्य चरमो भागः।" वृटीशसंसर्गस्य स हि खल्वासीत् प्रबलः समर्थकः। कियत्कालं सोऽभूच्छासकानां

कर्मकरः। लक्ष्यीकृतं तेन भारतीयजीवितैः प्राच्य-प्रतीच्यादर्शानां संयोगविधानम्। विदिद्वेष स राष्ट्रविप्लवम्। आनन्दमठस्य प्रथम-संस्करणस्योपोद्घाते राजद्रोह आत्मपीडनमिति राष्ट्रविप्लव आत्म-हत्येति स व्यलेखीत्। आङ्ग्लदेशीयैरेव राष्ट्रविप्लवाद् रक्षिता वङ्गाः। एत एव तावद्विषयाः कृतावस्यां विशदीकृताः। नूनं दैव-स्येयं विडम्बना, यदिदमेव तावत् पुस्तकं राजद्रोहिदलैः परिगृहीतं प्रणोदनालाभाय।

स्वदेशप्रीतेर्निदर्शनभूतेयं कथेति यद्भणितं नरेशचन्द्र-सेन-महोदयेन, तत् तु प्रमाणप्रतिष्ठितमेव। मोगलसाम्राज्यस्य ध्वंस-समये जातानां विशृङ्खलावस्थानां काञ्चिदेवाऽऽदाय विरचितेयं कथा। अष्टादशशताब्द्याश्चरमे भागे सन्न्यासिवेशेन भ्रमणशीलै-र्लुण्ठनकारिभिरुपद्रुतोभूदत्यर्थं वङ्गानामुत्तरो भागः। वारेन् हेष्टिंस्-महोदयस्य पत्रेषु दृश्यते तेषां विधिविगर्हितकार्याणां समुल्लेखः। तथाविधस्तैः प्राप्तः समुत्कर्षो यथा तेषां वृत्तं "सन्न्यासिसमान्दो-लनम्" इति नाम्नैव प्रथितं जातम्। एतस्मात् सन्न्यासिसमान्दो-लनादेव संगृहीतैरुपादानैर्बङ्किमचन्द्रचट्टोपाध्यायेन विरचितानन्द-मठसमाख्याता कथा। सन्तानपदवाच्या आसंस्तस्यां कथायां सन्न्यासिनः। कस्यास्ते सन्तानाः? काली-दुर्गा-जगद्धात्र्यादि-रूपेणाऽऽविर्भूताया हिन्दुभिः प्रपूजिताया महाशक्तेः सारूप्यं प्रापि-ताया जन्मभूमेस्ते सन्तानाः। वस्तुतस्तु वि-सि-पाल-महोदयश्चेद् वङ्गीयमतानां विश्वासयोग्यो व्याख्याता, तदा वङ्गानां जातीयता-वादिभिर्जन्मभूमेर्जातीयभावस्य च प्रतिरूपतया काल्या दुर्गाभवानी-जगद्धात्र्यादितदीयरूपविशेषाणाञ्च व्याख्यानमेव तस्याः कथायाः समधिगतम्।

कथारम्भे कस्यचिद् दुर्भिक्षक्लिष्टसंवत्सरस्य रोगैरभावैश्च सम्पीडितानां जनवर्गाणां शोचनीयावस्थाविशेषस्य दृश्यते वर्णनम्।

ग्रामस्य भूस्वामी नष्टसौभाग्यो महेन्द्रसिंहः स्त्रियं कल्याणीं कन्यां सुकुमारीञ्च गृहीत्वा सन्निकृष्टं विशालं नगरं प्राप्तुमैच्छत्। ज्यैष्ठे मासि पादचारेणैव ते प्रचेलुः। प्रखरश्चाऽऽसीत् खरदीधितिरधिश्रयणीत्वञ्च शिश्रिये भूतधात्री। ज्वालामयमभूद् वात-मण्डलम्, उत्तप्तं ताम्रवितानमिव ददृशे गगनतलम्, मार्गगता धूलिकणा वह्निस्फुलिङ्गा इव प्रतीयिरे। कस्मिंश्चिद् विध्वस्ते ग्रामे रात्रियापनं विनिश्चित्य पानीयस्य खाद्यस्य चान्वेषणाय दूरं गते महेन्द्रे सकन्यका तस्य पत्नी केनचिद् दस्युदलेनापहृता गभीरे वने च संस्थापिता। ततस्तस्याः सकाशाल्लब्धानामलङ्काराणां विभागसमये दस्यूनां मध्ये विवादे समुपस्थिते सति सकन्यका सा तैरलक्षिता घनान्धकारे दुर्गमे वने विवेश। अत्यर्थं परिश्रान्ता सा तत्र मुमोह। मोहावसाने कस्यचिद् भग्नमठस्य प्रकोष्ठे "मातर्देवस्थानमिदमतः साम्प्रतं नास्ति ते भयकारणम्" इति वदतो दीर्घकेशस्य लम्बकूर्चस्य च कस्यचित् सन्न्यासिजनस्य समीप आत्मानं सा स्थिताम् अमन्यत। स तस्याः श्रुत्वा सर्वं वृत्तान्तं प्रतिश्रुत्य च तस्यै तद्भर्तुः सन्देशसंग्रहम्, वने निगूढं स्थितं तरुणेन भवानन्देन परिचालितं सशस्त्रं सन्तानदलं समाहूयामास।

अथ महेन्द्रमासाद्य भवानन्दस्तेनाऽऽनन्दनिकेतनानन्दमठाभिधानं मठं प्रति चलितः। पथि चलता भवानन्देन महेन्द्रेण समं यज्जल्पितं यद्वा तत्सविधे गीतम्, तत् सर्वं महेन्द्रस्य मनसि कौतूहलं जनयदपि व्यामोहविशेषमेवोदपादयत्। भवानन्देन गीतं "वन्दे मातरम्" इति। महेन्द्रोऽपृच्छत् "काऽसौ माते"ति। अदत्त्वैवोत्तरं भवानन्देन श्लोकान्तरं गीतम्। "देशमातृकेयं न तु गर्भधारिणी"ति महेन्द्रेणोच्चैर्निगदितम्। "नास्त्यस्माकं तदतिरिक्ता काचिदपरा माते"त्यभूद् भवानन्दस्य प्रत्युत्तरम्। जन्मभूमिमेवोद्दिश्य गीतं भवानन्देनेति बुद्ध्वा महेन्द्रस्तं पुनरपि तद् गातुं

प्रार्थयामास। गीतानुष्ठानसमये तत्सहचरेण क्रन्दितमिति ज्ञात्वा सविस्मयो महेन्द्रस्तत्परिचयं पप्रच्छ। सन्ताना वयमित्यभाणि भवानन्देन। "कस्य सन्ताना यूयम्" इति महेन्द्रेण पुनरपि पृष्टः सोऽकथयत्—"अस्माकं जन्मभूमे"रिति। एवं क्रमेण तैरासादितो मठः। येन तावन्मान्येन सन्न्यासिना कल्याण्यै तत्कन्यकायै चाऽऽश्रयो दत्तस्तेन सत्यानन्देनैव गृहीतो महेन्द्रस्यापि भारः।

पत्नीकन्यकादीनां सान्निध्यप्रापणात् पूर्वं सत्यानन्दो मठपरिसरस्थितेषु मन्दिरेषु प्रतिष्ठिता देवतामूर्तीर्महेन्द्रं प्रदर्शयामास। प्रथमं जगद्धात्रीं प्रदर्श्य "चिन्तयैवमासीदस्माकं देशमातृके"ति स कथितः सत्यानन्देन। ततः किञ्चिदन्धकारं गृहं नीतः स भीषणां ददर्श काञ्चिन्मूर्तिम्। कम्पमानः स उच्चैरवदद् "इयं खलु कालीति!" एतादृश्येवास्माकमिदानीन्तनी देशमातृकेति व्याख्यानं स तत्र तस्माल्लेभे। अन्तिमे मन्दिरे स्वसाहचर्यं गताभ्यां लक्ष्मीसरस्वतीभ्याम् अप्यधिकतररमणीया विश्ववन्दिता काचन स्त्रीमूर्तिरवलोकिता महेन्द्रेण। भाविन्या जनन्याः प्रतिमूर्तिरियमित्यभिहितः स सत्यानन्देन। अत्यर्थं विचलितो महेन्द्रः प्राह—"कदा द्रक्ष्यामो वयमेवंविधां समुज्ज्वलां मातृमूर्तिम्?" "यदा सर्वे सन्ताना देशमातृकां मातृरूपेण ज्ञास्यन्ति, तदा"—इत्यासीदुत्तरम्। ततः स पत्नीकन्यकयोः समीपं नीतः। कथाकारेण तेषां समागमस्य यद् वर्णनं दत्तम् तेनात्र नास्ति मे किमपि प्रयोजनम्। गौरवावहे देशमातृकापूजनमहे पतिर्महेन्द्रो वीतचिन्तः सन् मिलतामिति मनसि निधाय कल्याणी स्वकन्यकया समं यदात्मनः स्वदेशप्रत्यावर्तनं [illegible] तदेवात्र गौरवविशेषमाकर्षति।

ततो वर्णिताः केचिद् उद्दीपका विषयास्तावदस्माभिस्त्यक्तुं शक्यन्ते। सत्यानन्द-कल्याणी-सुकुमारी-समाख्यातानि त्रीणि

पात्राणि व्यसननिमग्नान्यासन्। उत्तरोक्तं पात्रद्वयं भवानन्द-जीवानन्दाभ्यां सन्तानाभ्यां यथाक्रमेण रक्षितम्। उल्लिखितयोः सन्तानयोः प्रथमः कल्याणीं प्रत्यासन्ने नगरे निरापदमरक्षत्, द्वितीयश्च कथायाश्चरमे भागे वर्णितया जीवानन्दस्य पत्न्या शान्त्या समं विविक्ते वने कुटीरं निर्माय निवसन्त्या आत्मनः स्वसुर्निमेः सकाशं सुकुमारीम् अनैषीत्। शासकप्रेरितैः सैनिकैः परिगृहीतः सत्यानन्दः कारावासमन्वभूत्। शेषोक्तः सन्देशो द्रुतं सन्तानेषु विस्तारं लेभे। दलशस्ते मठं प्राप्ताः। "सत्यधर्मस्योज्जीवनाय विहितप्रतिज्ञस्य विष्णोरवतारत्वेनास्माभिः परिपूजितस्य सत्यानन्दस्योद्धाराय गृहीतशपथाः प्राणैः पणीयतध्वम्" इत्यभाषिष्टाभिभाषणप्रसङ्गेन ज्ञानानन्दः। हरिध्वनिं कृत्वा धीरैः स्थिरनिश्चयैश्च पादविक्षेपैर्निर्गत्य रक्षिणां बाधामवधूय च तैरनुष्ठितं सत्यानन्दस्योद्धरणम्।

मठं प्रत्यागत्य सत्यानन्दो महेन्द्रेण चिरमजल्पीदियेष च तं सन्तानव्रतदीक्षितं कर्तुम्। "धर्मेणैवानुमोद्यते वैप्लविकं कार्यजातम्" इत्यस्य विषयस्य स्थित्या कथोपकथनेन तेन गौरवं किञ्चन प्रापे। "सन्ताना वैष्णवाः" इति व्याख्यातं तेन महेन्द्रस्य समीपे। महेन्द्रेणोक्तम्—"वैष्णवाः सर्वथैव रक्तपातनं न सहन्ते तत् कथं सन्तानैर्युध्यते हन्यन्ते वा मानवाः। "चैतन्यप्रचारितं मतमेव चिन्तयसि महेन्द्र" इत्यवोचत् सत्यानन्दः। दुष्कृतां घातनं भूतधात्र्या जनन्या मुक्तिश्चेति वैष्णवधर्मस्य गूढतत्त्वम्। चैतन्यप्रचारितं वैष्णवमतं सत्यधर्मस्यार्धो भागः। प्रेममयोऽस्य ईश्वरः। नहि परमेश्वरः केवलं प्रेममयः परमनन्तशक्तिश्च। चैतन्यस्य विष्णुः प्रेममयोऽस्माकं विष्णुस्त्वनन्तशक्तिरेव। सर्वे वयं वैष्णवाः परमुभयोरेवाऽऽवयोः स्वीकृतं मतं वैष्णवधर्मस्यार्धभागतां गाहते। इतोऽप्यधिकं ज्ञातुमिच्छोर्महेन्द्रस्य सविधे देवस्य सत्त्वरजस्तमोगुणात्मकत्वं प्रतिपादितं सत्यानन्देन। विभिन्नैरेव मार्गैस्ते गुणाः

समाराधनीयाः। सत्त्वात् परमेश्वरस्य दयास्नेहादिकं समुद्गच्छति, अतः प्रेम्णैव स समाराधनीयः। तदेव तावदनुष्ठीयते चैतन्यमतावलम्बिभिः। रजसस्तस्येशस्य शक्तिरुत्पद्यते। तदुपासकैर्योद्धव्यं परमेश्वरस्य शत्रवो हन्तव्याश्च। तदेवास्माभिः क्रियते। तमसो यथेच्छं रूपं परिगृह्यते परमेश्वरेण ; माल्यगन्धादिभिश्च स तदा पूजनीयः। एतदेव साधारणैर्जनैर्विधीयते। "तत् किं सन्तानसङ्घो धर्मसङ्घः" इति महेन्द्रेण परिशेषे जिज्ञासितम्। "अथ किम्, तथैवैषः" इत्याह सत्यानन्दः। "न काङ्क्ष्यतेऽस्माभिः राज्यम्, परमेश्वरस्य शत्रुतां गता मुसलमाना एव निहन्यन्ते।"

भाविन्या जनन्या मन्दिरं नीतो महेन्द्रो देव्याः पुरतः प्रार्थनरतेनापरेण जनेन समं सन्तानव्रते दीक्षितोऽभूत्। स्त्रीपुत्रादिकमैश्वर्याणि च त्यक्तुम्, इन्द्रियाणि विजेतुम्, नारीभिः सहैकासनाध्यासनमपि वर्जयितुम्, सत्यधर्मस्य कृते योद्धुम्, एकस्या एव मातुः सन्तानत्वं मनसि निधाय जातिभेदमुत्स्रष्टुञ्च ताभ्यां गृहीताः शपथाः। ततस्ताभ्यां मातृसमीपे कृतः स्तवः। एवं क्रमेण तौ यथारीत्या दीक्षितावभवताम्। पुरुषस्य छद्मवेशेनाऽऽगता जीवानन्दस्य पत्नी शान्तिस्तावद् द्वितीयो दीक्षार्थी जनः। सन्तानैर्ब्रह्मचर्यस्योपरि कीदृशं गौरवं समारोपितम्, तत् प्रदर्शयितुमेव कथायां तस्याः प्रवेशः परिकल्पितः। दीक्षाग्रहणानन्तरं सा प्रथमं सत्यानन्दस्य समीपे परतो जीवानन्दस्य पुरत आत्मानं प्रकाशयामास। कथं पत्नी पत्या सह तस्याः सांसारिकान् सर्वान् सम्बन्धान् विसृज्य तेन सहाऽऽध्यात्मिकमैक्यम् अनुभवन्ती वस्तुं पारयति, तदेव कथायाश्चरमांशे दर्शितः कविना। कथायां वर्णितानां युद्धानामन्तिमे युद्धे सन्तानानां जयलाभानन्तरं जीवानन्देन सममुभयोर्भविष्यद्विषयं समालोचयन्त्याः शान्त्याः किमपि चित्रं तत्राऽऽस्ते वर्णितम्। शान्त्याऽभिहितम्—"न च पुनरावां गृहिणौ भविष्यावः।

चिराय ब्रह्मचर्यव्रतं परिगृह्य एवमेव सन्न्यासिनौ स्थास्यावः। एहि साम्प्रतं तीर्थेषु विचरिष्यावः।"

"तत आवाभ्यां किं तावत् करणीय"मित्यपृच्छज्जीवानन्दः।

"ततो हिमालयस्योपरि कुटीरं निर्माय परमेश्वरं पूजयावः याचिष्यावहे च तं देशमातृकाया मङ्गलम्।"

जीवानन्दस्य सन्न्यासग्रहणमत्यर्थं सरलतापूर्णम्। ततश्चन्द्रालोकोद्भासितायां गभीरायां तस्यामेव निशीथिन्यां समुत्थाय तौ सममेवानन्ताय निर्जग्मतुः।"

शान्तिजीवानन्दयोर्निदर्शनेन यो हि नाम ब्रह्मचर्यस्याऽऽदर्शः प्रदर्शितो लेखकेन, भवानन्दस्य वृत्ते तदधिकतरं स्फुटतां याति। स्मरणीयमेवेदमस्माभिर्यद् भवानन्दः कल्याणीमुद्धृत्य प्रत्यासन्ने नगरे तां निराकुलं स्थापयामास। कल्याण्या दर्शनाय गतो भवानन्दस्तस्या आत्मनः प्रेमवार्तां निवेदयामास। एतेन कस्यचिन्नाटकीयदृश्यस्योपादानमुपायनीकृतम्। श्रुत्वैतत् कल्याण्या स्मारितः स सन्तानव्रतस्य समयः। "त्वद्रूपवह्निना भस्मीभूतमिदानीं मे तन्मतम्" इत्यभूद् उत्तरम्। "इन्द्रियपरवशो यः सन्तानधर्माद् विच्युतो भवति तस्य मृत्युरेव प्रायश्चित्तम्" इति भवन्मुखादेव मया पूर्वं समाकर्णितम्, अपि नामैतत् सत्यम्?"—इति प्राह कल्याणी। तेन तदभ्युपगतम्; स्मर्तव्योऽस्मि त्वया मन्मरणादनन्तरम् इति प्रार्थितश्च। "पापाशयो व्रतोल्लङ्घनकारीति च त्वं स्मरिष्यसे मया ते मृत्योरनन्तरम्" इति परुषाक्षरैः सावज्ञमवधूतः स कल्याण्या। नातिचिराज्जाते शासकसैनिकैः सह सन्तानानां सङ्घर्षेऽग्रेसरो भवानन्दस्तैर्घातितः सन् पापस्य प्रायश्चित्तं चकार।

एतेषूपाख्यानेषु मया न्यस्तं किञ्चन गौरवम्, यत एतैरेव वङ्गीयविप्लववादिनां पुरतः समुपस्थापित उच्चकैरादर्शः। सापराधोऽपि स एवाऽऽदर्शोऽभूत् तेषां श्रयणीयः। तेषां कार्याणि

कानिचिन्नीचतमान्यपि भीषणान् कृष्णान् मेघान् भित्वा विनिर्गता मरीचय इव मरीचिमालिनो दृष्टिमाचक्रुषुः। कथाया अवशिष्टांशं यदि समासतो न वक्ष्यामि तदा मत्समुद्देश्यसाधनविधौ तस्यानावश्यकत्वमेव जायेत। सैनिकैः समं सन्तानानां युद्धद्वयस्य वर्णनमास्ते। तत्र द्वयोरेव युद्धयोः सन्ताना विजयं लेभिरे।

विजयलाभानन्तरं जातस्य दृश्यस्यैवं तावद् दृश्यते वर्णनम्—"तस्यामेव निशायां देशस्य स भागो हरिनामध्वनिना मुखरो जातः। "पराजिता मुसलमाना हिन्दुकरतलगतश्च साम्प्रतं देशस्ततो हरिर्हरिति जयध्वनिं सतारमुद्घोषयत" इति सर्वैरेव कथयाम्बभूवे।

सत्यधर्मस्य पुनः प्रतिष्ठापनाय बृटीशानामागमनं तेषां शासनञ्चाऽऽवश्यके इत्येव तावत् पुस्तकस्योपसंहारः परिकल्पितः कथाकारेण। सन्तानदलस्य विधिविगर्हितेभ्यः कार्येभ्योऽन्यतो दृष्टिदानस्यावसरोऽप्येतेन तेन लब्धः। युद्धावसाने मठं प्रत्यागतं सत्यानन्दं कश्चिद् गूढचरित्रो महाप्रभावः सन्न्यासी युद्धादिभ्यो वारयित्वा तेन साकं विविक्ते हिमालये गन्तुमादिदेश। साम्प्रतं सामिकृतं मे कर्म इत्युत्तरैः समुपस्थापितः सत्यानन्देन गमनप्रतिबन्धः। कथाशेषतां गतेऽपि मुसलमानशासने नाद्यापि सुप्रतिष्ठितं हिन्दुराज्यम्। "साम्प्रतं नैव प्रतिष्ठां यास्यति हिन्दुराज्यम्, परम् इंराजशासनेऽवस्थानमेवाधुना भारतस्य मङ्गलाय कल्पिष्यते" इत्यभिहितं तेन सन्न्यासिना। पुनरपि सत्यानन्देनापरा प्रदर्शिता बाधा, परं तस्या अप्युत्तरविशेषः परिकल्पितस्तेन सन्न्यासिना। "दस्युवृत्त्यैव युष्माभिर्लब्धो जयः। न हि खलु पापानि कदाचित् सुफलं प्रसुवते, अतः पापेन पथा प्रचलद्भिर्भवद्भिर्दुरापादनीय एव देशस्योद्धारः। विशेषतः प्रतीच्यज्ञानराशिभिर्जुष्टो बृटीशागमः सत्यधर्मस्य पुनःस्थापने उत्कटतयैवेदानीं समपेक्षणीयः। सत्यं हिन्दुत्वं ज्ञाने प्रतिष्ठितम् न तु कर्मणि। पदार्थनिष्ठत्वेनाधिकरणनिष्ठत्वेन च ज्ञानं

द्विविधम्। उत्तरोक्तस्य लाभात् पूर्वं सत्यधर्मसारांशविशेषस्य पूर्वोक्तस्य विकाशोऽसम्भव एव। भारताच् चिराय गतं पदार्थनिष्ठं ज्ञानम्, आङ्गलदेशीया एव प्रत्यानीय देशमध्ये तत् तनिष्यन्ते। तेन च पुनरपि भारतम् अधिकरणनिष्ठं ज्ञानं प्राप्स्यति। परं "यावन्न हिन्दवो ज्ञानेन धर्मेण शक्त्या च महत्त्वम् अधिगमिष्यन्ति तावदाङ्गलशासनं भारते सुस्थिरमेव स्थास्यति।"

परिशेषे च छिन्नसंशयः सत्यानन्दः कर्ममयं जीवितं विहाय तेन समं चचाल।

जन्मभूमेः सेवायै स्थिरां प्रतिज्ञामूरीकृतवतां जनानां सङ्घ-विशेषेण कथावस्तुनः समसामयिकस्य हिन्दुत्वपरिपीडकस्य मुसल-मानशासनस्योत्सादनेन हिन्दूनां पुनरुज्जीवनं तावदुल्लिखितस्य कथा-संक्षेपस्य सारांशः। आनन्दमठेन दृढं प्रमाणीकृत्य विप्लववादिनां सङ्कल्पन्तेषां कार्यस्यानुगुणस्य कस्यचित् प्रतिष्ठानविशेषस्य सुष्ठु चित्रमपि तेभ्यः प्रदर्शितम्। कथास्थितं "मुसलमानशासन"-पदम् अपनीय तत्स्थाने विनिवेशितं विप्लववादिभिर्बृटीशशासन-पदम्। बृटीशशासनेन सम्पादितानि हितानीति, यैः कैरप्यु-पायैर्लक्ष्यविशेषसाधन-सङ्कल्पः सदोष इति च कथायाश्चरमे भागे वङ्किमचन्द्रचट्टोपाध्यायेन समुपस्थापितस्य सिद्धान्तद्वयस्यैवैतेना-पलपनं जातम्। सत्यम् आनन्दमठनिर्मातुरेतद्विषयावगाहि सिद्धान्तद्वयं कदाचिद् विशिष्टैरपि विप्लववादिभिः स्वीकृतमिति चित्रमेवैतत्। परम्, कारावासनिग्रहादीनामवसाने, सफलतया विमण्डितेन राजद्रोहेणैव सम्पादनीयं हिन्दूनां सुमहत् पुनरुज्जीवनम् इति भावस्य मोहेन, वप्लविकैः साहित्यैर्वाचस्पत्यैश्च तेषां भाव-प्रवणस्वभावस्य प्रमाणीकरणेन चाप्रभावितायाश्चिन्ताया अवसरान् प्राप्यैव तैस्तत् स्वीकृतम्। अन्येषु विषयेषु प्रच्छन्नसमितिभिरानन्द-मठस्य सन्तानानामादर्श एव परिगृहीतः।

न केवलं वैप्लविकसमितिभिः परं प्रकारतो विभिन्नैरप्येकमेव लक्ष्यं समुद्वहद्भिः सर्वैरेव वङ्गीयैर्जातीयतावादिभिर्गृहीतः सन्तानानां "वन्दे मातरम्" इति रणशब्दः। पञ्चदशाधिकोनविंशतिशततमे खृष्टाब्दे बालेश्वरं निकषा नगररक्षिभिः सह सञ्जाते संघर्षे यस्य वैप्लविकदलस्य यौ सभ्यौ मम्रतुः, वङ्गीयवैप्लविकदलेषु जीवितनिरपेक्षतमस्य यतीन्द्रनाथमुखोपाध्यायपरिचालितस्य तस्य दलस्य तावेव सभ्यावानन्दमठस्य प्रधानपात्रद्वयस्यैव नाम पर्यगृह्णीताम्। सन्ताना इव "ढाका अनुशीलनसमिति" सदस्या अप्यात्मसंयमं नैतिकसाधुताञ्चाङ्गीचक्रुः। "सुखम्, विषयलालसां सांसारिकासङ्गञ्च दूरे निक्षिप्य समागच्छत भारत-सन्तानाः, तूर्णमागच्छत भोः, मातृपूजायै मिलध्वम्।"—त्रयोदशाधिकाष्टादशशततमे खृष्टाब्दे विनिर्गते "ॐ"-"वन्दे मातरम्"-पदाभ्यां विमण्डितशीर्षदेशे "ए कल" (आह्वान)-समाख्याते पत्र एवं विधम् अस्मा भरदृश्यत किञ्चनाऽऽमन्त्रणपदम्। "ढाका अनुशीलनसमिति" सदस्यैर्विधातव्येषु चतुर्षु समयेष्वेकस्तावत् सत्यानन्दं निकषा महेन्द्रेण गृहीतस्य त्यागस्य सन्न्यासस्य च शपथस्यानुरूपः। कठोरसंयतजीवितोपक्रममुररीकृत्य तस्य समयस्यांशविशेषे यल्लिखितमास्ते तस्मादधिकतरं विशदं वर्णनं कथायामपि नास्ति। तस्मिन् शपथे वर्जनीयानां कर्मणां यादृक् सविस्तरं व नं दृश्यते, तादृग् वर्णनमदूषयित्वा शिष्टाचारस्य नियमः कथायां सन्निवेशयितुं नैव शक्यते। "भ्रंशितास्मि चेदस्माच्छपथाद् अथवा कर्तास्म्यस्य शपथस्य विरुद्धं किञ्चन कर्म, तदा नातिचिरादीशस्य, जन्मभूमेः, शक्तिमतामृषीणाञ्चाभिशापाः कल्पतारो मे विनाशाय—इत्यादीनि पदान्यासन्नुपसंहारवाक्यघटकानि। काल्याः प्रतिमूर्तेश्चित्रस्य वा सविधे शपथग्रहणाद् धर्मानुगतत्वमपि समधिगतं तेन शपथेन।

नाऽऽसीत् स शपथः फल्गुर्यतः शपथभङ्गापराधः सर्वथैवाभूद्

दण्डेनानुगतः। यथैव कल्याणीसमीपेऽशिष्टं व्यवहारं प्रदर्श्य भवानन्दो ममार, तथैव तत्रापि सापराधानां मृत्युरवधारितत्व-मियाय। कस्याश्चित् तथाविधायाः संसदश्चत्वारः सदस्या नियमोल्लङ्घनात् तस्या एव संसद इतरैः सदस्यैर्यथोक्तप्रकारेण दण्डिता अभवन् इति विषयो मदीयज्ञानपथातिथित्वं प्रायादित्य-धुनाप्यहं स्मरामि। अस्य प्रतिकूलतया कस्यचिज्जनस्य कार्यमत्र समुपस्थापयितुं शक्यते। स्वाचरितदारुणनैतिकापराधेनानुतप्तस्य एकस्या एव संसदः सदस्यपदवीमलंकुर्वाणस्य घातकत्वेन स हि तावज्जनो निर्णीतः। प्रच्छन्नसंसदां सदस्यानां मुहुर्मुहुर्जायमानै-रनुपेक्ष्यैः स्खलितैर्नास्ति मे तादृशः कश्चित् सम्बन्धो यादृशः सम्बन्धो विद्यते सर्वैरेव सापराधतया निर्दिष्टस्य समान्दोलनस्यास्याऽऽदर्शस्य विद्यमानताया एवानुसन्धानेन। यया नाम दृढतया समान्दोलन-प्रवर्तकाः स्वेषां लक्ष्यस्य तदवाप्तिमार्गस्य च धर्मानुशासनाधीनत्वं प्रतिपेदिरे, सा खलु दृढता, हिन्दूनां पुनरुज्जीवनविषयकः समान्दो-लनस्य कश्चिदादर्शविशेष आसीदेव इतीदं मत्प्रदर्शितं मतं प्रमाणै-र्दृढयति। हिन्दूनां धर्मपुस्तिकासु श्रेष्ठाया भगवद्गीताया अपि संगृहीतं तैस्तथाविधं किञ्चनोपादानम्, यत् तु प्रकरणं वर्जयित्वा चेदालोच्यते, तदा विप्लवात्मकानां कर्मणां समुत्साहकत्वमेव यायात्। विप्लवस्य प्रवर्तकैरस्य धर्मग्रन्थस्य यथा नाम व्यवहारः कृतस्तस्या-ऽऽलोचनं विना समान्दोलनस्य निगूढतत्त्वानां विचारोऽसम्पूर्ण एव तिष्ठेद् इत्यतस्तस्यैव स्पष्टीकरणाय तद्धर्मग्रन्थस्य वृत्तान्तोऽर्थश्च प्राथमिकतयैवापेक्षितौ विषयौ।

---

# एकादशोल्लासः

## भगवद्गीता

विश्रुतानां व्याख्यातॄणामध्यात्मवादस्य, सांसारिकजीवितस्य कठोरतायाश्च पारस्परिकविरोधशमनमभिलष्यत्सु भारतीयेषु मनीषिषु, तद्विरोधोपशमनस्य दुःसाध्यतया विमूढेषु च तेषु विरचितेयं खलु भगवद्गीता। मानवजीवितस्य दुःखादिकम्, किं बहुना तज्जीवितमपि कर्माधीनम्। कर्मसंयमोऽथवा जगतः सर्वसङ्कल्पत्याग एव तेषां दुःखादीनां विरतिसाधनक्षमोऽगद इति श्रूयते। अतः खलु भारतीयैर्मनीषिभिः समुपदिष्टः सर्वसङ्कल्पत्यागमन्त्रः।

स्वीकृतेषु पक्षेषु स्फुटतयैव दुष्प्रधर्षः स्यात् सिद्धान्तः। तुल्यतया स्पष्टतया च साधारण्येनाप्रयोज्योऽभूत् स तावदगदः। नियमैर्बन्धैश्चोपेतस्तदानीं दुर्भेद्य एवाऽऽसीद् वर्णाश्रमो धर्मः। क्षत्रियवर्णसम्भूतो युद्धधर्मः, योधपुरुषः केनोपायेन स्वकं कर्ममयं जीवितं जह्यात्, अस्यैव तावद्विषयस्य भगवद्गीतानिर्मात्रा कृतं समाधानम्। इतरेऽपि तत्राऽऽसन् समाधानार्हा विषयाः। मानवानामिन्द्रियैर्ग्राह्येभ्यो विषयेभ्यो भिन्नत्वेन वा, अवास्तविकतयाऽव्यक्ततया च परामृष्टविषयविशेषत्वेन वा, साधारणानां जनानां बुद्धेरविषयीभूतया गूढया प्रहेलिकयेवाऽऽध्यात्मिकवागाडम्बरस्य चित्तविभ्रमोत्पादिन्या कुटिलतया साधारणानां दुरधिगमस्वरूपत्वेन वा, अविज्ञेयत्वेन वा, अपरिवर्तनीयया स्थित्या प्रभावितत्वेन वा, दारुणे निरवसाने च जन्ममृत्युचक्रे पुनः पुनरन्ध इव विवर्तमानानां जनानां

कर्मसु सर्वथैवोदासीनत्वेन वा भगवतोऽस्तित्वकल्पना सर्वसङ्ग-परिहार-निर्व्यापारत्वाभ्यां जुष्टेन विरागमार्गेण मुक्तिं मृगयमाणानां सन्न्यासिजनानामेव तृप्त्या अलम्। परं कर्मिजन आपत्समये तुलनया कथञ्चिद् भ्रान्तिहीनं विषयमेवाऽऽश्रयेत्, मानवानां स्वाभाविकीं प्रवृत्तिमनुसृत्य चेश्वरे मानुषत्वस्याऽऽरोपं कृत्वा स्वस्यार्थे ईश्वरविशेषं परिकल्पयति। अत्यर्थं विभिन्नतां गतयोः परमेश्वर-विषयिण्योः कल्पनयोरन्योन्यगतविरोधशमनेऽत्र तावत् सविशेषमेव चेष्टितं भगवद्गीताकारेण। एवंविधं चेष्टितं जातुचिदपि न सम्पूर्णां सफलतां प्राप्नोति। अतो गीतायां बुद्धेर्व्यामोहोत्पादकानां परस्परविरुद्धानामपि भावानां स्थितिर्नैव विस्मयोत्पादिनी। तितिक्षा-कोमलतयोराधारत्वेन प्रथितं हिन्दूनां चेतो गीतायाः स्वरूपस्याप्यात्मनोऽनुरूपत्वेन नैवान्वभवत् तामधिकृत्य कञ्चिदप्युद्वेगम्। परं सुव्यवस्थितेनावहितेन च युरोपीयाणां चेतसाऽसौकर्यमेवालभ्यत गीतायास्तथाविधात् स्वभावात्। न केवलं सर्वेषु धर्मेषु सत्यमस्तीत्येतावानेव, परं सर्व एव धर्माः सत्या इत्ययमपि भावो यन्मानसं प्रभावयितुं शक्नोति तथाविधं मनो गीतायाः पूर्वापरविरुद्धैर्भावैः कथं नाम क्लिश्यताम्।

महाभारतस्य षष्ठे पर्वणि क्षत्रियाणामुपाख्यानमवलम्ब्य विरचितेयं कविता। काव्यस्य तस्य द्वे प्रधाने पात्रे द्वे चाप्रधाने। सज्जीकृतैः स्वैः स्वैः सैनिकैः सङ्गराय सङ्गतानां कुरुपाण्डवानां राजवंशस्य वृद्धो राजा धृतराष्ट्रः, संग्रामभूमेर्वार्तावहः सञ्जयश्चाप्रधाने पात्रे। पाण्डवानां द्वितीयो* योद्धा राजकुमारोऽर्जुनस्तत्सारथ्यमाश्रितो विष्णोरवतारः कृष्णश्च प्रधाने पात्रे। कुरुक्षेत्रस्य रणाङ्गनरूपे दृश्ये परस्परबद्धवैराः समवेता युयुत्सवः सैनिकपुरुषाः। विपन्नतां गतेषु योधपुरुषेषु युयुत्सुं स्वजनं दृष्ट्वा कृपया परयाविष्टो-

* महाभारतानुसारेणार्जुनस्तावत् पाण्डवानां तृतीयः।

ऽर्जुनः करौ संहत्य कृष्णमुपदेशं ययाचे। अन्तरान्तराऽर्जुनेनानुष्ठितैः प्रश्नैरुपेतैः सप्तदशमितैरध्यायैर्दत्तं कृष्णेन तस्योत्तरम्। वृद्धस्य राज्ञो धृतराष्ट्रस्य समीपे वार्तावहेन सञ्जयेन वर्णितः कृष्णार्जुन-संवाद एव भगवद्गीता। एतेष्वध्यायेषु द्विसहस्रवर्षेभ्यः पूर्वं कुरुक्षेत्रे रणाङ्गने समुदीरितानां दार्शनिकतत्त्वानां दृश्यते सङ्कलनम्। यासां समस्यानां समाधानाय चिन्ताशीलानां मानवानां मनांसि सर्वकालं यतमानान्यासते, तासामेव समस्यानां समाधाने भारतीय-चिन्ताया अवदानभूतान्येव तानि दार्शनिकानि तत्त्वानि। सूक्ष्माण्यतिगम्भीराणि तानि तावत् तत्त्वानि कालप्रवाहेण जीवित-प्रवाहेण च समं सजयघोषमध्वक्रमणं कृत्वा साम्प्रतमपि भारत-सुतानां मनोमन्दिरे क्षीणशक्तीनि विराजन्ते। स्वानुष्ठेयस्य कर्मण आयतिं विचिन्त्य सहसा परितापपरिगतोऽभूत् क्षत्रप्रधानः प्रथित-कीर्तिः पार्थः। प्रबुद्धस्य विवेकस्य प्रणोदनया जातिधर्मापेक्षितेन कर्तव्येन च सममेव क्लिश्यमानः स झटित्येव जनानां दृष्टिं सहा-नुभूतिञ्च समाकर्षति, यत एवंविधस्य तुल्यैर्गुणदोषैरुपेतस्य विकल्पस्य सर्व एव विषयीभूता भवन्ति। समुचितं मार्गं जीवित-कालस्य क्वचनावसरे प्रदर्शयितुं न कोऽप्यायासः समनुभूतः श्रीकृष्णेन। प्रहसतैव तेन विहितं द्वितीयाध्यायगतं व्याख्यानम्। पुरुषप्रकृतिरूपौ द्वौ सनातनौ स्वतन्त्रौ परमार्थौ स्वीकृतवतः सांख्य-दर्शनस्य विश्वोत्पत्तितत्त्वमवलम्ब्यैव दत्तोऽत्रोपदेशः। साधुता-वा [illegible]द्वाच्यानां सत्त्वरजस्तमोगुणानां साम्यावस्थारूपा प्रकृतिः सम्पूर्णरूपेण सचेतना। गुणानां साम्यावस्थायाम् अप्रकटाऽवतिष्ठते चेतना। पुरुषेण समं प्रकृतेरचिन्तनीयेनोपायेन सङ्गमे जाते गुणानां समताया विच्छेदो जायते, सा चेतना च प्रकटतां गाहते। अन्यथा चेदुच्यते, तदा विकाररूपं विश्वमनुभूतं जगद्वा प्रकृतेरन्तस्तिष्ठत्येव, परं पुरुषसंसर्गादेव प्रकटतामभ्येति।

एतयोः परमार्थयोर्यथार्थस्वरूपबोधात्—कर्मफलैः सर्वथैव निर्मुक्तः पुरुष इति प्रकृतावेव तानि संसक्तानीति च विज्ञायेते। कृष्ण-संवादेन तावदेतदेव विशदीक्रियते।

नरेषु स्थितस्य कस्यचन सनातनस्वरूपस्य सत्यस्य सनिश्चयोपस्थापनेन स्मारिता वयं बौद्धानां शून्यवादम्।

"न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्॥"

वेदान्तदर्शनमतमनुसृत्यैव व्याख्यातस्तत्र "शरीरी"। नरा अनन्तस्य मूर्तयः। कृष्णेनोक्तम्—

"अविनाशि तु तद् विद्धि येन सर्वमिदं ततम्"।

इति। अत्र "तत्"पदेन जगतो मूलतत्त्वम् परमेश्वरो वा, "इदम्"-पदेन नरैरनुभूयमानं विश्वञ्च द्योतिते भवतः। "तत्"पदप्रतिपादितस्य सनातनत्वमविनाशित्वञ्च पुनः पुनः सनिश्चयमुपपत्तिते।

"विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति।"

"न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥"

एतस्माद् एतदेव तावदायाति—आत्मनो मूर्खतयात्मानं कस्यापि हन्तारं मन्यमानो जनो वस्तुगत्या तस्य देहिनो देहान्तर-संश्रयणमेव घटयति। यत :—

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥"

परमेतावदेव तावन्न सर्वम्। यतः

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥"

अत्रेदं तावद् वक्तुं शक्यते एकमपरोऽनुवर्तत इति। हतानामभावात् कुतः स्याद्धन्तृणां सद्भावः। "य एनं वेत्ति हन्तारं" स

तावन्मूर्ख इति वाक्येन तस्मादप्यधिकं किञ्चिद् द्योत्यते। साधारण-बुद्ध्या विषयमिमं तणमालोचयामः। "क"नामधेयः कश्चन जनः "ख"नामधेयेन केनचिज्जनेन हतः। कोऽसौ किंस्वरूपो वाऽसौ येन हत्याऽनुष्ठिता? अत्रासन्दिग्धमेव स्यादिदमेव तावदुत्तरम् "ख"-नामधेयेनैव हननं कृतमतः "ख"नामधेय एवात्र प्रष्टव्यः। सांख्य-दर्शनमनुसृत्य चेदालोच्यते तदाऽस्य तथात्वं न स्यात्।

"कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः"

इत्यतः प्रकृतिजेभ्यो गुणेभ्य एव जातन्तद्धननकर्म इति वक्तुं शक्यते। सत्यं प्रकृतिपुरुषयोर्द्वयेन मेलनेन सञ्जातमिदं कर्म, परं कर्मणोऽस्यैवंविधस्वरूपत्वे न खल्वनुयोज्या प्रकृतिः।

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते॥"

न च्छिन्नसंशयोऽभूदर्जुनः। स उवाच—

"ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन।
तत् किं कर्मणि घोरे मां नियोजयसि केशव॥
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्॥"

कृष्णेन पुनरप्यभाषि—

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम्॥

उल्लिखितयोर्मार्गयोः कर्ममार्ग एव श्रेयान् साधारणस्यापि जनस्याऽऽश्रयणायोग्यश्च। परं कर्तव्यानुष्ठानरूपम् एकमेव लक्ष्य-मुररीकृत्य करणीयं हि सर्वथा कर्म। न केनापि त्यक्तुं शक्यते वर्णा-श्रमानुमोदितः स्वको धर्मः।

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्॥"

परं स्वकर्तव्यतयाऽननुशिष्टानि कर्माणि तस्य वर्जनीयान्येव ।

"श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्विषम् ॥"

अपिच, परार्थपरताया उच्चकैर्भावैरनुप्राणितः सन्नेव कुर्वीत जनः स्वकर्तव्यम् । कर्तव्यबुद्ध्यैव करणीयं तेन कर्म, नान्यस्माद् हेतोः । दारुणं हि फलाकाङ्क्षया विहितं कर्म यतस्तत् कर्मिणं विवर्तमाने जन्मबन्धे नियोजयति ।

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।

अयं हि खलु सुमहान् उपदेशो गीतायामस्माभिरसकृदेव दृश्यते ।

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।"

अपरञ्च—

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स सन्न्यासी"
"निराशीर्यतचित्ताऽऽत्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्विषम् ॥"

अत्र बौद्धमतेन समं गीताया उपदेशानाम् एकरूपता द्राग् व्यक्ततयैवाऽऽभाति । समूलमुत्पाटनीयौ कामः संसारासङ्गश्च । सुष्ठुतया तस्मिन् सम्पादिते सति छिन्नसंसृतिशृङ्खलो विशुद्धो नरः सुखदुःखैरपरामृष्टं निर्विकारावस्थाविशेषं प्राप्य तस्मात् समुच्छ्रितात् प्रसादप्रासादादविचलित एव स्वकीयया पार्थिवप्रकृत्या क्रियमाणानि कर्माणि पश्यति । वस्तुतस्तु बौद्धार्हताम् अवस्था तेन तदानीं लभ्यते ।

परमेश्वरं साकारत्वेन लब्धुं नराणां लालसाविशेषस्य पूरणाय समनुष्ठिते प्रचेष्टन एव गीतानिर्माता बौद्धधर्मप्रवर्तकेन समं सादृश्यमुदवहत् । उपन्यस्ता उपदेशाः सामान्यतो दार्शनिकाः सांख्यवेदान्तमतानुगाश्च । सर्वत्र दार्शनिकभावैः स्पर्धमाना आसते

धर्म्या भावाः। गीताकर्तुर्मनसि निरवच्छिन्नं युध्यमाना आसंस्तदीयैरुद्दीपकैस्तर्कैः समं तस्य भावप्रवणतायाः सानुरागा लालसाः। यस्तावदीश्वरवादः काव्यस्योत्तरांशे दरीदृश्यते, स तु द्वितीयाध्यायस्य सप्तमश्लोकगतेन किंकर्तव्यताविमूढस्यार्जुनस्य—

"यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्"

इति वचनेनैव प्रथमं सूच्यते। सप्तमाध्याये कृष्णः स्वयमेवाऽऽत्मनि परमेश्वरत्वम् आरोपयति—

"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥"

नवमाध्याये तस्येश्वरत्वं पूर्णतयैव प्रकटीभवति। "पिताऽहमस्य जगतः"..."तपाम्यहम् अहं वर्षं निगृह्णाम्युत्सृजामि च"; "अमृतश्चैव मृत्युश्च"। "अपि चेत् सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः" "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति।"

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।"

परं सर्वेष्वेवेश्वरवादात्मकेषु श्लोकेषु चतुर्थाध्यायस्य कश्चन श्लोक एव विशेषेण समुल्लेखनीयः। तत्रेश्वरस्य मानुषरूपेणावतारस्य सुव्यक्तं चकास्ति किञ्चिद् वर्णितम्।

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥"

चरमतश्चैकादशाध्यायेऽर्जुनोऽनन्तशक्तिरूपेण कृष्णं द्रष्टुं तं प्रार्थयाम्बभूव। तत्प्रसादाच्च क्षणं दिव्यं चक्षुर्लब्ध्वा सर्वाश्चर्य-

मयमनन्तं विश्वतोमुखं सूर्यसहस्रमिव दीप्तिमन्तं भगवन्तं ददर्श। अनेकबाहुवक्षोवक्त्रनेत्र उज्ज्वलाखण्डलचापवर्णो दीप्तविशालनेत्रो द्यावापृथिव्योरन्तरं सर्वाश्च दिशो व्याप्य स्थितो महोज्ज्वलभीषणश्चेति वर्णितो भगवान् विश्वरूपः। एकयैव चिह्नावल्या निरूपितावत्रानन्तशक्तिरनन्तरूपश्चेति विस्मयावहः खलु विषयः, परं भारतीयेन शिल्पिना नियतमेवायमनुष्ठीयते। एवं प्रकारेण वर्णितः परमपुरुषो नित्याद् देशकालातीताद् वेदान्तोक्ताद् ब्रह्मणोऽत्यर्थं भिन्न एव।

"अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते"—इत्यादिरूपो ब्रह्मविषयको बोधो न तु साकल्येन विस्मृतः। परं परम-सत्यतया निर्णीतं ब्रह्म शङ्करेणापरैश्च वैदान्तिकाद्वैतवादस्य प्रचारकैर्दर्शितेन वर्त्मना न यथायथं वर्णितम्। ईश्वरस्य सर्वेश्वरत्वात्मके बोध एवात्र ब्रह्म निमज्जयितुं दृश्यते काचित् प्रवृत्तिः। सर्वत्र गीतायाम् अव्यक्तेन परम-सत्येन तुलनया व्यक्तेनेश्वरेण द्वितीयमेव स्थानमधिक्रियते। कर्मणैव मुक्तिर्लभ्यत इति विशिष्टाद्वैतवादिभिर्नैव समर्थ्यते। एतन्मतमवलम्ब्यैव स्वरचिते भाष्ये शङ्करेणोद्घुषितम्—"अविद्याजनितज्ञानमाश्रितेन शुद्धज्ञानविरोधिना कर्मयोगेणाऽऽत्मज्ञानसम्पन्नस्य जनस्य किमपि करणीयमवशिष्येतेति न स्वप्नेऽपि चिन्तितुमलम्"—इति। तथापि जातीयदर्शनं दैनन्दिनजीवितस्याऽऽचारानन्तरा विजृम्भमाणस्यातलस्पर्शस्य खातस्योपरि साधारणानां जनानां कृते निर्मितस्त्वेतेन सेतुः।

उक्तोऽयं भगवद्गीतायाः संक्षेपः। विप्लववादिसमाजैरादेद्रीयमाणेयं गीता कथं तेषां समादरलाभे योग्यतां लेभ इति निपुणं निरूप्यमाणे, अधर्म्यकार्यस्य साधनाय धर्म्योत्साहस्य विनियोजनरूपाणां मानवजातेरितिहासेषु परिदृश्यमानानां शोचनीयानां निदर्शनानामेकतममस्माभिर्लभ्यते।

अष्टाधिकोनविंशतिशततमे खृष्टाब्दे यदा "ढाका-अनुशीलन-समितिः" प्रथमं सघोषणं निषिद्धा, यदा च राजपुरुषैः समिति-गृहस्य परीक्षणं कृतम्, तदा समितेर्वस्तूनां मध्ये द्वादशभ्योऽप्यधिक-संख्यकाः "गीताः" परिदृष्टाः। नियमेन तस्यां समित्यां गीता-ध्यापनमपि प्राचलदित्यत्राऽऽस्त एवेदं प्रमाणम्। निर्गमनात् परं नातिचिरादेव सघोषणं निवारितस्य वैप्लविकवार्तापत्रेषूग्रतमस्य "युगान्तर" समाख्यस्य वार्तापत्रस्य—रक्षणाय च साधूनां विना-शाय च दुष्कृतां युगे युगे सम्भवत्यवताररूपेणेश्वरः—इति भावात्मको गीतायाः श्लोक एवाऽऽसीदादर्शवाक्यम्। वैप्लविक-दुष्करकर्मणः प्रारम्भे गीतां कृपाणञ्च शिरसि निधाय ग्रहणीय आसीत् समितिसदस्यैः शपथः।

केषाञ्चिद्गीताश्लोकानामुपदेशा विकृतायाः स्वदेशप्रीतेः कृते सापराधान्यपि कर्माणि समर्थयन्त इति महत्ताद्गीतायाः संक्षिप्तात् सारांशादेवानायासेन ज्ञातुं शक्यते। मानुषस्य जीवने तस्या-परिहार्येण क्षणभंगुरत्वेन यद्धि नामाऽऽपेक्षिकमगौरवं न्यस्यते, तदेवाऽऽपेक्षिकमगौरवमलब्धपाटवैर्जनैः स्वप्राणविसर्जने परप्राण-घातने चाऽऽरोप्यते। युद्धायार्जुनं प्रति पुनः पुनः कृता उपदेशाः पृथिव्यां धर्मसंस्थापनाय हिन्दुधर्मस्य पुनरुज्जीवनाय वा जनान् प्रवर्तयितुमेव विहिता इति तैर्मन्यते।

"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥"

इत्यादिभ्यः श्लोकेभ्यः कीदृशोऽर्थो ग्रहीतुं शक्यते, स त्वकथि-तोऽपि ज्ञायत एव। "दारुणकर्मकरणाय कर्तव्यतयाऽपेक्षिते शौर्यकठोरतादौ विकृता भावभूयिष्ठता सर्वथा वर्जनीया क्लेश-परम्परारूपं जीवितं समुद्धरद्भिर्जनैरित्यादिप्रवर्तकोपदेशदानादेव सूचिते गीताया महत्त्वं गौरवञ्चेति कथितं स्वर्गतेन बालगङ्गाधर-

तिलकेन। यथा तथा वा भवतु तेषामुपदेशानां समुद्देश्यम्, परम् अयत्नेनैव प्रभावयितुं शक्येषु वङ्गीयेषु तरुणेषु तैरुपदेशैर्यत् फलं प्रदर्शितं तत् तु वैप्लविकदलानां ब्राह्मणवधरूपभीषणतमपापस्यानुष्ठानेऽप्यनौदासीन्यप्रदर्शनादेव सम्यक्तया प्रकाशीभूयते। कृती रक्षापुरुषो वसन्तकुमार-चट्टोपाध्यायो ब्राह्मणोऽपि निरनुशयं तैर्घातितः। वैप्लविक-प्रतिष्ठानानां गुरुभिः सर्वथैवोपेक्षितं वर्णाश्रमधर्मप्रतिपालनरूपं गीतायाः प्रधानमतानामेकतममित्यक्लेशेनापि प्रदर्शयितुम् अलम्। क्षत्रियत्वादेवार्जुनो युद्धायोपदिष्टः। एकवर्णीयानां जनानां धर्मोऽपरवर्णीयैर्जनैर्नानुष्ठेय इति दृश्यते गीतायामेवोपदेशः। न तु वर्णधर्माणां लक्षणं तेषां यथाविधि परिपालनञ्च निर्दिशतोऽष्टादशाध्यायस्य त्रिचत्वारिंशश्लोकात् समारभ्य सप्तचत्वारिंश-श्लोकं यावत् पञ्च श्लोकाः, नवा पुनः "परधर्मो भयावहः" इति विषयप्रतिपादकस्तृतीयाध्यायस्य पञ्चत्रिंशश्लोको वैप्लविकानां गीताध्यापनसमयेषु कदाचिदपि समुल्लेखं लेभिर इत्यसंशयं वक्तुं शक्यते। एतादृशे धर्मप्रवणे देशे विश्ववन्दितस्य गीतासमाख्यस्य ग्रन्थस्य तादृश्यपव्याख्या कथं जातेति सत्यं विस्मयावहोऽयं विषयः। एतस्मादेव कारणाच्छासकेन समाश्रितं कठोरं धर्मविषयकम् औदासीन्यम्। तेन च हेतुना साम्प्रतं सर्वै रेव विद्यालयैस्त्यक्तं धर्मोपदेशनकार्यम्।

वैप्लविकसमान्दोलनस्यैतादृगवस्थाविशेषस्यैव हेतुभूतानां वस्तूनां तादृगेव विद्यत आधिक्यं यथा तै रेव वस्तुभिर्विरचयितुं शक्यतेऽश्रमेणैव कश्चित् सम्पूर्णो ग्रन्थः। तथा सति निर्माणहेतुरप्यस्य (मत्कृतस्य) ग्रन्थस्य परिवर्तितः स्यात्। अतोऽपरां काञ्चिद् वैप्लविकपत्रिकां समालोच्यैवास्माद् विषयाद् विरमामि। "भवानीमन्दिर"समाख्या खलु सा पत्रिका। यस्यारविन्दघोषस्योद्दीपकानि लिखितान्यासन्नध्यात्मवादसिक्तानि, येन च पुना राष्ट्र-

विप्लवरूपदुष्टपिशाचो धर्म्येण भावेन प्रभावितस्तेनारविन्दघोषेणैव सा पत्रिकाऽभूत् सम्पादितेति खल्वतर्कयन् सर्वे जनाः। हिमालये किञ्चिन्मन्दिरं निर्माय तत्र संस्थापनीया हि माता भवानीत्येवं क्रमेण प्रारब्धा लेखकेन पत्रिका। एतस्य पवित्रकर्मणः साहाय्यार्थं समाहूताः सर्वे मातुः सन्तानाः। काऽसौ भवानीति जनः स्वतः पृच्छेत्। भारतीयचित्तापहरणोचितैराध्यात्मिकैर्भाषितैर्भूषितं कविना दत्तं तस्य व्याख्यानम्। सनातनस्य भगवतो यया नामानन्तया शक्त्या कालचक्रमिव जगच्चक्रमिदं निरवसानं भ्रमति, सा हि तावदनन्तशक्तिर्विभिन्नभावेनानन्तरूपेण च जनानां प्रत्यक्षतामुपैति। अनन्तशक्त्यास्तैरेव खलु विभिन्नैर्भावैर्विशिष्यन्ते तावद् युगानि। साऽनन्तशक्तिरेवेयं भवानी, सैव तावद् दुर्गा, सैव खलु काली, सा हि प्रेममयी राधा, सा च लक्ष्मीः, साऽस्माकं जननी सर्वानेवास्मान् सृजति। साम्प्रतिके युगे शक्तिजननीतया सा माता प्रादुर्भूता।

लेखकेन प्रतिपादनीयस्तावदयं खलु विषयः।—देशवासिनां शक्तिसाहससामर्थ्यानामभाव एवाऽऽस्ते। परम् सन्त्येव तेषां ज्ञान-प्रेमोत्साहाः। तथापि शक्त्यर्जनं विना साम्प्रतिके काले एतैः सर्वैरपि न किमपि करणीयं स्यात्। "गभीरं चेच्चिन्त्यते तदा इदमेव तावत् प्रतिभास्यति यदस्माकमस्त्येव कस्यचिद् विषयस्याभाव इति। स हि प्राथम्येन शक्त्यर्जनप्रयत्नरूपः। शारीरिकी शक्तिः, मानसिकी शक्तिः, नैतिकी शक्तिः, सर्वोपरि च सर्वासामेव शक्तीनामव्ययाऽक्षया च योनिराध्यात्मिकी शक्तिश्चेति सर्वा एवास्माभिरर्जनीयाः।"

ततो यो हि नाम जात्यभिमानो वैदेशिकं शासनं नो सहते, यश्च जात्यभिमानस्तद्वतां जनानां विस्फोटकास्त्रस्य (बम्) आवर्तकास्त्रस्य (रिभाल्भार) च ग्रहणे प्रबलः प्रणोदको हेतुस्तं

जात्यभिमानं प्रति लेखकेनाऽऽकृष्टाऽस्माकं दृष्टिः। "भारतं भारतीया जातिर्वा नैव विलीयेत। जगतीस्थितासु जातिषु भारतीयानामेव कृते रक्षितमास्ते नूनं सर्वासामेव जातीनामुत्तरकालीनमङ्गलाय सम्पत्स्यमानं श्रेष्ठं समभिनन्द्यञ्च भागधेयम्। भारतादेव निर्गमिष्यति जगतोऽनागतकालस्य धर्मः। तेनैव च सनातनेन धर्मेण सर्वेषां धर्माणां विज्ञानानां दर्शनानाञ्च मध्ये संस्थापयिष्यते कश्चन समो भावः समानेष्यते च जातिष्वैक्यम्। जातिभिरद्यावधि समनुष्ठितेषु कर्मसु विस्मयावहमुदारतमञ्चेदं सुमहत् कर्म समारब्धुमेवाऽऽविर्बभूव भगवान् रामकृष्णो धर्ममुपदिदेश च विवेकानन्दः।" परं तद्भागधेयस्य सफलतापादनमपेक्षत एव शक्त्यर्जनम्। तस्यायमागतः समयः। अतः प्रथममेव विरचनीयं तावच्छक्तिभूताया भवान्या मन्दिरम्। मातृसेवायै तन्मन्दिरमधिवसेयुः केचन सर्वत्यागिनो नवीनाः कर्मयोगिणः। याभ्यां कर्मभक्तिभ्यामपाक्रियेते नराणां भीतिदुर्बलता च, ताभ्यामेव कर्मभक्तिभ्यां समुपेतस्य पुरातनस्य वेदवाक्यभूतस्य वेदान्तसूत्रस्यान्तः प्रतिष्ठितं ज्ञानं सुप्रतिष्ठं पर्वतमिवावलम्ब्य प्रवर्तेत तेषां कर्म।

एतैः कर्मभिः किं तावत् फलमवाप्यते? भवानीमुखेनैव लेखकेन विहितमस्योत्तरम्। "आर्यधर्ममयं जगद्विधातुं क्षमायाः कस्याश्चिज्जातेर्निर्माणं युष्माभिरेवोपकरिष्यते। न हि यौष्माकीणैव सा जातिः, युष्माकं युष्मदीयानां सन्तानानां च न स वर्तनकालः, सागरैः शिखरिभिश्च परिगतं भूखण्डमेव न हि तद्भुवनम्, परं जनानां कोटिभिः पूर्णा समग्रा भूतधात्री।"

भावप्रवणेषु सोत्साहेषु वङ्गीयानां तरुणानां मनःसु पूर इवोन्मादकस्यामृतस्य विवेश तदावेदनम्। आकुलतापादकैर्धर्मविषयकैर्हृदयावेगतरङ्गैर्विवेकहीनास्ते विपत्पथ एव नीताः। ऊनविंशत्यधिकोनविंशतिशततमखृष्टाब्दस्य प्रथमे भागे वङ्गीयसमिती-

नाम् एकस्याः समितेः कस्यचिन्नष्टभ्रमस्य सभ्यस्य सकाशाल्लब्धे प्रार्थनपत्रे तत् सर्वं स्पष्टीकृतमेवाऽऽसीत्। समितिप्रभावैरप्रभाविता लब्धावकाशाः समितिसदस्याः न च न बहुमन्यन्त आनन्दमठ-निर्मातुरुपसंहारात्मकं वाक्यमिति यत् प्रागेव मयोक्तं प्रसङ्गत-स्तथाविधमेव किञ्चन वाक्यं तत्रापि पदं लेभे। साधारणजनानां निर्भयत्वनाशनोचितकर्मकरणात् समनुभूतो यस्तेन द्वीपान्तरवास-दण्डस्तस्य न्याय्यत्वं प्रतिपाद्य कथितमिदं हि तेन—"द्वीपान्तर-वाससमये एतद्विषयमधिकृत्य स्थिरमप्रमत्तञ्च चिन्तितुमवसरं प्राप्य समुन्मीलिते मे नयने। बुद्धञ्च मया भारताद् बृटीश्शासनस्य दूरीकरणं नैव सुकरं काङ्क्षणीयं वा। यदि दैववशाद् कदाचिदपि शक्नुयाद् भारतं विध्ययन्त्रितेनाधर्मेण वैप्लविकेनोपायेनापि सफ-लतामधिगन्तुम् तदा जगत आध्यात्मिकोन्नयनरूपेण महता लक्ष्येणो-पलक्षितं तत् (भारतं) सर्वाभिर्जगतीस्थिताभिर्जातिभिः कदापि नैवाऽऽश्रयणीयं भवेत्।" येषामाध्यात्मिकभावसम्पन्नानां जनानां निदर्शनैः प्रकीर्णं खल्विदं भारतम्, तेषामेकतमोऽयं धर्मार्थोत्सर्गी-कृतजीवितो लेखकः। राजपुरुषैरनुष्ठितात् तदीयग्रहणात् पूर्वं कथं तेन त्यक्तो वैप्लविकदलेन स्वस्य सम्बन्धस्तदपि तेन तत्र वर्णितम्। न च वैप्लविकदलस्य लक्ष्यं तस्याऽऽसीदनभिमतमिति कृत्वा वर्जित-स्तेन तद्दलस्य सङ्गः परं सनातनस्य सत्यस्य परमेश्वरस्य लाभाया-ऽऽत्मप्रेरणाया अङ्कुशाघातेन समुद्दीपितस्य तस्य स्वजीवितविनियोग एव तत्र सङ्गत्यागे हेतुः। तस्य नाम स्वेषां दले विनिवेशयद्भि-र्विप्लवप्रवर्तकैस्तदीयानां धर्मविषयिणीनामुच्चाशानां कीदृशो व्यवहारः कृतस्तदपि तेनैव व्याख्यातम्। "वैप्लविकैरेव कर्मभिर्भारतस्य मुक्तिर्भवेन्नान्यथेति, हिन्दुधर्मः शास्त्रनिगडान् भङ्क्त्वाऽपि सहस्र-गुणसंवर्धितया भासुरतया सजीवतया चापेतम् अतीतगौरवं पुनरधिगमिष्यत्येवेति, भारतञ्च पराभूय जगन्नूनं तस्याऽऽध्यात्मिकम्

उन्नयनं जनयेदिति च तेषां मतेषु ते तस्य विश्वासमुदपादयन्निति चित्रमेवैतत्।"

विकृतया स्वदेशप्रीत्या विकृतेन धर्मेण च युगपत् संवर्धितस्यास्य करुणस्यापि दुष्टस्य समान्दोलनस्येयं हि खलु शोचनीयता। त्रयोविंशत्यधिकोनविंशतिशततमे खृष्टाब्दे आगष्ट्मासस्य तृतीये दिवसे यो हि नाम युवा शाँखारिटोला-पत्रस्थानाधिकारे स्थितस्य अमृतलालरायस्य घातकतया निर्णीतोऽभूत्, तेनैव कथितम्—"कस्यचिद् धर्मभीरोर्विदुषश्च जनस्याऽऽदेशेनैव मयैतस्य हननं सम्पादितम्" इति। नवसंगृहीतसभ्यानां गुप्तसमितिषु समान्दोलनप्रवर्तकानां पवित्रतायाश्चान्धो विश्वास एव समान्दोलनम् अरुन्तुदेन कारुण्येन विशेषयति।

---

# द्वादशोल्लासः

## भारतीयानां कलानां वैशिष्ट्यम्

अर्वाचीनकालस्य भारतीयं राजनीतिकसमान्दोलनं विशेषयन्त्र्यां विद्वेषविप्लवाभ्यां जाता, देशस्य प्रतीच्यतापादने तदानुषङ्गिकस्य शिक्षितैर्भारतीयैः क्रमप्रतीयमानमूल्यस्य जातीयवैशिष्ट्यस्यापचये च प्रतिकूला प्रतिक्रिया मया पूर्वतनेषु कतिपयेषूल्लासेषु सविस्तरमेवानुचिन्तिता। राजनीतिक्षेत्रे पुनरभ्युत्थानभावः सर्वोत्कर्षेणैव वर्तत ; राजनीतिनिपुणाश्च यथा स्थानान्तरे तथा भारतेऽपि सर्वथैव स्वप्राधान्यरक्षण एव बद्धयत्नाः। जातीयतावादस्य यत् खलु लक्षणं कृतं वि-सि-पालमहोदयेन, तदनुसृत्य चेदुच्यते तदा जातीयतावादिनैव राजनीतिकेन न भवितव्यम्। राजनीतिकोविदस्य जनस्य जातीयताभावाद् राजनीत्यनभिज्ञस्य जातीयताभावोऽधिकतरं हि गौरवास्पदं वस्तु। डक्टर् रवीन्द्रनाथ-ठाकुरः कविरेव, परम् बहुभिर्भारतीयैः स धृतविग्रहो जातीयादर्श इव परिगण्यते। राजनीतिविदां प्रचलितया प्रियया रीत्या विदेशीयशासनस्यात्याचारान् अविचारांश्चावर्णयित्वा वर्णिता तेन स्वदेशीया धीशक्तिः। भारतीयानां स्मृतावव्यक्तरूपेण स्थितां तेषामेवातीतवार्ताम् आलोड्य, स्मारयंश्च भारतीयानामेव विस्मृतप्रायामुत्तराधिकारिताकथाम्, दर्शयति स स्वकं सजीवतासम्पादनकौशलम्। तस्य लिखितेषु प्राचीनभारतस्य जीवितस्वरूपं प्रतिबिम्बितं दृश्यत इति भणितमध्यापकेन राधाकृष्णेन। राजनीतिविदां

विप्लववादिनाञ्च वाण्या यस्मादेव विषयाल्लब्धा प्रेरणा यश्च वा विषयो लक्षीकृतः ; रवीन्द्रनाथस्यापि वाण्या तस्मादेव विषयाल्लब्धा प्रेरणा विषयश्च स एव लक्षीकृतः। चित्रम् जातिगतसङ्कीर्णता-परिहारवादिभिर्जुष्टेऽप्यस्मिन् समये प्राधान्येन मूलतश्च भारतीया-नामेव विषयाणामुन्नतिसम्पादनाय यत्यते तेन सर्वान्तःकरणेन। रवीन्द्रदर्शनविषये भारतीयैर्धृतस्य मतस्य संक्षेपोऽध्यापकेन राधा-कृष्णेन स्वरचितग्रन्थस्योपोद्‌घाते समासेन निवेशितः। "सार् रवीन्द्रनाथठाकुरस्य वाणी-दर्शनयोर्व्याख्यानादेव धर्मकलादर्शनेषु भारतीयादर्शस्य व्यञ्जकं तस्मादेव समुद्गतञ्च तदीयं कार्यजातं व्याख्यातं भवति। रवीन्द्रनाथस्य कृतौ तदीयहृदयस्य भारत-हृदयस्य वा स्पन्दनमनुभूयत इत्यपि नास्माभिः शक्यते बोद्धुम्। कृतौ तस्य शृणोति भारतं स्वकीयमीप्सितं नष्टसन्देशम्।" अपरथा चेदुच्यते, तदा न तु तस्य साहित्यनिर्माणे कौशलम्, परं भुवनस्थितान् जनान् भारतीयसंस्कृतौ स्वकं सर्वातिशायित्वं प्रदर्श्य प्रसभं तेभ्यः सम्माननाभिनन्दनार्जने तदीयं सामर्थ्यमेव भारतीयानां जनगणानां सकाशात् तस्य गौरवलाभे वीजम्।

प्रथमदर्शनात् सम्यगननुभूतोऽपि बुद्धिविषयतालाभानन्तरं विस्मयावहः प्रतीच्यप्रभुत्वमसहमानः कश्चिद् विद्रोहभावः कला-जगत्यपि वर्तत एव। अहमहमिकयोपलक्षिते दारुणेऽस्मिन् युगे समासादितावस्थानस्य भारतीयस्वभावस्य विचेष्टितेभ्य एव जातं परिदृश्यमानमिदं लुप्तवस्तूनां पुनरुद्धरणम्। द्वयोरादर्शयोः सङ्घर्ष-स्यापरोऽयं कश्चनाऽऽकारभेदः।

भारतीयकलानां प्रतीच्यकलानाञ्च मध्ये यो हि नाम मौलिको विभेदो वरीवृत्यते, यश्च विभेदः प्रायेण सर्वथैव न स्वीक्रियते, अन्यथैव वाऽवगम्यते, तमवर्णयित्वाऽस्य विषयस्य विशदीकरणम् असम्भवमेव। नास्ति मे प्रकारगतभेदेनात्र तथाविधः सम्बन्धो

यथा विद्यते लक्ष्यगतैर्भेदैः। प्रकारगतो भेदस्त्वस्त्येव। अवयवनिर्माणप्रधानेन प्रतीच्यचित्रेण समं तुलनया प्राच्यस्य चित्रं रैखिकचित्रतयैव वर्णितम्। परं मे साम्प्रतिकोद्देश्यसिद्धौ द्विप्रकारयोः कलयोर्विभेदचिन्तनम् तुलनया तुच्छ एव कश्चिद्विषयः। भारतीयकलानां प्रतीच्यकलानाञ्च लक्ष्यगतो भेद एवात्रावधानविशेषार्हः। आशयगतोऽयं भेदस्तावत् कथमपि वक्ष्यमाणप्रकारेण व्याख्यातो भारतीयेन व्याख्यात्रा। परितो दृश्यमानान् सर्वानेव विषयान् यथायथं चित्रे विनिवेशयितुं यतन्ते प्रतीच्यशिल्पिन इति नूनं स प्रतिपादयेत्। तक्षको वा चित्रकरो वा प्रतीच्यशिल्पी स्त्रियाः पुंसो वा मूर्तिनिर्माणावसरे विस्मयावहमेव सादृश्यं विरचयति। ससीमा तस्य सौन्दर्यादेरादर्शरचनाशक्तिः। चित्रादर्शभूतस्य वस्तुनः प्रकटान् दोषानपनीय तत्र गुणसंयोग एव स क्षमः। मानवमूर्तेर्यथायथत्वेन चित्रणमेव तस्य कल्पनायाः परा काष्ठा। मानवमूर्त्यतिरिक्तस्य विषयस्य द्योतनं बहिर्भूतमेव तस्याभिप्रायस्य। वास्तवतैव तस्य लक्ष्यं न पुनः काल्पनिकता।

एतद्विषयस्योपपत्तये निरूपणीया एवात्र मे पोष्ट्-इम्प्रेशानिसम् किउबिसम् फिउचारिसम् इत्यादिभिर्नामभिः परिचिता अर्वाचीनाया युरोपीयकलायाः कौतुकावहा उपचयाः। परं तेषां मूल्यावधारणे स्थायित्वपरिचिन्तने चासमर्थमहमात्मानं परिकल्पयामि। तथापि क्षणभंगुरत्वेनोन्मत्तकल्पनात्वेन चागृह्यन्त ते ( उपचयाः ) समकालीनैः कलाविद्भिरिति सत्यमेवैतत्। त्रिविधेषु कलावित्स्वसुखावहाया अतिसूक्ष्मानुभूतेर्जाता कल्पनापूर्णा काचिन्नवीनतैव प्रथमोक्तायाः कलाया वैशिष्ट्यमिति केनचित् स्वीक्रियते। परं किउबिसम्-फिउचारिसम्-विषये तेनैव लिखितम्—"एतौ तावदेवमेव निरर्थकौ यदेतयोः सम्पूर्णरूपेणासुखावहयाऽनुभूत्याऽपरामृष्टत्वं वक्तुं शक्यते। फिउचारिसम् व्यपदिशति

स्वस्यानुगतं विपुलं कञ्चन भावपर्यायम्। परं फिउचारिसम्-विशेषज्ञैस्तं भावपर्यायं वर्णयितुमालिखितुं वा कदाचिदपि न साफल्यं लब्धम् इति क्षीणायां स्वगतनूतनतायां प्रवाहविच्छेद-मनुभवन्त्यपराणि चित्रविषयकाणि मनोलौल्यानीव स फिउ-चारिसम् अपि किउविसम्श्रेण्यामेवास्माभिः संस्थाप्यते। सत्यं वा मिथ्या वैतद् विवरणम्, युरोपीयाणां साम्प्रदायिककलास्वेते प्रकारा नैव कञ्चिदपि भागं गृह्णन्तीत्यस्य विषयस्य ग्रहणमेवात्र मे समीचीनतया प्रतिभाति। हिन्दूनां बौद्धानाञ्च कलाभ्योऽप्रदायैव स्वपक्षसमर्थनावसरं तासां निन्दनाय या खलु स्वाभाविकी प्रवृत्तिर्जायते प्रतीच्यकलायाः प्रधानप्रवाहभूतया वास्तवतया रञ्जित-मात्मानं मन्यमानस्य भारतीयस्य परीक्षकस्य, सा तु न च न युक्तिसिद्धा।

भारतीयानि मण्डोदकचित्राणि तदितराणि चासङ्गताकारतया युरोपीयाणां विस्मयमेवोत्पादयन्ति। मनुष्याकाराणां हास्यजनक-मनुकरणं हि भारतीयं प्रतिच्छन्दः। भारतस्यांशविशेषेषु स्थितानां मन्दिराणां गात्रेषूत्कीर्णानि मूर्त्यादीन्यश्लीलान्येव। भारतीय-कलानां प्रतीच्यकलानाञ्च तुल्यश्चेत् प्रवृत्तिनिमित्तम्, तदा प्रतीच्य-कलाभिज्ञेन भारतीयेन परीक्षकेणानुष्ठितं तासां निन्दनमपि न्याय्यत्वं यायात्। अत्र तावद् भारतीयो व्याख्याता स्वदेशीयानां कलानां लक्ष्यान्तरत्वमेव प्रतिपादयेत्। तन्मते तु जागतिकानां वस्तूनां यथार्थप्रतिमूर्तिनिर्माणेन समं नास्ति कोऽपि सम्बन्धो भारतीयस्य कलाविदः। वाह्यरूपमनु यत् खलु सत्यं विद्यते, तत्प्रतिपादनमेव तस्य लक्ष्यम्। तदीयाः कलास्तदीयं दर्शन-मनुवर्तन्ते। अतथ्यं हीन्द्रियग्राह्यं जगत्। आवरणमात्रं तत् तथ्यस्य वस्तुनः। विचित्रस्य तस्याऽऽवरणविशेषस्य प्रतिरूप-निर्माणे न दृश्यते तस्येहा, परं दृश्यत एव सा तदावरणेन व्यव-

हितस्य वस्तुनः समुपस्थापने। यः खल्वाध्यात्मिकभावस्तस्य दर्शनेषु देदीप्यते, कलास्वपि स एव तस्य प्रणोदकः। न हि स चक्षुरिन्द्रियग्राह्यमेव वस्तु चित्रेषु निवेशयति, परं तद्वस्तुनो ध्यानाद् यत् तस्य मनसि जायते, तदेवाऽऽकारैर्वर्णादिभिश्च योजयति।

द्रष्टुमशक्यानां विषयाणां सूचनम् न पुनर्नेत्रपथागतानां वस्तूनां याथातथ्येन चित्रे विनिवेशनमेव समुद्देशो भारतीयकलाविद इति विषये प्रतीतिविषयतां गते सुग्राह्याणि भवन्ति सनातनप्रथानुयायीन्यस्वाभाविकान्यपि भारतीयानि धर्म्याणि प्रतिरूपाणि। "शरीरविज्ञानानुमोदितमानवशरीरस्य यथार्थप्रतिमूर्तितया तद् (भारतीयकलाविदा लिखितश्चित्रम्) ग्रहीतुं नैव शक्यत इति लिखितं ओ-सिगाङ्गुलीमहोदयेन। संवदन्ति च तानि वास्तवतामतिवर्तमानेन केनापि वस्तुना। शारीरविज्ञानानुमोदितेन साधारणजनस्य शरीरेण नैव वहन्ति तानि किञ्चिदपि सादृश्यम्। अतः खलु चित्रवस्तुनो बाह्याकारातिरिक्तविषयस्य प्रकटनाय भारतीयेन कलाविदा श्रयणीया आसन् केचन विशिष्टाः सङ्केताः अतिवास्तवताप्रतिपादनोचितावयवसंस्थानभेदाश्च।

अतस्तावन्मन्ये प्रतीच्यदेशीयैः कलानां गुणदोषविचारकैरविचार्यैव भारतीयदेवतामूर्तीनां बहुबाहुत्वबहुमस्तकत्वादिरूपाणि वैशिष्ट्यानि नीतिविरुद्धानि भावव्यञ्जनेऽक्षमाणीति च दूषितानि। विशुद्धाः कलाश्चेद् भावानामभिव्यक्तिर्न त्वाकाराणाम्, तदा दक्षिणभारतस्थितैर्मन्दिरतक्षकैर्निर्मितस्य नृत्येश्वरस्य शिवस्य श्रीनटराजस्य पित्तलमयप्रतिरूपस्य शिल्पचातुर्यं नैवापलपितुं शक्यते। चतुर्भिर्भुजैः समुद्धृतेन वामपादेन चोपलक्षिता वह्निमण्डलपरिगता सा मूर्तिः प्रचण्डवेगसम्पन्नं किञ्चिद् वस्तु द्योतयति। शक्तान्यशक्तानि वा भवन्तु तानि नाम प्रतिरूपाणि वैदेशिकानां मनसि सौन्दर्यभावमुद्बोधयितुम्, परं भारतीयानां सविधे तेषां व्यञ्जकत्वमस-

न्दिग्धमेव। भारतीयानां समीपे नटराजो धृतविग्रहम् इव समग्रं दर्शनशास्त्रम्। सर्वस्य जगतो धात्रीं सर्वेषां प्राणरूपाञ्चाऽऽद्या-शक्तिं पश्यति स नृत्यस्य भ्रमिषु। प्रलयकामना मुक्तयवाप्तयश्च नृत्य-स्यापराभिरवस्थाभिर्विनिवेद्यन्ते। नटराजस्य मूर्तेर्विस्तृतं विवरणं तत्समसामयिकैः साहित्यैर्वर्णितस्य तन्मूर्तेराशयस्यांशविशेषाश्च डक्टर्-कुमारस्वामिलिखिते "डान्स् अफ् शिव" (शिवनृत्यम्) समाख्याते निबन्धात्मके ग्रन्थ एव दृश्यन्ते। नैव पारयन्ति प्रतीच्य-कलाविदो भारतीयया दृष्ट्या मूल्यमवधारयितुं तस्य शिल्पकर्मणः, यस्यान्तर्निहितार्थस्तेषां सकाशे प्रच्छन्न एवाऽऽस्ते।

डक्टर् कुमारस्वामिसदृशेन विदुषा दृश्यतां नाम नटराजे कलाधर्मविज्ञानानां सङ्कलनम्, घुष्यतां वा तेन "दृग्विषयाणामन्तः-स्थितायाः, विज्ञानेन निर्विवादं स्वीकृतायाः शक्त्या, विज्ञतया निर्मिता एतादृशी यथार्था प्रतिमूर्तिर्नैव शक्यते समुत्पादयितुं साम्प्रतिकेन महत्तमेनापि कलाविदे"ति, वयं त्वस्य मूल्यावधारणेऽ-सन्दिग्धमेवात्तमा इति च ब्रूमः।

एशियामहादेशस्य पूर्वभागे सुबहुलप्रचारात् प्राच्यविषयानध्येतु-कामानामध्वनीनानाञ्च सममेव परिचिता हि बुद्धस्य साङ्केतिकी निषण्णा प्रतिमूर्तिः। भारतीय-युरोपीययोः कलयोर्मध्ये स्थितो यः खलु कलाविषयको मौलिको विभेदः प्रकटीक्रियते दक्षिणभारतस्य नटराजस्य प्रतिमूर्त्या, बुद्धस्य प्रतिमूर्त्याऽपि स एव विभेदः प्रकाशी-भूयते। प्रतीच्यदृष्ट्या चेत् समालोच्यते बुद्धस्य प्रतिमूर्तिस्तदा तत्र बहव एव दोषा दृश्येरन्। मुखमण्डलं भावविहीनम्; नापि शरीरविज्ञानानुगस्तत्रावयवसंस्थानविशेषः। बुद्धस्य मूलशरीरेऽ-स्थिमांसधमन्यादिकम् आसीदित्यस्य नास्ति तत्र किमपि सूचकम्। एतया दृष्ट्या सा प्रतिमूर्तिरसमाप्तेति वक्तुं शक्यते, परं प्रतिमूर्त्या तया मनसि समुत्पाद्यत एव शिल्पिनस्तस्या अभीप्सितः स भावः।

कामकुरस्य विशाला पित्तलमयी बुद्धप्रतिमूर्तिर्बौद्धशिल्पानभिज्ञस्यापि मम मानसे यं खलु भावं समजनयत् तस्य पुनर्वर्णनाय जायते मेऽत्र प्रबला काचिद् वासना।

"उन्मुक्ते नभस्तले कस्मिंश्चिद् रमणीये भूभागे वर्तते प्रतिष्ठिता सा विपुला प्रतिमूर्तिः। मूर्त्याश्रितस्य तस्य भूभागस्य सौन्दर्यं कथमपि नैव शक्यतेऽपलपितुम्। नेत्रविषयीभूतायां तस्यां बुद्ध-प्रतिमूर्त्याम्, तत्स्थानस्य स्थिरस्य दृश्यस्य रमणीयतामवमत्यैव सम्पूर्णनिर्विकल्पताभावः प्रसभमप्रतिहतश्च विशति नराणां चेतःसु। या खलु दिव्या शान्तिर्मूर्तिमयीव ददृशे बुद्धस्य वदने, समयेनानित्य-तया च समं दृढं नीरवञ्च स्पर्धमानैव सा चकासाञ्चकार। ऋतूनां परिवर्तनेन समं भिन्नरूपत्वं प्रयान्त्यस्तमनानि, परं कालस्य गत्याऽ-परामृष्टा, ग्रीष्म-शीतयोः शरद्वसन्तयोश्चानवहिता, जायमानेषु म्रिय-माणेषु च जनेष्वचेतना गभीरध्यानमग्ना, कामवासनावर्जनमात्र-लभ्यायां पूर्णायां शान्त्यां विराजमाना सा बुद्धस्य प्रतिमूर्तिस्त-थैवाद्यापि शोभते। तस्या दिव्यायाः शान्त्याः पूर्णायाः सुमहत्या निर्वृतेश्च समीपे सर्वमन्यत् तुच्छतां जगाहे।"

निपुणं विचार्यते चेत् तादृशानुभवस्योद्बोधकं कारणम्, तदा भावस्य वस्तूनां याथातथ्येन विनिवेशनस्य चाभाव एव तत्र प्राधा-न्येन प्रव्यक्ततां यायात्। समग्रया प्रतिमूर्त्या द्योतितात् स्थिरतात्म-कात् प्रधानाद् भावान्नैवान्यतः समाकृष्यते मनः प्रतिमूर्तेरितरै-र्विस्तारविशेषैः। सर्वं हि तत्र निश्चलम्। शरीरे मनसि वा किमपि नासीच्चञ्चलताया व्यञ्जकम्। प्रशान्ततताया वा, कर्मविमुक्तेर्वा, मोक्षादिशब्दवाच्यायाः सकलबुद्ध्यतिशायिन्याः पूर्णायाः शान्तेर्वा, जन्मव्यसननिष्कृतेर्वा, यं हि नामाऽऽदर्शविशेषमधिगन्तुं युगानि व्याप्यैकान्तिकेनाऽऽग्रहेण यत्यते भारतीयैस्तस्याऽऽदर्शविशेषस्यैवेयं प्रतिमर्तिः।

रीतिगतः समुद्देशगतश्चायं भेदः स्फुटं हि लक्ष्यत आकारप्रदा कलासु। भारतीयप्रतिमानां विशेषकं लक्षणं भारतीयेषु चित्रेष्वपि वरीवृत्यते। जाने प्रतिवादविषयतां यास्यति मे सामान्येयमुक्तिः। क्राइष्ट्-सम्भूतेः परतः प्रायेण सप्तशतवर्षाणि भारतीयचित्रकलायाः प्रथमावस्थारूपेण परिगण्यन्ते। अजन्तास्थितानि बौद्धमण्डोदकचित्राणि तात्कालिकानां चित्राणां मुख्यानि निदर्शनानि। प्रदर्शयाञ्चक्रुस्तत्र बौद्धचित्रगुरवः स्वेषां सम्प्रदायस्याऽऽदर्शभूतानि चित्राणि। लक्ष्येण काल्पनिकान्यपि सम्प्रदायस्यास्य चित्राणि वास्तवान्येवाऽऽसन्। सप्तदशशताब्द्यां जातेनैतिहासिकेन तारानाथेन तानि चित्राण्यधिकृत्य लिखितम्—"तेषां चित्राणां वास्तवता जनानां भ्रान्तिमेवोदपादयद्" इति। तथैव मोगलसम्प्रदायगतेषु चित्रेष्वपि वास्तवत्वस्यैवोत्कर्षो दृश्यते। चित्रविषयीभूतेन वस्तुना चित्रस्यात्यर्थं सादृश्यनिर्माण एवालक्ष्यत तस्य ( मोगलसम्प्रदायस्य ) प्रयत्नः। परं मोगलसम्प्रदायेन तद् वास्तवत्वं पारसिकदेशान्मध्य-एशियातश्च लब्धम्। अतस्तद् भारतभूखण्डजातत्वेन ग्रहीतुं नैव शक्यते। मोगलसम्प्रदायेन सममेव विवृद्धिं गते प्रत्नाद् भारतीयसम्प्रदायाज्जाते राजपुतसम्प्रदायेऽप्यवतिष्ठते विशुद्धा काल्पनिकता। अनेकशो देवत्वं प्रापितानां पशूनां चित्रेष्वेव सा काल्पनिकता विशेषेण प्राकट्यं दधौ। भारतीयकर्षकस्य दैनन्दिनजीवितस्य चित्राङ्कणे निपुणोऽपि राजपुतचित्रकरः सुमहद्भ्यां धर्म्याभ्यां महाकाव्याभ्यां रामायण-महाभारताभ्यां तात्कालिकयोः शैववैष्णवमतयोरुपाख्यानेभ्यश्च प्रेरणालाभायासकृत् प्रयेते। अति हि नाम गूढार्थं तस्य शिल्पम्। न चैतदेव सर्वम्।

भारतीयकलायां विशिष्टतया परिदृश्यमानस्य व्यञ्जकत्वस्य निदर्शनतां गाहमानानां राजपुतसम्प्रदायगतचित्राणां कानिचिन्मत्करतलगतान्येवाऽऽसते। गुणवान् द्रष्टैव कलानां गुणागुण-

विवेचनायालम्। द्रष्टरि स्थिता गुणा दृश्ये वस्तुन्यपि संक्रमिता भवन्तीति मन्यन्ते भारतीयाः। मदधीनेषु चित्रेषु कानिचिद् रमणीय उद्याने समवेतानां विभिन्नावस्थया स्थितानां नरनारीणां विचित्राणि चित्राणि। कानिचित् पुनः सुचारुजलप्रवाहेणेतस्ततो विच्छिन्नेषु शाद्वलेषूपवनेषु वा विराजमानानां मनोहराणां पटमण्डपानाम् अलिन्दान् समुन्नता वेदिकाश्च संश्रितानां स्त्रीपुरुषाणां प्रतिरूपाणि। परिस्फुटो हि वर्णकविन्यासः। प्रतीच्यदृष्ट्याऽस्वाभाविक्योऽसुगमा अपि तास्ता मूर्तयो भारतीयविध्यनुरूपा उल्लासभावोद्बोधिकाश्च। न मया बुद्धानि तानि चित्राणि। पत्रे तानि येन प्रकारेण विलिखितान्यासंस्तदतिरिक्तं किमपि व्यञ्जकत्वं तेषां न खलु मया समनुभूतम्। अनुभूयत एव तेभ्यश्चित्रेभ्यो भारतीयैः कलाविद्भिस्तथाविधः कश्चन भावो यस्तावद् अस्माभिर्नैव बुध्यते। तेषां यस्य कस्यापि वैकतमस्य दर्शनाद् हिन्दुकलापरीक्षकस्य मनसि नूनं जायेत विशिष्टः कश्चिन्माधुर्यरसः। चित्रं स मूर्तिमत् सङ्गीतकं मन्यते। सर्वाण्येव चित्राणि स्वेषां वर्णकैराकारैश्च माधुर्यविशेषमेव द्योतयन्ति। सुस्वरं सङ्गीतमाकर्णयता मनसि लिख्यते तेन तत् सङ्गीतस्य चित्रम्। सङ्गीतेन चित्रस्यैतादृक् सम्मिश्रणं भारतीयैरेव भारतीयकलायाः समुद्देश्यतया स्वीकृतस्य वस्त्वन्तःस्थितभावप्रकाशनस्य, अमूर्तविषयकाभिव्यञ्जनस्य वा निदर्शनमेव समुपस्थापयति। भावाः, न तु प्राणिनो द्रव्यादयो वा शक्नुवन्त्यात्मानं सङ्गीते चित्रे च युगपत् प्रकाशयितुम्। शोपेन्हार्-महोदयेन शिल्पेन सङ्गीतस्य यः सम्बन्धः प्रदर्शितस्तेनैव विषयोऽयं तुलयितुं शक्यते। वाह्याकारैः सममेतयोर्द्वयोः कदाचिदपि सम्बन्धो न दृश्यते। पूर्वोक्तो विषयः समयेनासम्बद्धः सन् स्थानविशेषमधिकुरुते। परोक्तो विषयस्तु स्थानविशेषेणासम्बद्धः सन् समयविशेष एव विद्यते। परं तालः, समतैक-

भावाश्रितत्वञ्च द्वयोरेव मुख्यभावेन परिलक्ष्यन्ते। एतयोरेकयोनि-जत्वाद् एफ् भन् शेगल-महोदयेन स्थाने खलु शिल्पं स्थिरीकृत-सङ्गीतत्वेन वर्णितम्।

भारतीया मनोवृत्तिरमूर्तेषु न पुनर्मूर्तेषु, भावेषु न पुनर्वस्तुषु समन्विष्यति सत्यमिति आकवरस्य सभायां स्थितस्य विश्रुत-सङ्गीतज्ञस्य तानसेनस्य प्रख्यातया कथयैव विशेषेण विशदीक्रियते। मध्याह्ने आकवरस्तं गायकं रात्र्यां गेयं कञ्चिद् रागं गातुमादिदेश, विभिन्नेन भावेन, ऋतुना कालेन च सम्बद्धो विभिन्नो रागो गेयः खलु समुचिते काले समुचितायामवस्थायाञ्च। राजादेशं शिरसि निधाय स एव रागः समारब्धस्तानसेनेन। अथ समुत्थिते गायकस्य सङ्गीतघोषे तद्ध्वनिमुखरे भूभागे समवततारान्धकारः। सङ्गीत-माधुर्येण दिवैव समागता रजनी, अथवा रागमुग्धाः श्रोतारो दिवसमपि रात्रित्वेनामन्यन्त। भावविशेषाणां पार्थिवाकारलाभ-विषयकेषूपाख्यानेष्विदं खल्वेकम्। सत्यमेतेन सुश्रृङ्खलितस्यापि प्राकृतिकनियमस्य विरोधो जायते।

---

## त्रयोदशोल्लासः

### धर्मस्य यौनप्रतीकतावादः

पूर्वतन उल्लासे व्याख्यातानि मया भारतीयकलानां वैशिष्ट्यानि, प्रतीच्यदृष्ट्याऽस्वाभाविकतया प्रतीयमानानां प्रतिमूर्तीनां तथात्वे कारणानि च। युरोपीयावस्कन्दात् परं कियन्तं कालं विषयान्तरेष्विव भारतीयकलास्वपि प्रतीच्यभावस्यैवाभूत् प्राधान्यम्। प्रतीच्यस्याऽऽदर्शो गुणागुणविवेचितानि च तदानीं स्वीकृतानि भारतीयैः। व्यापारान्तरेष्विवात्रापि जाता काचित् प्रतिकूला प्रतिक्रिया। साम्प्रतं समुत्थित एव कश्चिल्लेखकवर्गो येन प्रत्याख्याय वैदेशिकमतानुगं समालोचितं स्वदेशस्य प्रत्नः सम्प्रदायः समर्थ्यते। भारतीयकलानाम् अभिनवेनानेन दिग्विजयेन सममतीतकालस्य मतादिभ्यो लब्धप्रणोदनः समुदितो भारतीयचित्रस्याऽऽधुनिकः सम्प्रदायः। साहित्यजगति डक्टर्-आनन्दकुमारस्वामी, चित्रजगति च कलाविद्वर्गेणानुगतौ डक्टर्-अवनीन्द्रनाथठाकुर-गगनेन्द्रनाथठाकुर-महोदयौ चैतस्य समान्दोलनद्वयस्य प्रधानाः प्रतिनिधयः।

प्रथमतो भारतीयकलाः समाश्रित्य युरोपीयैः कृतेन समालोचितेन द्वन्द्वम्, द्वितीयतश्च प्रतीच्याकर्षं त्यक्त्वा स्वदेशस्य पुरातनादर्शस्वीकरणाय भारतीयानां सविधे प्रार्थनम् इति विषयद्वयमेव लक्षीकृतं डक्टर्-कुमारस्वामिनो लिखितैः। भारतीयधर्म्मसाहित्यस्य यौनप्रतीकतावादः स्वत एव सुतीव्रसमालोचनाविषयतां गतोऽपि युरोपीयसमालोचकैर्न याथार्थ्येन बुद्धः। भारतीयमनोवृत्त्या

सम्बन्धमभिलषतां प्रतीच्यदेशजानां जनानां भारतीयसाहित्यस्यायं भावस्तावत् प्रबलः प्रतिबन्धः। केषुचिद् हिन्दूनां धर्मपुस्तकेषु देवानामपि मानुषोचितमदनविकारादेर्दर्शनात् तान्यप्यसुबोधत्वमेव प्रयान्ति। स्थानान्तरे मया लिखितपूर्वा राधाकृष्णयोः शृङ्गार-वर्णनात्मिकाः कथा अत्रोदाहरणाय कल्पन्ते। पूर्णविश्वासोत्पादने-ऽसमर्थान्यपि डक्टर् कुमारस्वामिनोऽन्येषाञ्चैतद्विषयकाणि व्याख्या-नान्यत्र भृशमेवोपकारकाणि भविष्यन्ति।

तन्मते दिव्यो रहस्यविशेषो हि सर्वं प्रेम। भारते पवित्रा पवित्रभेदेन प्रेम्णो विभागः सर्वथा निरर्थक एव। कस्याश्चित् स्त्रियास्तत्प्रेमवशगस्य जनस्य समीप आत्मनिवेदनम् परमात्मना जीवात्मनो मैलनत्वेन गृह्यते। "भारते यौनसम्बन्धो दिव्यरहस्य-तयैव न तु कदाप्यसङ्गतानामश्लीलानां वा भावानां द्योतकत्वेनाङ्गी-क्रियते" इति सार्-मणियर-विलियम्-महोदयस्य वचनं सम्पूर्णरूपेण स्वीकृत्यैव तेनास्योपन्यसनं कृतम्। भारतीयानां धर्मो न हि तेषां दैनन्दिनजीवितस्याऽऽचरितेभ्यो विच्छिन्नः कोऽपि पदार्थविशेषः, परं क्षुद्रात् क्षुद्रतरस्यापि तेषां दैनन्दिनजीवितस्याऽऽचरणस्याऽऽस्त एव कश्चन धर्म्यो भाव इत्येव तदीयं मतम्। यथा जलं विभज्य यथेच्छं पात्रद्वये रक्षितुमभिलषितसमयेऽवपातयितुञ्च शक्यते, न हि तथा धर्मो जीविताद् विभिद्याऽऽधारान्तरे निधाय प्रतिसप्तमदिनं तस्मान्नि-र्गमय्य पुनर्जीवितेन योजयितुं पार्यते।

भारतीयधर्म्यसाहित्यविशेषस्य यौनप्रतीकतावादस्येदं व्याख्यानं शङ्के नैव सुगमं भवेद् युरोपीयाणां विद्यार्थिनाम्। उडिष्याप्रदेशान्त-र्गतकोणारकस्थितस्य विशालसूर्यमन्दिरस्यान्येषाञ्च मन्दिराणां शोभासम्पादिका मूर्तीर्दृष्ट्वा रोमसाम्राज्यस्य चरमे भागे जातस्य तक्षणकर्मणो वैशिष्ट्यञ्चेत् स्मर्यते तेन युरोपीयविद्यार्थिना, तदा न हि स निन्दनीयः। वस्तुतस्त्वन्यासां जातीनामिव भारतीयानाम्

अप्याध्यात्मिकजीविते धीविषयकजीविते च समजन्येव तावत् समुन्नत्यवनत्यादिकम्। परं सुदीर्घसमयाश्रयणाद् भारतस्योन्नत्यवनत्यादिकं समधिकं स्फुटतां जगाहे। बुद्धधर्मस्यापचयेन समं जनानामाध्यात्मिकजीविते समलक्ष्यत कश्चिदवसादः। तदानीं रहस्यात्मकं तान्त्रिकमतं तत्सदृशान्यपराणि च धर्ममतानि सुबद्धमूलानि सन्ति परां विवृद्धिं भेजिरे। एतेन समाजस्य नैतिकचरित्रस्य च सुमहान् समजायतापकर्ष इति राय-बाहादुर-दीनेशचन्द्रसेनेन प्रदर्शितम्। तथाविधानां धर्ममतानां धर्माचाराणाञ्च प्रतिपादके रहस्यमये तात्पर्येभारतीया लेखकाः स्वत एव गौरवं दधिरे। मानुषोचितप्रवृत्तीनामपरिहार्यं फलमप्युपेक्षितुमुन्मुखास्ते समजायन्त। दिव्यं प्रेमावलम्ब्य जिगासवो भक्ताः स्वोद्देश्यसाधनाय जागतिकरागव्यञ्जनार्थं मानुषैः प्रयुज्यमानां गिरमेव युक्तियुक्तां मत्वा तामेव गृह्णन्तीति—साधारण्येन सर्वेषां भक्तानां भक्तिविषयकमुन्नमनमधिकृत्य ब्रुवाणेन स्वामि-विवेकानन्देनाभिहितम्। दाम्पत्यप्रेमाप्युत्कटभक्तस्य सविधे नैव गौरवविशेषं गाहते इत्यपि तेनैवाभ्युपगतम्। परकीयाप्रेमैवाऽऽदर्शत्वेन परिगृहीतं तेन। यतस्तत्रैव खलु रागस्योत्कटता परिलक्ष्यते। व्याख्यातञ्च तेन—"न च तस्यावैधस्य प्रेम्णोऽनौचित्यमत्र मया लक्ष्यीक्रियते, परं गाढतेति। उत्कटमानुषिकरागस्याभिव्यञ्जकैरक्षरैर्दिव्यस्य प्रेम्णः प्रकाशनेऽविश्वासमुद्वहत्सु जनेषु सावज्ञ इव खल्वासीत् स महात्मा। "जागतिकदृष्ट्या पश्यन्तो मूर्खा इदं न बुध्यन्ते नैव भोत्स्यन्ते चेति" तेनैवाभाषि।

दुर्भाग्यतया मानुषनिष्ठत्वान्मानुषधर्मस्य शारीरिकवृत्तयो बलादेवाऽऽत्मानं प्रकाशयेयुः। बुद्धधर्मस्यापचयसमयेऽभ्युदयं गतः "सहजिया" धर्मस्तत्समयजातानां धर्माणामेकतमः। "दिव्यप्रेमावाप्तिसहायको विद्यत एव कश्चन गुणः सुरतरसे, अतस्तेनैवा-

र्जनीयं तत् प्रेम"—इतीदं तत्त्वमाश्रित्य प्रवर्तते स धर्मः। जागतिक-बुद्ध्या "प्रेम"पदेन यदवगम्यते तस्मादपरम् "उपासनम्" एवानुशिष्टं तेन धर्मेण। परं रूपवतीषु युवतीषु प्रमदासु विचित्रायां तस्या-मुपासनायामुपास्यत्वं गतासु, स्वकीयभार्योपासनेन नैवावाप्तुं शक्यते परमं लक्ष्यमिति विषये च प्रतीतिविषयतां गते, तद्धर्म-मतस्य विपदः सुव्यक्ता बभूवुः। तस्मादेव धर्ममताल्लब्धप्रणोदनानि श्रृङ्गाररसात्मकानि पद्यानि। दशमशताब्द्याश्चरमे भागे बौद्ध-पण्डितेन कानुभट्टेन विरचितानि पद्यान्यश्लीलतापूर्णान्येवेत्यत्र नास्ति विस्मयस्यावकाशः।

पञ्चदशशताब्द्या ब्राह्मणकविना चण्डिदासेन "सहजिया" धर्मस्य तत्सजातीयस्य वैष्णवपरमार्थविद्याया जातस्य "परकीया-रस"धर्मस्य चाऽऽध्यात्मिकभावः सुदृढं संस्थापितः। "जितेन्द्रियो जन एव सहजियाधर्मस्य सारं बोद्धुं शक्नुयान्नान्य" इति तेनो-द्घोषि। सुप्रसिद्धं हि "रामी" रजक्यां विचित्रस्य प्रेम्ण उपा-ख्यानम्। तस्य प्रेम्णः कृते जातिपरित्यागोऽपि तेन स्वीकृतः। साधारणेन जनेनास्य धर्ममतस्य परिपालनं दुष्करमितीदमपि न च नाऽऽसीत् तस्य सुविदितम्। अस्य धर्ममतस्यानुवर्तनोचितस्याऽऽ-त्मसंयमनस्याभावं प्रतिपादयितुमपि नैव स दोलायमानमति-र्बभूव। सुमेरुपर्वतस्योच्चतमं शिखरं सूत्रेणोत्तोलयितुं क्षमेण वा मत्तहस्तिनं लूतातन्तुभिर्बन्धुं समर्थेनैव वा जनेन प्रेमेदं लभ्यते। "सर्पस्य वदने भेकं नर्तयितुं क्षमः स्याद् यथार्थः प्रेमोपासकः" इत्यस्य वचनस्य व्याख्यानावसरे रायवाहादुर-दिनेशचन्द्रसेने-नोक्तम्—दारुणैरिन्द्रियग्रामै रिरंसुर्ध्वंसस्याभिमुखं गतो वा सत्यः प्रेमोपासकोऽक्षतविग्रहेण प्रत्यावर्तितुं सर्वथैव विजितेन्द्रियो भवे-दिति। एतद्धर्मविषयकग्रन्थानां सुबहुलप्रचारदर्शनाद् वङ्गेष्वस्य धर्मस्याऽऽदरोऽनुमीयते। पुरातनवङ्गसाहित्याद् रायवाहादुरदिनेश-

चन्द्रसेनेन सहजियामतावलम्बिनां त्रिंशत्संख्यकानां ग्रन्थनिर्मातॄणां नामतः समुल्लेखः कृतः, प्रायेण चत्वारिंशत्संख्याकानां पुस्तकानां नामान्यपि प्रदत्तानि। खृष्टीशागमनस्य द्विशतवर्षेभ्यः पूर्वं खल्वेतानि पुस्तकानि विरचितानि। नेपालप्रदेशस्य राजकीय-पुस्तकालयस्यान्वेषणाभिरेतैः सदृशानामपरेषामपि पुस्तकानां विद्यमानता विद्योतिता।

वैष्णवधर्मशास्त्रेषु दरीदृश्यमाना राधाकृष्णप्रेमकथा "परकीयारस"धर्मस्य प्रकृष्टं निदर्शनम्। राधाकृष्णयो रहः प्रणयकेलिवृत्तमेव कथायास्तस्या वाह्याकृतिः। राजपुत्री राधा कस्यचिद् गोपालबालकस्य प्रेमवशगा जाता। उत्कृष्टप्रणयिरूपेण वर्णितस्तत्र श्रीकृष्णः। परमवैष्णवास्तस्याः प्रेमकथाया रहस्यं प्रदर्शयन्ति। श्रीकृष्णो हि भगवतोऽवतारः राधा च जीवात्मा। स्थूलदृष्ट्या जागतिकीत्वेन प्रतीयमानाऽपि सा राधाकृष्णप्रेमकथा वैष्णवानां मनसि—"भगवद्भक्त्यैव मुक्तिरासादनीयेति" भावं जनयति। "परकीयारस"धर्मस्य "सहजिया"धर्मस्य चायमेवाऽऽसीदादर्शः। परं कदापि तत्तद्धर्मावलम्बिभिर्नाधिगतः स आदर्शः। निर्मलचरित्रेषु जनेषु सञ्जाते तादृशे प्रेमभावे, प्रबलतया विराजमानास्वपि च नैतिकीषु सामाजिकीषु च बाधासु विचित्रतमः स आदर्शस्तत्र तत्रापरिहार्यफलरूपेण प्रकटतामुपैति। तास्तावत् समुपस्थापिता बाधा अनुरागात्मकं काव्यमेवोत्साहयन्तीत्यस्माभिस्तदानीं दृश्यते। अस्याऽऽदर्शभूतस्य प्रेम्णः समुन्नततमायां वेदिकायां किमपि नास्त्यनुपहरणीयं तादृशस्य प्रणयिजनस्य। ईश्वरावाप्तये भक्तानामात्मनि पुष्टस्य निगूढस्यौत्सुक्यस्याऽऽसन्नतापादकं हि साधारणजीवितस्यैवंविधं प्रेम। भावस्य पवित्रतया भक्तेः सामर्थ्येन, आत्मत्यागेन चाऽऽदर्शः स आध्यात्मिकतायाः सन्निकर्षं प्राप्नोति। परं नैतिकतनुत्राणेनानावृतानां जनानां विषये तथा-

विधो धर्मो नियतमाध्यात्मिकभावविरुद्धम् एव किञ्चन फलमुत्पादयेत्। मुक्तिम् अभीप्सवो बहवस्तरुणास्तदा सुन्दरीं युवतीं ललनां परिपूज्य लम्पटतां प्राप्ताः—इत्यकथितोऽपि ज्ञायत एव। एतेन वैष्णवसमाजस्य स्तरविशेषस्य भृशं प्रमाथो जातः। पञ्चदशशताब्द्यां लब्धोदयाश्चैतन्यप्रमुखा वैष्णवसम्प्रदायस्य नेतारस्तीव्रं निनिन्दुस्तद् धर्ममतम्। विशेषतश्चैतन्येन स्वमतानुसारिणः स्त्रीसंसर्गो दृढं निषिद्धः। तन्त्रशास्त्रं विना भारतीयधर्मशास्त्राणां नैकमप्येभिर्दोषैर्दूषितम्। युरोपदेशस्यार्वाचीनानां तन्त्रशास्त्रविदामग्रेसरेण सार्-जन्-उड्रफ्-महोदयेन तन्त्रशास्त्रस्य प्रतिकूलतयोत्थापितस्य लाम्पट्यादिदोषस्य कृतः सरोषं प्रतिवादः। "असम्पूर्णेन ज्ञानेनोपलक्षितैर्यैस्तन्त्रशास्त्रस्यांशविशेषमुद्धृत्यैव तद् दूष्यते, यैश्च पुनस्तत्तन्त्रशास्त्रेणैव प्रदर्शिताः शारीरिकमानसिकाध्यात्मिकोन्नमनेन सत्यावाप्तेरुपाया न दृश्यन्ते, तैरेव सुरतार्थिता भण्डतैन्द्रजालिकत्वञ्च तन्त्रशास्त्रेण समर्थ्यन्त इत्यसंयतमुदीर्यते" इति यद् रोषवशात् कथितम् उड्रफ् महोदयेन तत् तु सत्यमेव। परं तन्त्रोक्ता बहुश्रमसाध्या पूजापद्धतिः सुरतमपि क्रोडीकरोतीति सर्वैरेव ज्ञायते। सत्यं वामाचारदशां गतानां वीराचारिणामेव कृते वर्तते खलु तादृशः कश्चित् सुरतविधिः। उदयलाभयोग्यैः सर्वैरेव तान्त्रिकैरुपासकैः स हि तावन्मार्गः श्रयणीयः। ब्रह्मणा संश्लेषमिच्छतो जीवात्मनश्चरमतमे त्रिकाशे जाते अयमेव तावन्मार्गः प्रथमसोपानत्वेन तेन ग्रहणीयः। तादृशावस्थागतेनापि जनेन लक्ष्याप्तये तथाविधः कश्चिद् गुरुः श्रयणीयः, यस्त्वां विषेण विषमिवेन्द्रियैरिन्द्रियाणि संयमयितुं, तानीन्द्रियाणि कथं जीवात्मनः सांसारिकबन्धनं छित्त्वा तस्य परमात्मलाभसहायकतां प्रयान्तीति दर्शयितुञ्च समर्थः स्यात्। एतादृश उपासनामार्गे स्थितश्चेन्मिथ्याचारो भवेत्, तदा तस्य महानेव विपत्पातः स्यादित्यपि भूयो भूय-

स्तेनैव शास्त्रेणोद्‌घोषि। सत्यं न सर्वथा सर्वैरेव प्रतिपालितानि तान्यनुशासनानि। तन्त्रशास्त्रगतं दर्शनं प्रक्रियादिकञ्च शंसित्वाऽपि सार् जन् उड्रफ् महोदयेन न च न स्वीकृतम् अनेन शास्त्रेण समुत्पादितास्ते ते दोषा इति। स्वतन्त्रस्याद्वैतवाददीक्षितस्य जनवर्गस्य कृते लब्धसमुद्भवोऽत्यर्थं सुगुप्तश्च वीराचारधर्मः केषाञ्चिच्छिष्टानां जनानां सङ्गं प्राप्य विकृतो बभूवेति स मन्यते उड्रफ्महोदयः। अथ कालवशाद् विवर्धमानास्ते दोषास्तन्त्रशास्त्रस्यापरान् विषयान् प्रच्छादयामासुः। एतेन तन्त्रशास्त्रं यथोचितमभिनिवेशमपि जनानां नैव प्रत्यपद्यत।

भारतीयधर्मसाहित्यान्तर्गतस्य यौनधर्मवादस्याभिप्रेताशयविषयिणी डक्टर्-कुमारस्वामिन उक्तिश्चेद् गृह्यते, तदा पूर्वं लिखितं विषयमेवानुसृत्य—ये तावत् प्रभावा भारतीयकलायाः परिदृश्यमानस्याऽऽकारविशेषस्य हेतुतया प्रख्यातास्ते सम्पूर्णरूपेणाऽऽध्यात्मिकाः—इति तात्पर्यस्य ग्रहणं सुदुष्करमेव स्यात्।

---

## चतुर्दशोल्लासः

### भारतीयानामभिनवोऽभ्युदयः

क्लेशकरो भारतीयकलाकलापानां दुर्बोधताया अस्वीकारो मां कश्चिदप्रस्तुतविषयमधिकृत्य वक्तुं व्यापारयति। विजातीयकलानां विरोधितयाऽवस्थितेषु स्वदेशीयकलाकलापेषु भारतीयानां जातीय-वैशिष्ट्यस्य परीक्षायां पुनरहं दत्तहस्त एव। भारतीयकलानामा-दर्शवादेन सह वर्तमान-युरोपदेशीयकलानां वास्तवतावादस्य तुलना कृता खलु डक्टर्-कुमारस्वामिना। तेन हि वास्तवतावादस्य प्रतीच्यभावानुरूपता निरूपिता। तथाहि प्राच्यापेक्षया प्रतीच्याः खलु बहिर्विषयगतायाः पूर्णताया विशेषेण ग्रहणप्रयासिनो भवन्ति। कियतां भारतीयचारुशिल्पिनां प्रतीच्यभावग्रहणविषयमधिकृत्य विवृण्वता तेन भारतीयचारुशिल्पोद्देश्यस्य स्वरूपनिर्वचनव्यापारे उपायतया प्रतीच्यभावग्रहणस्यासुकरत्वं विशेषेण वक्तुमवकाशो गृहीतः। उदाहरणस्वरूपेण हि तेन विश्लेषणं कृतं स्वर्गत 'राजा'-रविवर्मणा चित्रितस्य सुप्रसिद्धस्य सरस्वतीचित्रस्य। दिव्यलोको-द्भतत्वस्य प्रकृष्टं लिङ्गं हि चित्रगतं कमलासनम्। प्रतीच्यकलया सरसिरुहाणां यथाविधं विलिखनं समर्थ्यते, तथैवाऽऽसीद् विलि-खितं तत् कमलासनम्। "कथमियं पूर्णावयवा स्त्री कमलमृणाले-नोह्यत इति, का वा पुनरस्य मृणालखण्डस्य शक्तिरिति च चिन्ता चित्रदर्शनमात्रेणैव दर्शकानां चेतांस्याकुलानि विदधाति।"

युरोपीयकलाया अकिञ्चित्कराणामपि क्रमाणां प्रभावेण प्रभा-

विताया भारतीयरुच्या दुरवस्थामवलम्ब्य दुःखमेव प्रकाशितं तेन महात्मना। "लगडनीयैर्गृहोपस्करविक्रयिभिर्येषां प्रासादा निर्मीयन्ते, अथवा युरोपीय-सौधानुगुणा येषां प्रासादा ग्राम्यैरतिरेकैरशान्तिदैर्वैभवैश्च विशोभितास्तेभ्यो भारतीयराजेभ्यः समारभ्य अद्भुतैरर्थहीनवर्णरञ्जितैर्माञ्चेष्टारनिर्मितपटैर्विशोभितान् कर्षकान् यावदर्वाचीनभारतस्य सर्वेषां जनानां या नाम रुचिगताऽवनतिर्जाता, तस्या अधिकतरं नास्ति साम्प्रतं किञ्चिदपि दुःखकारणम्।" प्रतीच्याधीनत्वमेवैतादृश्या दुरवस्थायाः कारणम् इत्यपि तेनैव कथितम्। ऊनविंशशताब्द्याः प्रथमे भागे यः पटनिर्माणव्यवसायप्रवाहो भारताद् युरोपदेशं प्रति प्रावहत्, बृटीशस्य व्यवसायनीत्या न केवलं तस्य प्रवाहस्य परिवर्तनं साधितम्, परं रञ्जितैर्विचित्रैश्च पटैर्भारतीयानां रुचिरपि तया दूषिता। शैलस्खलितविशालतुषारस्तूपैरिव द्विचक्रयानादीनां (वाइसाइकेल्) निरर्थकैश्चित्रैश्चित्रितैर्यन्त्रनिर्मितैर्माञ्चेष्टारस्य पटैः कथाशेषतां प्रापितं मान्द्राजप्रदेशस्य रमणीयं पटकर्म। शिल्पकर्मस्वपि तेषां स्वकीयां रीतिं प्रसभं प्रयुज्य भृशदारुणं फलमेव तैरुदपादि। कारागारेषु सुखक्रेया अनुत्तमाश्च कुथा निर्माय गुणवत्कुथाविरचनस्य तैरप्रतिविधेया क्षतिः समनुष्ठिता। तैः प्रतिष्ठापितानां कलाविद्यालयानां समुद्देशो नासीद्विनाशकादपर इति सर्वथैव वक्तुं शक्यते। बृटीशशासनस्य प्रभावादधिकतरा गुर्वर्था खलु शताब्दीं यावद् वितीर्यमाणा रीतितो लक्ष्यतश्च सम्पूर्णरूपेण मिथ्या काचिच्छिक्षा, यया खलु भारतीयानां रुचीनामादर्शानाञ्च परिवर्तनं सम्पादितम्। नाधुना परिपाल्यन्ते देशीयै राजभिः शिल्पिसम्प्रदायाः। स्थापत्यस्याऽऽदर्शतया गृहीतं सम्प्रति भारतीयैराङ्गलदेशीयनगरोपकण्ठगतानामुद्यानवाटिकानां चित्रम्। भारतीयतन्त्रवापनिर्मिताः कुथा अवमत्य क्रियन्त इदानीं "ब्रासेल्"देशस्य कुथाः। अपह्नियन्ते साम्प्रतिके काले भारतीया

वेशाः, सादरं परिधीयन्ते च भारतीयैर्युरोपीया वेशाः। किंखा-पाख्येषु तत्सजातीयेषु च द्रव्येषु बहुशताब्दीर्यावद् यस्य कारु-कार्यस्य विन्यासोऽदृश्यत, तद् वर्जयित्वा शिल्पिभिः साम्प्रतं श्रीयत आङ्गलदेशीयं कारुकार्यम्। "कस्याश्चिद् विदेशीयजातेर्निष्फल-चाटुकारोचितानुकरणेन भारतीयानां परिहीयते वैशिष्ट्यम्"—इति सि-आर-दाश-महोदयस्योक्तेरनुरूपैवाऽऽसीत् तस्योक्तिः। "स्वदेशस्य स्वाधीनतायै चेष्टमानस्य विशिष्टजातित्वं गाहमानस्य च भारतस्य हृदयमप्येतादृशैः पार्थिवैरादर्शैर्वशीकृतं स्यादिति न युक्तियुक्तमिद-मिति मन्यन्ते चिन्ताशीला मानवाः। जीवितस्य प्रकृततत्त्वेन सम्बद्धाया भारतीयधीशक्तेश्चेन्नैव जायेत काचिदभिनवविकाशाशा, तदा जातीयान्दोलनस्य सार्थकता कथं नाम प्रतिपादिता स्यात्"। अत्रापराण्यपि वचनान्युद्धर्तुं शक्यन्ते, परमेतद्विषयमध्येतुकामा विद्यार्थिनो मूलग्रन्थेष्वेव समादरविशेषं दध्युः। यो हि खलु सिद्धान्तो डक्टर्-कुमारस्वामिना समुपस्थापितस्तस्मादितरः कोऽपि सिद्धान्तो ग्रन्थानां पाठान्नैव जायेतेति सर्वथैवास्माभिर्वक्तुं शक्यते। अतः खलु वैदेशिकादर्शाधीनत्वमवधूय मानसिकमाध्यात्मिकञ्च स्वातन्त्र्यं लब्धुमेव यतमानेषु शिक्षितेषु भारतीयेषु दृश्यते काचना-शान्तिः। न त्वैहिकपराधीनता, परं मनुष्यत्वनाशिनी नैतिक्या-ध्यात्मिकी वा पराधीनतैव भारतीयसभ्यतायास्तादृश्या दुर-वस्थाया हेतुः।

यया नाम शक्त्या समुद्धृतानि वचनानि प्रणोदितानि, तयैव शक्त्या समुत्पादितः खलु साम्प्रतिको वङ्गीयचित्रकलासम्प्रदायः। स हि तावद् वङ्गीयचित्रकलासम्प्रदाय एकस्मिन्नेव वङ्गीयेऽन्वये जाताभ्यां भ्रातृभ्याम्, विश्वविश्रुत-वङ्गीय-लेखकप्रवरस्य भ्रातु-ष्पुत्राभ्यां गगनेन्द्रनाथ-ठाकुर—डक्टर्-अवनीन्द्रनाथ-ठाकुर-सि-आइ-इ-महोदयाभ्यां संप्रवर्तितः। कलाविदावेतौ साम्प्रतं वङ्गीय-

चित्रकला-सम्प्रदायप्रवर्तकतया साधारण्येन सुविदितावपि तत्-कालेऽनभिज्ञावेवाऽऽस्तां भारतीयशिल्पशास्त्रस्येति ताभ्यामेव तदाऽहं कथित इति कौतुकावहोऽयं विषयः। केनचिन्मानसिकेनोद्वेगेन प्रणोदिताभ्यां ताभ्यां प्रारब्धं तदचिरफलप्रसवत्तमं कर्म। मन्ये प्राचीनचित्रगुरूणां मतानि संस्काररूपेण पुनः प्रकाशलाभाय निगूढा-न्येवाऽऽसंस्तयोश्चेतसि। यस्यां पारिपार्श्विकावस्थायां स्थिताभ्यां ताभ्याम् एतत् कर्म कृतम्, कस्यचित् सूक्ष्मदर्शिनो वर्णनादेव सा प्रकटिता भवति। संस्कृतसाहित्यस्य पुराणादिपाठेन स्वोदा-हरणेन चोत्साहिताभ्यां ताभ्यां लक्षीकृतमासीत् स्वदेशीयकल्पना-मूलकचित्रस्य समुन्नयनम्। कलिकातायां द्वारकानाथ-ठाकुर-लेनस्थे ठाकुरवंशीयानां वासभवने आधुनिकभारतीयचित्रकलायां निपुणतया साम्प्रतं प्रतिष्ठां गता नन्दलालबसु-ओसिगांगुली-क्षितीन्द्रनाथमजुमदार- असितकुमारहालदार- सुरेन्द्रनाथकर-मुकुल-चन्द्रदे-प्रमुखाः शिल्पिनस्ताभ्यां संगृहीताः। यस्मिंश्चित्रकर्मगृहे मिमिले सा मनोहरा गोष्ठी, तत् तु स्वदेशीयकलालोचनापेक्षया रुच्युन्नमने, सौन्दर्यज्ञानचर्चायां रमणीयद्रव्यप्रीतौ, विशेषतो भार-तीयमानसस्य प्रकाशकेषु सुचारुषु वस्तुष्वेव गौरवविशेषं दधाविति तेनैव वर्णितं सूक्ष्मदर्शिना।

बृटीशशासनबहिःस्थितत्वाद् वङ्गीयविप्लववादिनां शर्मदं प्रियञ्च वासस्थानं चन्दननगरमधिवसता केनचिद् राजनीतिकलेखकेनैतस्य नवीनस्याभ्युदयस्याऽऽशयश्चापि समुद्घाटितः। यया भारतस्य युरोपीयत्वापादनस्य प्रतिकूलतयोत्थापितया प्रतिक्रियया देशभक्ता भारतीयाः समुद्युज्यन्ते, सा तु साहित्ये कलास्वपि च साम्प्रतं लब्धप्रवेशेति स्वमतमुदाहर्तुं ठाकुरसम्प्रदायप्रवर्तनस्योल्लेखोऽपि तेनैव विहितः। वङ्गेषु जातीयताभावः कलास्वप्यात्मानं प्रका-शयितुं चेष्टते। मोगलानां नाशात् परं विवर्धते साम्प्रतमभिनवः

कश्चिज् जातीयचित्रकलासम्प्रदायः। अवनीन्द्रनाथठाकुरो हि तस्य प्रवर्तकः शिक्षकश्च।

एतेषामभ्युदयानां व्याख्यानाय नास्ति प्रयोजनं कस्यचिट्-टीकाकारस्य। आम्येच्चेत् कश्चन जनष्ठाकुरप्रवर्तितचित्रसम्प्रदायस्य वैप्लविकदलस्य च प्रेरणालाभोचितानि कार्यकारणान्यधिकृत्य, तदा तेषाम् उद्भवस्थानमेकमेवेति नूनं स विलोकयेत्। एकस्मादेव भावाज्जातयोस्तयोरेकं निन्दनमपरं च प्रशंसाविशेषं लभत इति सुव्यक्तमेव।

यद्दृष्ट्यैतत् सर्वं मया लिखितं येन चैष नवीनचित्रकलासम्प्रदायो मे प्रियः सञ्जातस्तत् सर्वं विहायापि सम्प्रदायस्यैतस्य कार्यजातमेव सर्वस्य दृष्टिं प्रसभं समाकर्षति। सप्ताधिकोनविंशतिशततमे खृष्टीये वर्षे कलिकातायां नगर्यां युरोपीयैर्भारतीयैश्च सुजनैः प्रतिष्ठापिता "इण्डियान् सोसाइटि अफ् ओरियेण्टाल् आर्ट"-समाख्या काचित् सभा। साधारणानां जनानां समितिसदस्यानाञ्च मध्येऽर्वाचीनायाः प्राचीनायाश्च प्राच्यकलाया विस्तारसाधनेन तस्याः समुन्नतिसम्पादनमेवास्याः समितेरभूल्लक्ष्यम्। अस्या एव समितेस्तत्त्वावधानेन प्रतिवर्षं ठाकुरसम्प्रदायस्य कार्यजातस्य प्रदर्शनमजायत। एवंविधानामन्यासां सभानां कर्माणीवास्या अपि सभायाः कार्याणि महासमरारम्भेण मन्दीभूतानि। परं युद्धावसाने समितेरस्याः सुमहानुत्कर्षसाधनस्यावसरः समायातः। तदनुसारेण चाऽऽलोचितं मया समितेर्नेतृत्वं गतैः सदस्यैः। अथ समितेः स्थैर्योत्पादनाय तदीयकार्यजातस्य विस्तारसम्पादनाय च गृहीता अभवन्नुपायाः। शासकादर्थसाहाय्यं लब्ध्वा विद्यालयस्य कृते एकं चित्रकर्मगृहं प्रपाठप्रकोष्ठश्चैकः स्थिरीकृते। नवीनसम्प्रदायस्य विशिष्टा व्याख्यातारः शिक्षकत्वेन नियुक्ताः। दरिद्राणां विद्यार्थिनां वृत्तिव्यवस्था च जाता। निर्णीता अभवन्नध्यापनीया

विषयाः। "रूपम्" समाख्याता काचित् कलाविषयिणी पत्रिका च विनिर्गता। ऊनविंशत्यधिकोनविंशतिशततमखृष्टाब्दे डिसेम्बर-मासस्य चतुर्थेऽहनि समितेः पुनः प्रतिष्ठापनस्य व्याख्यानाय शासकप्रासादे सञ्जातायां सभायां नवीनसम्प्रदायस्य कलाविदाम् अभिनवानि कर्माणि प्रदर्शितान्यासन्। कलासमालोचनकुशलेन कलाविदा ओ-सि-गांगुलीमहोदयेन नवीनसमान्दोलनस्य वर्णन-समालोचनात्मकं तत्र पठितम् अभिभाषणम्।

यतः समान्दोलनेन समधिगतं साम्प्रतं किञ्चिन्निर्दिष्टं स्थानम्, सुस्थिरञ्च यतस्तदद्य प्रतिष्ठितम्, ततो गांगुलीमहोदयेन दत्तः समा-न्दोलनस्योद्देश्यस्य कार्यजातस्य च संक्षेपो विशिष्टमेवेदानीं गौरवम् अर्हति। ग्रीसीय-रोमीयसम्प्रदायावलम्बिनां युरोपीयकलाविष-यकनियमानां पूर्णताया अभिमानस्य जापानदेशीयकलया समनु-ष्ठितात् सोपहासात् प्रतिवादाज्जाते, साम्प्रतिक-युरोपीय-सौन्दर्य-विचारनियमान् विशेषयन्त्यौ सहिष्णुतोदारते प्रति सर्वेषां दृष्टिं समाकृष्यैव प्रारब्धं तेन वाचस्पत्यम्। जापानदेशीयचित्रकलासम्प्र-दायेन जगतश्चित्रकलासम्प्रदायेषु विशिष्टमेव स्थानमधिक्रियत इति विषयस्य युरोपीयैरामेरिकादेशीयैश्च कलासमालोचकैराविष्कारः कथं तान् भारतीयकलाया विचिन्तितचरस्य गौरवस्य पुनः परीक्षणे न्ययुङ्क्त, तदपि तेन ततः प्रदर्शितम्। वस्तूनां यथार्थतया चित्रे विनिवेशनादेव न केवलं जायते भावानामभिव्यक्तिः, परमसङ्गता अवास्तवा अपि शिल्पशास्त्रानुयायिन आकारा उच्चकैः सुमहताञ्च भावानामभिव्यञ्जनायालमित्यस्य विषयस्य स्वीकार एव भारतीय-दृष्ट्या प्रतीच्यकलासमालोचकानां मतपरिवर्तनस्य मुख्यं फलम्। भारतीयया कलया स्वेच्छया सनिश्चयञ्च दीयते वस्तुषु स्वभाव-विरुद्धं रूपम्; निरर्थकैर्वर्णविन्यासै रेखाप्रवाहैश्च निर्मीयते तया चित्रादिकम्, प्राणवन्तो विषया वक्रैर्विकटैराकारैर्युज्यन्ते चेति

यद्वा रासकिनमहोदयेनोक्तम्, तस्मात् कालान्नियतमेव साम्प्रतं किञ्चन मतपरिवर्तनं जातम् ।

[illegible]श्च प्रचीयमानेन सन्देशादानप्रदानव्यापारस्य सौकर्येणोपलक्षितेऽस्मिन् साम्प्रतिके काले जगतः कस्मिंश्चिदप्यंशे कञ्चिदपि कार्यविशेषं समनुतिष्ठतः कस्यापि जनस्य बहिर्जगतो भावप्रवाहवेगस्याननुभवनं नैव भवितुं पार्यते—इति प्रतीच्यकलाविशारदानां परिवर्तितेन मतेन नवीनसम्प्रदायस्याऽऽनुकूल्यमेव सम्पादितम् । नवीनसम्प्रदायस्तावद् कामतः समुद्देशतश्चाऽऽदर्शवाद्येव। आलेख्येष्वालोकचित्रसादृश्यापादनचेष्टितं विहाय दर्शकान् पार्थिववस्तुतः समाकृष्यापार्थिवस्य सौन्दर्यस्याभिनवत्वस्य च क्षेत्रे नेतुं क्षमं तेष्वन्तरालोकनोचिताकारप्रदानमेव सम्प्रदायस्यास्य शिक्षकाणामभीप्सितमासीत् समुद्देश्यम् । दृग्विषयाणां वस्तूनां बाह्याकारानविगणय्य गभीरतरेणोद्देश्येन, निगूढतरेणोपक्षेपेण चोपलक्षितैस्तैः सुव्यक्तादिन्द्रियग्राह्याद्बहिर्वस्तुनो मनो वियोजयितुम्, प्रकृतेर्याथातथ्येनानुकरणं निन्दितुम्, साकारस्य बाह्यजगतोऽन्तःस्थितस्य निराकारस्यानन्तस्य द्योतनाय गूढार्थप्रकाशनोचितानामाकाराणां निर्माणाय चेष्टितुञ्च आन्तम् । अतो यतितं खलु तैः प्राचीनाया भारतीयकलाया इतरव्यवच्छेदकं मौलिकं वैशिष्ट्यं संरक्षितुम् । तेषां प्रयोगस्य मूलतया भारतीयचित्रकलायाः साम्प्रदायिकीं रीतिमनुसृत्य तैर्न्याय्यमेवानुष्ठितमिति गांगुली-महोदयो मन्यते । समान्दोलनस्य प्रथमे भागे मौलिकताया यः खल्वभावोऽदृश्यत, तत्र साम्प्रदायिककलाया गुणानामध्ययनमायत्तीकरणञ्चाऽऽस्तां प्रष्टव्ये । प्राचीनकलायाः, इतिहासस्य कल्पनाशक्तेश्चाविरुद्धामविच्छिन्नाञ्च नवीनां रीतिमाश्रित्य तस्या एव प्राचीनकलायाः समुन्नतिसाधनोचितायाः शक्तेरर्जनात् पूर्वम्, अनुकरणेन न पुनः प्रकल्पनेन विशेषितस्य कालांशविशेषस्य व्ययोऽपरिहार्य एवेति

तैर्नेतृभिः सम्यगबोधि। न च तैर्नाबुध्यत भावव्यञ्जनाय नवीनरीति-प्रसारणस्य गौरवम् इत्यतीतकालस्याऽऽदर्शेन तैरात्मानः संस्कृताः। समितेरवस्था सम्प्रत्यपि परिवर्तनशीलेति मन्यते गांगुलीमहोदयेन। जातीयस्मृतिभ्य एवासन्दिग्धं लब्धाऽनया प्रणोदना। परं साम्प्रतिक्य उच्चाशाः कथमपि क्षीणतयाऽस्यां स्पन्दन्त एव। भारतीयजीवितं व्याप्य स्थितेभ्य आधुनिकविषयेभ्यः प्रायेण सर्व एव कलाविदः साम्प्रतमात्मनो दूर एव संस्थापयन्ति। नवीनभारतीय-जीवितस्य भावेभ्यो वा व्यापारेभ्यो वा पारिपार्श्विकावस्थाभ्यो वा सन्निवेशेभ्यो वाजीवेभ्यो वा तैर्नैव लभ्यते काचित् प्रचोदना। पौराणिकानि दृश्यानि जातीयमहाकाव्यानां प्रथितानां कथानामंश-विशेषाश्च चित्रितव्यविषयतया तान् प्रथममाचक्रुषुः। प्राचीनभार-तीयसम्प्रदायमनुवर्तितुमेकस्मिन्नेव विषये तैर्नाधिगतं साफल्यम्। विशुद्धसमुज्ज्वलवर्णकविन्यासरूपं राजपुतसम्प्रदायस्य मोगलसम्प्र-दायस्य च सुस्पष्टं विशेषकं भावं संश्रयितुम् असमर्थैस्तैर्भारतीय-चित्रकलाया मुख्येषु वैशिष्ट्येष्वेकतमादसंशयमभ्रंशि। परमना-दृत्य तानि समालोचितानि सानन्दम् अभ्युपगतं तेन "प्रभूततरमै-वासाफल्यमनया समित्या समासादितमि"ति। साधारणानां जनानां रुचावपि समान्दोलनेन समुत्पादितमात्यन्तिकं परिवर्तनम्। भारतीयेभ्यो भावेभ्योऽभिप्रायेभ्यश्च सम्प्रदायस्यास्य कर्मभिर्लब्धा प्रणोदनेति, भारतीयां चिन्तां विनिवेशनप्रकारञ्चाऽऽश्रित्य भार-तीया विषयाः ससाफल्यं तदानीं विलिखिता अभवन् इति च प्रायेण सर्व एव समालोचका अमन्यन्त। न केवलं सम्प्रदायेन तेन प्राचीनाया भारतीयकलाया भावः कृतार्थतया पुनरुज्जीवितः, परं तस्या विवृद्धिरपि तेन सम्पादिता। सम्भाव्यताया बहुत्वाद् वैचित्र्याच्च सम्प्रदायेनानेन कृतेभ्यः कार्येभ्यः करिष्यमाणानि कार्याण्येव समधिकगौरवास्पदानि।

भारतीयस्याभ्युदयस्य मङ्गलाकाङ्क्षिणस्तस्मिन् विश्वासवन्तश्चा-संशयमेव समान्दोलनस्य भविष्यद्विषयं चिरप्रचीयमानया सद्दानुभूत्या समवलोकयेयुः। तथाविधेषु जनेषु बहव एव विद्यन्त आङ्गलदेशवासिनः। असन्दिग्धस्वदेशप्रीतिभिर्बन्धुभिरेव भारतीयैः सुजनैस्तैः समं निर्व्यलीकसहयोगितामभीप्सव आङ्गलदेशमधिवसन्तोऽपि जनाः यत् सादरं समाहूतास्तेनामित एव आनन्दो मयाऽद्य समनुभूयते। तथापि प्राच्यप्रतीच्ययोर्मध्ये सद्भावसंस्थापनाभिलाषिण आङ्गलदेशीयस्य जनस्य कर्म न हि सुकरं प्रोत्साहनीयञ्चेति मयाऽवश्यमेव स्वीकरणीयम्। आस्ते खलु स्वदेशविषयकगर्वप्रीत्यादिमोहान्धो दुरन्ताभिमानी आङ्गलदेशीयानां जनानां समुद्देश्येषु सर्वथैव सन्दिहानः कश्चन भारतीयानां वर्गः। एतस्याः समितेर्विद्यालयस्य प्रतिष्ठापनायाऽऽर्थिकसाहाय्यदाने यदा मया प्रवर्तितः शासकपक्षस्तदैवास्य विषयस्य निदर्शनं किञ्चिदभूत् समुद्भूतम्। समान्दोलनस्योपरि कञ्चिदधिकारविशेषं रक्षितुकामेन शासकेनाऽऽर्थिकं साहाय्यं समनुष्ठीयत इति जना मा तावन्मन्यन्तामित्यभिप्रायेणैव सनियमं न कृतं मया शासकसाहाय्यम्।

तथापि सन्देहभाजनमभून्ममैतत् कर्म। नातिचिरादेव वङ्गेषु तद्बहिश्च सादरं पठ्यमानायां "मडार्णरिभिउ" समाख्यातायां पत्रिकायां सम्पादकमन्तव्यरूपेण प्रकाशं लेभे स एव खलु सन्देहभावः। भ्रम एव कृतः कर्तृपक्षीयैः परिगृह्य शासकसाहाय्यमित्येवं क्रमेण लिखितमासीत् तत् समालोचितम्। शासकसाहाय्यस्य नियमपुरःसरत्वाभावं स्वीकृत्यापि तद्ग्रहणेनैव राजपुरुषाणां युरोपीयाणां वाऽभिमतविरुद्धाचरणाज्जनिष्यमाणया बाधया ज्ञातेनाज्ञातेन वोपायेन विकृतं करिष्यते भारतीयसंस्कृतेः स्वरूपम् इत्येतदेव तेनाऽऽशङ्कितम्। चिन्तितञ्च तेन, शासकसाहाय्यग्राहिणो नूनं राजपुरुषाणां युरोपीयप्रभावस्य चोल्लिखितप्रकारमप्यधीनत्वं

यास्यन्तीति। सर्वथैव वयं युरोपीयाणामधीनाः, अतः खल्व-भारतीयानामनुग्रहेण प्रभावेण चापरामृष्टे कस्मिश्चित् कुटीरेऽप्येतस्य विद्यालयस्य प्रतिष्ठापनं शोभनं जायेतेति नः प्रतिभातीति वाचा समुपसंहृतं तेन तत् समालोचितम्। आदर्शद्वयस्य सङ्घर्षाज्जातया विरोधितया कथं सुदृढमधिक्रियन्ते केषाञ्चिज्जनानां चेतांसि, तदेवै-तद्भावसन्दर्शनेनास्माभिर्विज्ञायते। दीर्घकालव्यापिनीं चेष्टां दुर्दम-नीयं धैर्यञ्च विना किमपि नैतादृशस्य भावस्य दूरीकरणायालम्।

# पञ्चदशोल्लासः

## भारतीयाद्वैतवादः

येन खलु वाह्यवस्तुनो मिथ्यात्ववादेन व्याप्यते भारतीया कला, प्रतिरूपो हि स मिथ्यात्ववादो भारतीयायाश्चिन्ताधारायाः। यो हि नाम विषयो भारतीयैर्मनीषिभिर्ग्रन्थेषु निबद्धः, स एव तावद्विषयो भारतीयैस्तत्तच्चित्रकरैश्च यथाक्रमम् आकारप्रदानेन वर्णक-सन्निवेशेन च प्रकाशितः। कलासु दर्शनेषु च भारतस्यैव सा दृश्यते विश्वविषयावगाहिणी प्रहेलिका। सर्वो वाह्यशून्यवादीव भारतीयो जनोऽपीन्द्रियग्राह्याणां विषयाणां सत्यत्वं नैव स्वीकरोति, मूलतत्त्वस्यान्वेषणाय वस्तूनामन्तरेव दृष्टिं निक्षिपति। प्रपञ्चात्मकं हि परिदृश्यमानं जगदतस्तदसत्यम् इति पश्चात् स साधारणानां प्रतीच्यदेशजानां दुर्बोधया रीत्या सुस्पष्टं मिथ्यात्वेनानुभूताद् अस्मा-ज्जगतः स व्यपवर्तत इति विमूढतापादके निर्विशङ्के सिद्धान्ते समुपैति।

वस्तुतस्तु जीवो ब्रह्मैव नापर इत्युद्वेगकरः खलु सिद्धान्तः। न च सगुणेश्वरवादिभिः प्रतिपादितं साकारमेव तद् ब्रह्म, परम् अचिन्तनीयं, निरुपाधि, निर्गुणं, व्यापकं, सत्, असत्, "नेति नेती"त्यक्षरैर्निरूप्यमाणम्, अद्वितीयं, सर्वगतं, सनातनं, स्वतन्त्रं ज्ञानमयमपि दुर्विज्ञेयं, द्रष्टृ अपि न चक्षुरिन्द्रियग्राह्यं, सर्वसत्यानां समष्टिभूतमेकं सत्यमेव निर्गुणेश्वरवादिनां तद्ब्रह्म। काल-सनातनत्व-महाकाशानन्ततादीनाम् अमूर्तानां विषयाणां परिकल्पनमत्यर्थं हि

दुःसाध्यं नराणाम्। भारतीयाद्वैतवादेन निरूपितस्यानन्तस्य ब्रह्मणः प्रत्यक्षीकरणस्यासम्भवताम् अधिकृत्य नैवात्र किञ्चिद्विवक्षामि, तथापि ब्रह्मविषयकमिदं मतं बोद्धुं सर्वथैवास्माभिर्यतितव्यम्। यतोऽस्यैव ग्रन्थस्य प्रस्तावनायां वि-सि-पाल-महोदयस्य यद् वचनं मयाऽवतारितम्, तदाश्रित्य चेदुच्यते, तदा तदेव बुद्धेर्विमूढता-पादकं ब्रह्मविषयकं मतम् "हिन्दूनां जातीयेतिवृत्ते प्रागैतिहासिकं चिरन्तनञ्चेति" "नवीनाया भारतीयजातेर्भित्तिपाषाणायमानम्" इति च वक्तुं शक्यते।

तथैव खलु वस्तूनि यथैव तान्यनुभूयन्तेऽस्माभिरिन्द्रियैरिति—प्रत्यक्षमात्रवादिनां मतस्य निरसनं क्रोडीकृत्य स्थितस्य, सर्वेषां सत्यानामेकत्वप्रतिपादनरूपस्य, भारतीयचिन्तायाः सुमहतः केन्द्रीभूतस्य भावस्य प्रथमं सूचनं भारतीयार्यजातेः प्राचीनतमे ग्रन्थे ऋग्वेद एव दृश्यते। एक एव स नामभेदमुत्पाद्य स्तूयते कविभिरिति तत्रैव वर्णितमास्ते वेदे। उत्तरकाले, परं बुद्धस्य जन्मनः प्राक्, अतः खृष्टीयशताब्दीप्रवर्तनसमयात् पञ्चशतवर्षेभ्यः पूर्वं जाते वैदिकसाहित्यस्योपनिषदात्मक आध्यात्मिके भागे ववृधे खलु परीक्षार्थं समुपस्थापितोऽयं समुल्लिखितो भावः। दुरवगाहा एवोपनिषदस्तासु स्थितानां भावानां विच्छिन्नतया परस्परविरुद्धतया च सम्प्रदायविशेषस्य व्यक्तिविशेषस्य वा मतगर्भिताः साधारणा निबन्धा इव न भवन्ति। परं तास्तावत् कस्यचिच्चिन्ताप्रवाहस्य क्रमिका उपचया एव। खृष्टीयशताब्द्याः प्रवर्तनकालस्य पूर्वं गतात् पञ्चशततमवर्षात् समारभ्य, देशत्यागिनामार्याणां गङ्गोपत्यकाश्रयणेन बौद्धधर्मस्याभ्युदयेनोपलक्षितास्तत्पूर्वस्थिताः पञ्चशतसंवत्सरा एव तासामुपनिषदामाविर्भावकालतया परिगण्यन्ते। एतासां चिन्ताना-मनुधावनेन "सर्वं सत्यमेकम्" इति तासां केन्द्रीभूतस्य भावस्य क्रमविकाशः प्रकटीभूयते।

मानवानां चिन्ताशक्तेर्दुर्लभं फलमिदम्, न तु विनैव प्रयत्नं समुद्गतम्। प्रत्यक्षविरुद्धोऽयं भावो यद्यसत्प्रतिपक्ष एवावर्धिष्यत, तदा सत्यं विचित्रमेव तदभविष्यत्। जागतिकवस्तुभिः समं दैनन्दिनात् संस्पर्शाज्जातेन प्रत्यक्ष[illegible]तरा प्रभावितान्यभवन् अतिसूक्ष्माण्यपि तेषां प्राचीनानां मनीषिणां मनांसि। प्रत्यक्षवादेनाध्यात्मवादस्याऽऽसोच्छाश्वतिको विरोधः। नराणां मनांस्यधिकर्तुं परस्परजयैषिणोरेतयोर्बोधयोः [illegible] जात आधुनिकभारतीयानां बहुभिः सेव्यमानो विश्वदेवतावादः। सुगमस्तावदयं धर्मवादः। अध्यात्मवादप्रतिपादितं ब्रह्म चेदेकमेव सत्यं वस्तु, यदि पुनर्विश्वमिदं शाश्वतं स्पर्शवेद्यं काल्पनिकमित्यप्रत्याख्येयश्चेति स्यात्, तदा ब्रह्मणा जगतस्तादात्म्यमपि सर्वथैव स्वीकरणीयम्। जगत् तदानीं ब्रह्मणो रूपविशेषत्वेनैव ग्रहणीयम्। अन्यैरेवाक्षरैश्चेदुच्यते, तदा एकस्यैव वस्तुनो नाममात्रभेद एव तत्र विभावनीयः।

परस्परविरुद्धा अप्येते खलु भावास्तावद् उपनिषदां निर्माणे हेतुः। न केवलं विषयाणां स्वभावः, परं तेषामाकृतिरप्युपनिषत्सु तत्परवर्तिसूत्रग्रन्थेषु च प्रवेशे क्लेशं संजनयति। भावानाम् आकारं दातुं निर्मिता खलु मानवैर्भाषा। चिन्ताप्रणालीभेदाद् भाषाया आकारस्यापि भेदो जायते। स्वदेशीयपरिच्छदैर्वर्जिता विदेशीयवसनैर्विशोभिता कस्याश्चिज्जातेर्दार्शनिकी चिन्ता कामपि विकृतिं न यायादिति तु न न्याय्याशंसा। यो हि नाम भावस्त्रिसहस्रवर्षेभ्यः पूर्वं समुदपादि प्राचीनानामार्याणां मनसि कस्यचिदार्षस्य संस्कृतात्मकस्य वाक्यस्य श्रवणेन, सर्वाङ्गसुन्दरोऽपि तस्यैव वाक्यस्याऽऽङ्गलभाषामयोऽनुवादो नैव तम् एव भावं समुत्पादयति साम्प्रतं मदीये मानसे। तदानीन्तनस्य प्राचीनसाहित्यस्य [illegible]भूतत्वाद् विवृद्धिमेवाश्नुते इदमसौकर्यम्। वाचिक-

मासीत् तात्कालिकं साहित्यं न तु लिखितम्। विपुलानां निबन्धानां कण्ठस्थीकरणीयतया वाचिकसाहित्ये तन्नतापादन-चेष्टा समानीता। सूत्रसाहित्यं हि तस्या एव चेष्टायाः फलम्। संक्षिप्ततामवाप्तुं किमपि नाऽऽसीत् सूत्रसाहित्यस्यापरित्याज्यम्। भारतस्य विभिन्नप्रदेशेषु चतुष्पाठीषु पठ्यमानं पाणिनेर्व्याकरणमेव सूत्रसाहित्यस्य प्रकृष्टं निदर्शनम्। विषयीकृतसमग्रसंस्कृतसाहित्य-मप्येतद् व्याकरणम् एतादृगेव संक्षिप्तम् यत् क्षुद्रेषु पञ्चत्रिंशत्-संख्यकेषु पत्रेष्वेव तन्मुद्रापयितुं शक्यते।

उत्तरमीमांसा, वादरायणस्य वेदान्तसूत्राणि वेति नाम्ना यथा-पद्धति विनिवेशितान्युपनिषदां दार्शनिकमतान्यनयैव रीत्या प्रथमं विनिर्गतानि। कृतावस्यां संक्षिप्ततापादनस्य तथाविधो दृश्यते कश्चित् प्रयत्नो यथा भाष्यभूताऽपीयं प्रहेलिकतयैव वर्ण्यते। तेषां सूत्राणामनुवादकस्य डक्टर् थिव-महोदयस्य मते यथा वाक्येषु कर्तृपदानां क्रियापदानाञ्च प्रायेणाप्रयोगो दृश्यते, तथैव तेषु सूत्रेषु नितान्तप्रयोजनीयानामपि पदानां प्रायेण सर्वदैवाभावो दरीदृश्यते। अतः खलु तेषां बहवो व्याख्यातारः। खृष्टीयाष्टमशताब्द्यां जातस्य महतोऽध्यात्मवादिनः शङ्करस्यैव भाष्ये भारतीयाद्वैतवादः प्रथमं पदं लेभे। एतानि तावदुत्तरमीमांसायाः प्रारम्भकाणि सूत्राणि :—

१। अथातो ब्रह्मजिज्ञासा।

२। जन्माद्यस्य यतः।

३। शास्त्रयोनित्वात्।

४। तत्तु समन्वयात्।

५। ईक्षतेर्नाशब्दम्।

पञ्चानामेतेषां रहस्यात्मकानां सूत्राणां शङ्करकृतभाष्यस्याऽऽ-ङ्ग्लभाषात्मकोऽनुवादश्चत्वारिंशत्संख्यकेषु पत्रेषु मुद्रापयितुं

शक्यते। सूत्रव्याख्यातॄणामेकतमोऽभूच्छङ्कर इति सूत्राणामर्थविषयेऽपि तद्व्याख्यातॄणां मतभेद आसीदिति च न विस्मयावहो हि विषयः। शङ्करस्य व्याख्यानं युक्तिसिद्धं न वेति विषयो न च मेऽत्र चिन्तनीयः। भारतीयचिन्ताया आध्यात्मिकोन्मुखताया अनुगुणतया बहुभिरेव हिन्दुभिः शङ्करमतमाद्रियत इति दर्शनाच्छङ्कर एव ग्राह्यवाग् इत्यसंशयं वक्तुं शक्यते।

शङ्करेण तदीयैः शिष्यसम्प्रदायैश्च कृतव्याख्यानः को हि नामासावद्वैतवादः? "तत् त्वमसि" "नेति नेतो" ति चोपनिषत्सु कृतपदयोः प्रख्यातयोः सूत्रयोर्व्याख्यानमेव सः। "स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो।" तच्छब्दो ब्रह्मबोधकः। तत् त्वमसि; त्वं ब्रह्मासि। अथ किं तद् ब्रह्म? अपि नाम मादृशानामवधारणयोग्यतां लभते ब्रह्म? कदापि केनाप्यदृष्टत्वाद् ब्रह्मणो दृष्ट्यविषयता प्रतिपाद्यते खृष्टधर्मेण। न केवलं दृष्ट्यविषयतां परमविज्ञेयरूपत्वमपि ब्रह्मणः स्वीकुर्वन्ति वैदान्तिकाः। नास्माभिरवधारणीयं हि ब्रह्म, यतस्तदेव चेदस्माकम् आत्मनः सारोऽस्माकमात्मा परमं कारणञ्च, तदा नैव प्रतिपादयितुं शक्यते तस्य ब्रह्मणः कार्यत्वम्। परमकारणस्यापि तस्य कार्यत्वे प्रतिपन्ने कस्यापि कार्यस्य कारणं नैव व्यवतिष्ठेत। ब्रह्म चेन्नैव कार्यम्, त्वदन्तर्गत आत्मा चेत् तद् ब्रह्म, तदा कथं नाम त्वमात्मनः कार्यत्वं प्रतिपादयितुं शक्नुयाः। मृतमिवाऽऽत्मानं विचिन्तय। किं त्वया दृश्यते? शरीरन्ते मृतमवतिष्ठते? सत्यं; परमात्मन एव तच्छरीरम्? तथा सति, कोऽसौ यस्तव मनसि स्थित्वा शरीरं मृतं बुध्यते? किं न हि स ते आत्मा? आत्मनः कार्यत्वं प्रतिपादयितुं चेन्नैव शक्नोसि, तदा कथं मृतेन तेन शरीरेण समम् आत्मानमपि मृतं विभावयसि। "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न विज्ञातेर्विज्ञातारं

विजानीयाः, एष त आत्मा सर्वान्तरः"। "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ, अश्रुतं श्रोतृ, अविज्ञातं विज्ञातृ। नान्यदतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति विज्ञातृ।"

वस्तुतस्तु पूर्णोऽद्वैतवादी कठोरेण युक्तिवादेनोपलक्षितः सन् एतस्मादप्यधिकं किञ्चिद् विवक्षति। एकमेवाद्वितीयञ्चेत् परमं सत्यम्, तदा नास्ति नूनं तदतिरिक्तं किमप्यपरं वस्तु; तस्य स्वीकाराद् द्वैतभावस्य ग्रहणापत्तेः। एकमेव तत् कार्यं कारणञ्चेति। कार्यकारणयोरेकतरस्याभावाद् अन्यतरस्य सम्भवो नैव युज्यते, ज्ञातृपदेनैव ज्ञेयपदार्थस्य द्योतितत्वात्।

वस्तुतस्तु कार्यकारणयोरस्वीकारात् किं नाभ्युपगम्यते वेदान्तिकैः शून्यं निर्वाणमभिलषताम्, सर्वेषां जागतिकवस्तूनां पृष्ठतः स्थितं महाशून्यं प्रतिपादयतां बौद्धानां शून्यवादः? सत्यम् आपातदृष्ट्या तत् तथैव प्रतिभाति। परं शङ्करेण बादरायणसूत्राणां द्वितीयाध्यायस्य द्वितीयपादस्य "नासतोऽदृष्टत्वाद्" इति षड्विंशं सूत्रं समाश्रित्यैवास्य कृतः प्रतिवादः। न च शून्यं न वा कश्चन ज्ञाता, परं ज्ञानमेव वैदान्तिकानां परमं सत्यम्। अस्यायमाशयः, वैदान्तिकानां मते न तु ज्ञानसम्पन्नः कश्चिदास्ते कर्ता, परमास्ते ज्ञानमेव। सत्पदेन सत्यस्य द्योतितत्वाद् ब्रह्मापि सदेव। आनन्दमयं हि पुनस्तद् ब्रह्म। अस्य तावदानन्दपदस्याशयोऽत्र दुरवगाह एव। कामैः कामावाप्तिचेष्टाभिश्च सम्यगपरामृष्टा साऽवस्था सुषुप्त्यवस्थां गतस्य जनस्याऽऽत्मना प्रत्यक्षीकृतावस्थाविशेषस्यानुरूपा। स्वकीयायाः सुषुप्त्यवस्थायाः प्रत्यक्षत्वाभावान्नैव शक्यते सा स्मर्तुं जाग्रता जनेन। अनेनैव हेतुना चेदस्माभिरस्या दुर्विज्ञेयत्वं प्रतिपाद्यते, तदाऽस्माभिः शून्यवादिनां शून्यमेव प्रायेण गृहीतं भवति। सच्चिदानन्दं हि ब्रह्म—इत्येतावदेव ब्रह्मवर्णनावसरे दृढनिश्चयं वक्तुं शक्यते। उल्लिखितैः कारणैर्यतो निर्गुणं किञ्चित्

प्रतिपाद्यते, तत उपनिषदां "नेति नेती"ति सूत्रेण निषेधमुखेन वर्ण्यते ब्रह्म वेदान्तवादिभिः।

एभ्यः पद्येभ्यो बहव एव लभ्यन्ते सिद्धान्ताः। असुगमं भ्रान्तिजननञ्च कालाकाशकार्यकारणभावातिरिक्तस्य विषयस्य कालाकाशकार्यकारणभावान्तर्गतविषयतया परिकल्पनम्। परं कालाकाशकार्यकारणभावान्तर्गतत्वाज्जनानां मनसोऽलं तावन्निर्वाचनप्रयासेन, अतोऽद्वैतवादिनो वैदान्तिकस्य जगत् स्वप्नानुभूतो वस्तुविशेष इव। सुस्पष्टे स्वप्ने नरः स्वप्नदृष्टं जगत् सत्यतया गृह्णाति विचरति च तत्र जागतिक्यैव रीत्या। रङ्गमञ्चे नटाश्च स्वप्नदर्शिनः सकाशेऽवितथत्वेनैव तदा प्रतिभाति। अनुभवनक्षमाद् अस्माकं मानसान्नैव तत् किञ्चिदतिरिक्तं वस्तु, यदस्माभिः स्वप्ने दृश्यते इति तु स्वापावसान एवास्माभिर्विज्ञायते। साम्प्रतं परमसत्यत्वेनैकमेव चेतनं चेतस्त्वेन, स्वप्नदृष्टवस्तुत्वेनैव चेदं परिदृश्यमानं जगद् विचिन्तय। तेनाद्वैतवादिभिर्वैदान्तिकैर्जगतो रहस्यमवलम्ब्य यदुक्तम्, प्रायेण तत् सर्वमेव ते प्रतिभास्यति। वर्जयित्वा तच्चेतनं चेतस्तदतिरिक्तस्यापरवस्तुनः स्वतन्त्रसत्ताया अभावात् स्वप्नदर्शिनस्तस्यैवैकस्य चेतसो जागरणादेवास्मदावासस्थानमिदं जगद् विलीयत इत्युल्लिखितचरस्य सादृश्यस्यास्य निपुणतयाऽनुधावनेनैव प्रतिपाद्यते। यस्तु स्वप्नोऽस्माभिरनुभूयते, स तु स्वप्नान्तर्गतोऽपरः स्वप्न एव। एतदेव समासतो वेदान्तस्य मतम्। "तत् त्वमसि" इति श्रुतेर्वयमेव तत् चेतनं चेतः। अविद्यान्धीकृतलोचनैः सत्यं नास्माभिर्निरूपयितुं शक्यते। अस्मास्ववतिष्ठमानायामविद्यायां दुर्निवारसंसारचक्रे बंभ्रम्यमाणैरस्माभिरासाद्यत एव क्लेशवहा जीवितपरम्परा। समुन्मीलितेऽस्माकं नेत्रे दूरीभूतायाञ्चाविद्यायां परमार्थे किञ्चनाद्वितीयं सत्यमिति, वयमेव तदिति, मायात्वेनास्माकं पुरतः स्थितेनानेन ब्रह्माण्डेन समं प्रलयं यास्यतो द्यावापृथिव्याविति चास्माभिर्विज्ञायन्ते।

उच्चकैर्नभोमण्डलम्, धरित्री, धरित्र्यन्तर्गतं जलम्, अन्यच्च द्रव्यजातम्, इत्यादिरूपाणि विस्मयोत्पादकानि कार्याण्यविद्यामाश्रित्यैव तिष्ठन्ति। तस्या अविद्यायाः किं नाम स्वरूपं कथं वा सा समुद्गच्छतीति प्रश्नोऽत्र स्वत एव जायते। अविद्यां तत्कारणञ्च बोधयितुं "माये"ति पदं व्यवहृतं शङ्करेण। "माया"पदं साधारण्येन "इल्युशन्" पदेनानूद्यत आङ्गलभाषायाम्। मायापदस्यास्मिन्नाशयविशेषे अस्त्येव खलु काचिद् विप्रतिपत्तिः। केचन वैदान्तिकास्तदाशयविशेषं भ्रान्त्युत्पादकं मन्यन्ते। अर्वाचीनानाम् अद्वैतवादव्याख्यातॄणां प्रधानेन स्वामिविवेकानन्देन प्रदर्शित एव तस्याऽऽशयस्य दोषः। ये वयं यच्चास्माभिः परितः समवलोक्यते इत्यादितत्त्वानां निर्देश एव तन्मते माया। अपरथा चेदुच्यते, तदा नेयं माया दृग्विषयीभूतस्य विश्वस्य तात्पर्यं द्योतयति, परं सा हि प्रत्यक्षेणानुभूतस्य जगतो वा प्रकृतेर्वा कालाकाशकार्यकारणभावैर्नियमितानां विषयाणां वा नाम। वैदान्तिकदृष्ट्या तु तुल्य एवैतेषामाशय इति वक्तुं शक्यते। मिथ्यागृहीतानुभूतित्वेन चेद् बुध्यते माया, तदा—अन्यथा व्याख्यातं परमतत्त्वं हि प्रत्यक्षदृष्टं जगद्—इति वदद्भिर्वैदान्तिकैः समं विवादस्यावसर एव न स्यात्। आपातदृष्ट्या ब्रह्मणो विकाशविशेषतयैव प्रतिभातीदं विश्वम् इति मायापदमधिकृत्यैव कथितं स्वयमेव स्वामिना। सर्पे रज्जुभ्रमः इति वेदान्तस्य प्रसिद्धमुदाहरणमपि तत्र तेन प्रदत्तम्। यस्य रज्जौ सर्पभ्रमो जायते, स तु सर्पबुद्ध्यैव तां रज्जुं पश्यति। उक्तञ्च स्वामिना "तथापि रज्जुरापाततः सर्पतयैव प्रतीयते। परं भ्रमापनोदनेन समं नश्यति स सर्पः।" भ्रमापनोदनपदं मयैव योजितं पूर्वगते वाक्ये। विश्वरूपेण परमात्मानं प्रकटयतीति व्यक्तित्वमृगतृष्णिकया प्रतार्यामहे वयमिति च तेनैवोक्ते। चक्षुष्मद्भिरस्माभिर्दृश्यते बाह्याकृतिरेव। तिरस्कारिणीव बाह्याकृतिरविनश्वरं

परमात्मानं निगूहते। अपसारितायां तिरस्करिण्यां नाऽऽसीद् बाँह्याकृतिर्यथार्थतया कदाचिदित्यस्माभिर्बुध्यते। परिदृश्यमानं जगच्चेत् कदापि नाऽऽसीत्, परमस्माभिः केवलं परिचिन्तिता चेत् तस्य सत्ता, तदा तन्मायेति वक्तुमसंशयमेवास्माभिः पार्यते। स हि तावदेवं मन्यते,—साधारण्येन सर्वेषामेवाद्वैतवादिनां वैदान्तिकानां मनसि मायापदं जनयति किञ्चन चित्रं प्रत्यक्षतां गाहमानस्यास्य जगतः। आपेक्षिकं किमपि सत्यम् आस्त एवास्मिन् वाह्यजगति। सारांशेन विवर्जित आकारोऽयं खलु वाह्यजगतः। परमात्मना जीवात्मनस्तादात्म्यज्ञानाद् विलीयते खल्विदं जगत्। तदानीं सत्ताविशेषोऽस्य कदाचिदासीदित्यपि नैव बुध्यते। निपुणं चेद्विचार्यते, तदा सेण्ट्पल् महोदयोक्तं खृष्टीयं मतमप्येतत्सदृशमेव स्यात्। नश्वरेऽस्मिन् विश्वे विद्यत एवाऽऽपेक्षिकं किञ्चन सत्यम्। अदृश्यमानं वस्त्वेव सनातनं परमं सत्यञ्च।

ससारत्वेन साधारणैर्गृहीतमिदं जगदसारमेवेति विश्वविषयकमनुमानमेतस्मादेव वचनाल्लभ्यते। एतावन्मात्रं वैदान्तिकानामनुसरणं न दुष्करम्। परं जगदिदमसारं मायामयं मायान्तर्गतैरस्माभिरयाथातथ्येन व्याख्यातमित्यनुभवितुं वयमसमर्था एव। तथापि बुद्ध्या तथात्वेनैतदवधारयितुं कथमपि शक्यत एव। ब्रह्म चेत् परमं सत्यम्, तदा कथमियं भ्रान्तिर्जायत इत्यस्य सुमहतः प्रश्नस्य समाधानमेवासुकरम्। स्वतन्त्रं परमं सत्यं ब्रह्म चेदहम्, तदा कथं मया स्वस्य ब्रह्मत्वं कदापि नैव स्मर्यते? कथमिदमविद्यातिमिरम् अस्माकं बुद्धौ समायाति। कथं वेदं जातम्? परमगौरवास्पदं ह्यस्य प्रश्नस्योत्तरम्। अस्य प्रश्नस्य भारतीयचिन्ताप्रसूतमुत्तरं लब्धुं साम्प्रतं यतिष्ये।

---

# षोडशोल्लासः

## पण्डितानां विवादविषयः

पूर्वतनोल्लासस्य चरमे भागे निवेशितः प्रश्नः कदाचित् समुपस्थापितो मया पूर्ववङ्गानां पण्डितानां सविधे। ब्रह्म चेत् परमं सत्यम्, कुतः खल्वियं समुपजायतेऽविद्येत्यत्रैव मया समनुभूयते किञ्चनासौकर्यम् इत्यहमवोचम्। सत्यं मायाश्चानुभवितुकामेन ब्रह्मणा द्वैतीयीकमिदं जगत् प्रविश्यत इति मन्ये पठितं मया मैत्रायणोपनिषदि। अनन्तस्य ब्रह्मणोऽसीमत्वनाशनाज्जायत एवात्र नूनं कश्चन विरोधः। समकालमेवैतेनैकस्यैव विषयस्य ग्रहणं प्रत्याख्यानञ्च जायेते। निर्गुणेन ब्रह्मणा समं युज्यतेऽत्र त्वया वासनागुणः। कथमविद्यात्मकं सञ्जातमिदं बाह्यं जगदित्यस्यैव प्रश्नस्य मृग्यतेऽत्र मया समाधानम्।

अस्य प्रश्नस्य लब्धानि मया बहून्येवोत्तराणि। मत्परितोषजननेऽक्षमाण्यपि तानि भारतीयानां मनसां दार्शनिकचिन्ताशीलत्वमपूर्वां सूक्ष्मदर्शिताञ्च पिशुनयन्ति। मायाऽविद्यादिपदानि भारतीयैर्बहुधा व्याख्यातानीत्यपि तेभ्यः प्रकटतां जगाहे।

ब्रह्म आत्मानमेकलं मत्वा स्वमा[illegible]त्म्यप्रकाशनाय मुकुरायमाणां मायां ससर्ज—इत्यादिरूपं व्याख्यानं यन्मया मैत्रायणोपनिषदः समुद्धृतम्, विद्यतेऽथवाऽ[illegible]तु, तत् स्वल्पमतीनां जनानां प्रतिबोधनायैव निदर्शनत्वेन परिकल्पितः।

एतावत्पर्यन्तं साधारणमेवाऽऽसीत् सर्वम्। ततश्चाऽऽसन्

अद्वितीयं हि ब्रह्मेति, ब्रह्मणः सत्यत्वान्मिथ्या हीदं दृश्यमानं जगदिति, माययाऽविद्यया वा जगदिदं सत्यत्वेन प्रतीयते इति, मूढता मिथ्या-ज्ञानं वाऽविद्येति, ज्ञानेनैवाविद्या नाश्यते मिथ्यात्वेन ज्ञायमानं सत् प्रविलीयते च जगदिति, व्यक्तिगतदृष्ट्या जगद्विषयकान्मिथ्या-ज्ञानादेव मोक्षो जन्मबन्धविमुक्तिर्वा जायत इति चोल्लिखितप्रश्न-सम्बद्धान् सिद्धान्तान् संश्रयन्तः केचन मनीषिणः। शङ्करेणैवाऽऽ-सादितस्त्वासीच्छेषोक्तः सिद्धान्तः। परं दुष्टतर्केणैव शङ्करेण स सिद्धान्तोऽधिगत इति कैश्चिद्विपश्चिद्भिः पुष्यमाणं मतं साम्प्रत मेव मया स्पष्टीकरिष्यते।

एतेभ्यः स्वीकृतेभ्यस्तत्त्वेभ्यः समुद्गतेनैतत्प्रश्नविषयकेण वितर्केण विचित्राया भारतीयधीशक्तेरनुगुणोऽवसरो दत्तः। समधिगतानि मया निबन्धाकारेणैवास्य प्रश्नस्योत्तराणि। विभिन्नेनाऽऽकारेणोप-स्थापिताः साधारणा अपि विषयास्तेषां केषुचित् प्रबन्धेषु विरेजिरे। संकथाकारेण तेषां निबन्धानां सारांशोऽधस्तान्मया निबध्यते। निबन्धकान् "पण्डित" पदेनाऽऽत्मानञ्च "प्रष्टृ" पदेन तस्यां संकथायां प्रकाशयिष्यामि।

पण्डितः—अपि नाम बाह्यस्य जगतः कारणभूता मायाऽविद्या वा कथं जायत इति पृच्छा? अनादिः सा न जायत इति मया कल्प्यते तस्या उत्तरम्।

प्रष्टा—किं मायाऽनादिरिति त्वयोच्यते? ततः सनातन्य-नन्ता च सा नैव नाशयितुं शक्यते। तथा सति कथं मुक्ति-रवाप्यते?

पण्डितः—मायाऽनादिरिति मयोक्तम्, परं नाभिहितं मया मायाऽनन्तेति। वस्तुतस्तु सा सान्तैव।

प्रष्टा—अनादि किमपि वस्तु किं कदाचित् सान्तं भवति? अपि शक्नोति भवान् अनाद्यपि किञ्चन सान्तं वस्तु मां प्रदर्शयितुम्?

पण्डितः—नैतद् दुष्करम्। घटपटादिकं किञ्चन साधारणं वस्तु क्षणं चिन्तय।

प्रष्टा—भवतु, तथैव क्रियते।

पण्डितः—घटोत्पत्त्या किं न नाशितो घटस्य प्रागभावः ?

प्रष्टा—सत्यं तथैवैतत्।

पण्डितः—अत्र घटस्य प्रागभावः किं नाऽऽसीदनादिः ?

प्रष्टा—अभ्युपगम्यत एव मयैतत्।

पण्डितः—ततः किं न शक्यतेऽस्माभिर्वक्तुं सृष्टवस्तूनां प्रागभावोऽनादिः सान्तश्चेति ?

प्रष्टा—मोघीकृत-मदीय-समालोचनया त्वदीय-कल्पनाशक्त्या मूकीकृतोऽपि सविशेषमेतद्विषयं ज्ञातुमिच्छामि। ब्रह्म चेदद्वितीयमेकं सत्यम्, तदा कथं मायाया अस्तित्वं स्वीक्रियताम् ? मायायाः सत्यत्वे प्रतिपन्ने ब्रह्मातिरिक्तस्य विषयान्तरस्य स्वीकारो किमु नैव जायते ?

पण्डितः—न च माया सत्याऽसत्या वा।

प्रष्टा—ज्ञानद्वयस्य पारस्परिकविरोधोऽनेन समुत्पाद्यते। सरूपं व्याख्यायतां सर्वम्।

पण्डितः—विनाशात् पूर्वं विनष्टवस्तुनः स्थितिरपिनाम त्वया स्वीक्रियते ?

प्रष्टा—कोऽत्र संशयः ?

पण्डितः—किमभ्युपगम्यते त्वया—नाश्यते ज्ञानेनाविद्येति ?

प्रष्टा—अथ किम्।

पण्डितः—ज्ञानेन माया नाश्यत इत्यनेनैव मायाया अस्तित्वं ज्ञायते।

प्रष्टा—स्वतःसिद्धस्तावदयं विषयः। न च मया कदाचिदप्यविद्यारूपस्य कस्यचिद् विषयस्यास्तित्वमस्तित्वसम्भावनं वा नाङ्गी-

कृतम्। यस्तु विषयो नाऽऽसीन्नास्ति न भविष्यति वा, स कथं चिन्तनीयः। स्वास्तित्वविषये स्वास्तित्वसम्भावनविषये वा स्वतःसिद्धं वस्त्वेवास्माभिश्चिन्तितुं पार्यत इति किं सत्यं नैतत्।

पण्डितः—न हि कथञ्चिदपि तत् सत्यम्। तस्य सत्यत्वे स्वीकृते त्वया मनसि समुद्भावितस्य शशविषाणस्य बन्ध्यासुतस्यापि वा सत्यत्वं प्रतिपादितं स्यात्।

प्रष्टा—अविद्याया मायाया वाऽस्तित्वमस्माभिः स्वीक्रियते। एकमेवाद्वितीयं ब्रह्मेति स्वीकरणेन किं मायया ब्रह्मणस्तादात्म्यं नैव द्योत्यते?

पण्डितः—तादृशी बुद्धिर्नैव लालनीया, यतस्तथा सति ज्ञानेन मायाया विनाशो ब्रह्मणोऽपि विनाशं क्रोडीकुर्यात्। असम्भवमेतद् यतो ब्रह्मज्ञानमेव मायाया विनाशकम्।

प्रष्टा—मायाया अस्तित्वं ब्रह्माश्रितत्वञ्चाभ्युपगम्यापि कथं तस्या ब्रह्मणा तादात्म्यं नैव स्वीकुर्वीय। तर्कशास्त्रविरुद्धमिवैतन्मे सर्वं प्रतिभाति। अप्यस्य रहस्यस्योद्घाटने भवान् समर्थः?

पण्डितः—अपि कदाचिन्मरुस्थल्यां परिभ्रमता भवता प्रत्यक्षीकृतं सूर्यालोके परिस्फुरद् गभीरं शीतलं श्रान्तिहरं विततं सलिलम्?

प्रष्टा—दृष्टम्। जलत्वेन व्यक्तं प्रतीयमानम् अपि तद् वस्तु मरीचिकेति मया ज्ञातम्।

पण्डितः—अपिनाम प्रतिश्रूयते मरीचिकाया अस्तित्वम्?

प्रष्टा—स्वीक्रियत एव।

पण्डितः—मरुस्थलमेव सत्यं वस्त्विति प्रतीतिविषयं गते मरीचिका विलीयते। अपरथा चेदुच्यते तदा मरुस्थलाश्रयिणी मरीचिका मरुस्थलज्ञानेनैव ध्वंसं गच्छति।

प्रष्टा—अभ्युपगच्छाम्येतत्।

पण्डितः—मरीचिकायाः स्थित्या किं कश्चिदपि विकारो जातो मरुस्थल्याः।

प्रष्टा—न तथा वक्तुं शक्यते।

पण्डितः—माया विद्यते इति, ब्रह्मैव तस्या आश्रय इति, ब्रह्मज्ञानेन सा नश्यतीति, तटस्थं ब्रह्म तयाऽनुपहतमिति, एकमेवाद्वितीयं ब्रह्मेति च सर्वमेवातः कथं न चिन्तनत्तमम् ?

प्रष्टा—मरीचिकाया मरुस्थल्याश्च सादृश्येन सर्वं तथैवेति प्रतिभाति। परं यथा मरीचिकायाः पारमार्थिकसत्ता नास्ति, तथा किं मायाया अपि पारमार्थिकसत्ताया अभावो नैतस्माद् गम्यते ?

पण्डितः—विचारमुखेणैव स्वीकृतं त्वया मायायाः सत्ता। साम्प्रतं तस्याः पारमार्थिकसत्ताया अभावोऽपि त्वयैवाभ्युपगतः। अतो माया न सत्या, नवाऽसत्येति यन्मयोक्तम्, तत् त्वया गृहीतमेव। मरीचिकाया अलीकत्वं तद्विपरीतं सत्यत्वेन बोधश्चाऽऽश्रित्य तस्या ह्यसत्यत्वं प्रतिपादयता यत् त्वयोक्तम्, तत् सत्यमेव। तथापि तादृशी मरीचिकाऽपि सत्यैवेति वचनमनिन्दनीयम्। सत्यमापेक्षिकं स्वतन्त्रञ्चेति वदतां हिन्दूनां बुद्धेरेतस्मादेव ते ज्ञानं भविष्यति। नह्यापेक्षिकं सत्यमेव समग्रं सत्यम्, परं तत्रैवाऽऽस्ते सत्यस्य सार इति।

दृग्विषयीभूतस्य विश्वस्य माया अनादिः कारणहीना चेति—समासतोऽत्र दत्तं तैर्मदीयस्य प्रश्नस्योत्तरम्। एतेन मायाया अद्वितीयस्य ब्रह्मणः समरूपता समसनातनत्वञ्च प्रतिपादिते भवतः—इत्यस्याः सुस्पष्टाया आपत्तेः—न तथेदम्, यतो यथा मरीचिका मरुस्थल्या मिथ्याबोधस्तथैव वाह्यमिदं जगदपि ब्रह्मणो विषये मिथ्याबोधः—इत्यभूदुत्तरम्। मिथ्याबोधस्य योनिं जिज्ञासुर्जनोऽविद्यायाः स ( मिथ्याबोधः ) जायते इति कथितो भवतीति, मायया

अविद्यायास्तादात्म्यं चेन्नैव स्वीक्रियते, तदा मायैव तस्या हेतुरिति च वाक्याभ्याम् जनस्य स्वत एवैषा प्रतीतिर्जायते, यन्निष्फलैश्चित्तविभ्रान्तिकरैरेभिः पदैराकुलीकृतो जनो विवादपदमेव पुनः पुनः प्राप्नोतीति। निरर्थकं मार्गान्तरमाश्रयितुकामे मयि सदयं मदीयं करं धृत्वा सुस्निग्धं निर्भर्त्सयित्वा च माम्, तैरभिहितम्—कठोरेण तपसा निष्कामोपासनया च यैर्महात्मभिः कालाकाशवासनादीनां बन्धनमतिक्रान्तम्, तैरेवैते विषयाः सम्यग् बुध्यन्ते। समुज्ज्वलेनाऽऽलोकेनान्धकारस्य स्वरूपमाविष्कर्तुमिच्छोरिव परिमितया बुद्ध्याऽविद्याया दुर्विज्ञेयं रहस्यं ज्ञातुकामस्य चेष्टा। वाह्यस्य जगतो मायेयं कथं जायते—इति प्रश्नस्योत्तरस्यानावाप्तिरेव समभिनन्दनीया, न तु निन्दनीया मयेत्यहं तै रभिहितः। अथवाऽन्यैरेवोत्तरैश्चेदुदीर्यते, तदा कथमनन्यसम्बद्धं ब्रह्मान्यसम्बद्धं जायत इति? तथैव चेदहमकरिष्यम्, तदा तदनन्तमविज्ञेयञ्च ब्रह्म ससीमया मानवबुद्ध्या विज्ञेयं सान्तञ्चाभविष्यत्। जानीयाम वयञ्चेदस्य प्रश्नस्योत्तरम् अपिनाम तदा तत्परमं वस्तु तिष्ठेत्। ध्रुवं तदानीं तन्नैव तिष्ठेत्। तथा सति तदन्यसम्बद्धं स्यात्। साधारणबुद्ध्या किं तावज्ज्ञानपदेन लभ्यते? अस्माकं मनसा परिमितं वस्त्वेवास्माभिर्विज्ञायते, परं यत्तु परिच्छेत्तुं नैव शक्यतेऽस्माकं मनसा, तन्नैवास्माभिरवधारयितुं पार्यते। सावधिके सति परमे ब्रह्मणि तस्यासीमत्वं विलीयते समुत्पद्यते च ससीमत्वम्। मनसा समर्यादीकृतानि सर्वाण्येव वस्तूनि सान्तानि भवन्ति। अतः परमवस्तुनो ज्ञानमसम्भवमेव। अनेनैव हेतुना खल्वस्य प्रश्नस्य कदाचिदपि न जातमुत्तरम्। समभविष्यच्चेदस्य प्रश्नस्योत्तरम्, तदा केवलस्य ब्रह्मणः कैवल्यं नैवास्थास्यत्।

अप्रतिपादनक्षमा हि समुल्लिखितस्य व्याख्यानस्य चरमसिद्धान्तस्य च युक्तियुक्तता। पुरतश्च तस्य व्याख्यानस्य सर्वा-

श्चेतराश्चिन्ता अकिञ्चित्करतया प्रविलीयन्ते। हिन्दूनां सविधे वेदान्तदर्शनं हि युक्तिवादात् किञ्चनाधिकतरं गौरवास्पदं वस्तु। भारते धर्मदर्शनयोर्मध्ये सुस्पष्टा पारस्परिकविघटनसम्पादनक्षमा नास्ति काचित् सीमा। न तु युक्तिवादात्, परमैशोन्मेषरूपाद् एकस्मादेवोद्गतिस्थानात् समधिगता ताभ्यां धर्म-दर्शनाभ्यां प्रणोदना। उपनिषदां वस्तुविषये यथा तथा वा भवतु नामास्माकं मतम्, भारतीयास्तु तदीश्वरप्रेरितत्वेनैव गृह्णन्ति। ऋषिभिः श्रुतत्वा-दैशोन्मेषलब्धत्वाच्च भारतीयैः श्रुतित्वेन गृह्यते मन्त्रब्राह्मणारण्य-कोपनिषदात्मको वेदः। अविचार्या हि दर्शनानां मूलं श्रुतिः। श्रुतिस्थितानां विषयाणां व्याख्यानमेव भारतीयानां दार्शनिकानां कर्म। तद्व्याख्यानसमये पुनस्तेषां चिन्ताप्रवाहेणोत्थापितप्रश्नानां समाधानविषये श्रुतेरेव प्रामाण्यं पर्यलक्ष्यत। प्रथमतस्तावद् ब्रह्मणः परमार्थत्वे केवलत्वे चास्त्युपनिषत्सु दृढः प्रत्ययः। एवं प्राप्ते ब्रूमो यद् व्यावहारिकस्य जगतः सांवृतं सत्यत्वं कथमपि निराकर्तुं न शक्यते, द्रष्टुर्जीवस्य बुद्धौ तस्य भानं प्रसह्य बोभूयत एव। एतेन केवलाद्वैतवादस्य शाश्वतिकविरोधो दुष्परिहरः; परमध्यात्मवादोऽपि प्रसिद्धोपनिषन्महावाक्येषु प्रतिष्ठितः।

प्रत्यक्षेण जगन्मिथ्यात्वं नाऽऽयातम्। अनुमानेनापि तत् साध-यितुं न युज्यते। स्वभावेन दुर्बलं खलु मानवं चित्तं जगन्मिथ्येति कल्पयितुं न शक्तम्। तस्य आशा, भयम्, तज्जन्या उपासना, तस्य प्रार्थनामन्त्राः, दृश्यजगतोऽकर्तृकजडयन्त्रत्वेन विकृतचित्तस्य मायिककल्पनारूपेण वा निर्धारणे विरागः—सर्वाण्येतानि जग-न्मिथ्यात्वविरोधीनि। ततः पुनः शास्त्राणां परस्परविरोधोऽ-संगतयश्च। एतेभ्यः खलु कारणेभ्यो विस्पष्टस्य सगुणेश्वरवाद-स्योत्पत्तिः सञ्जाता। यः खलु वादो भारतीयदर्शनेषु प्रसिद्धस्य तत्त्वाद्वैतवादस्य सहगामिपक्ष इव विराजते, प्राक् सगुणवादोऽसौ

तत्त्वाद्वैतवादस्य विरोधेन समुत्पन्नोऽपि कालेन तद्विरोधं परिहृत्य तस्य परिपूरकपक्षरूपेण समजायतेत्येवात्र दुर्बोधं वैचित्र्यम्।

कस्तावत् साकारः परमेश्वर इत्यपृच्छत् स्वामि-विवेकानन्दः। हिन्दूनां धर्मग्रन्थाद् वचनं समुद्धृत्यैव तेनोक्तम्—"स हि सनातनः, शुद्धः, सर्वशक्तिमान्, सर्वज्ञः, परमकारुणिकोऽचिन्त्यप्रेमस्वरूपश्चेति।" दार्शनिकानां सच्चिदानन्दो भक्तानां प्रेममयः परमकारुणिकश्चेति किमास्ते परमेश्वरद्वयमित्याशङ्क्यैव तेनोक्तम्—ब्रह्मणाऽभिन्न एव साकारः परमेश्वर इति। सर्वमेव तदद्वितीयं ब्रह्म। केवलत्वेन परमार्थत्वेन च तस्य विचिन्तनं दुष्करमिति भक्तैः साकारस्येश्वरस्य परिकल्पनं कृतम्। मानुषबुद्ध्या सम्पूर्णतयाऽधिगतस्य ब्रह्मविषयकस्य ज्ञानस्य सम्पूर्णो विकाशो हि साकारे परमेश्वरे जायत इति तेनैव व्याख्यानमुखेनाभाणि।

अद्वैतवादरूपपवित्रदुग्धपिपासुभिर्बादरायणसूत्रावलम्बिशङ्करकृतभाष्यमेव श्रयणीयम्। पूजाप्रार्थनादीनां व्यावर्तकं दर्शनं कथं धर्म्यं स्यादिति जिज्ञासुनाऽर्वाचीना वेदान्तमतानुसारिण एव द्रष्टव्याः।

---

## सप्तदशोल्लासः

### वेदान्तस्य वाणी

स्वरचिते विश्वविश्रुते वेदान्तसूत्रभाष्ये यो हि नाम विषयः प्रधानत्वेनोपन्यस्तः शङ्करेण, तस्य स्थूलं वर्णनं सुविपुलाया विप्रतिपत्तेः प्रतिकूलतया वर्तमानमपि सर्वथा प्रधानतयैव चकास्ति। पूर्वतन उल्लासे तास्तावद् विप्रतिपत्तयो मया निवेशिता एव। केवलं निर्गुणं ज्ञानमयं ब्रह्मैव परमं सत्यम्। सर्वमन्यद् आपेक्षिकं सत्यत्वं समुद्वहति। आत्मबोधे जाते जीवात्मा ब्रह्मणात्मनस्तादात्म्यं विजानाति। समर्यादत्वसंसर्गादेव जीवात्मपरमात्मनोर्भेदः प्रतीयते। समर्यादत्वेन शकलीकृतादेव मन्ये परमात्मनो जीवात्मसृष्टिर्जायते। जीवात्माऽयं न तु सत्यः, परं सत्याभास एव, समर्यादत्वस्याविद्याजातत्वाद् ब्रह्मबोधस्यासाध्यत्वाद् वा। भाष्यस्य मूलस्य चाऽऽङ्गलभाषात्मकानुवादेन परिपूर्णेषु सुदीर्घेषु त्रिपञ्चाशदधिकाष्टशतसंख्यकेषु बृहदाकारपत्रेषु दरीदृश्यत एवायं खलु भावः। संख्यातीतैरात्मभिर्विचित्रैः सचेतनाचेतनैर्वस्तुभिरुपलक्षितस्यास्य दृग्विषयीभूतस्य विश्वस्यापि कारणं किञ्चन परिचिन्तनीयम् इति कृत्वा, ब्रह्मणः परमार्थत्वस्वीकाराच्च तदेवास्य कारणम्। "यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते, अवस्तुत्वात्, एवं परमात्माऽपि संसारमायया न संस्पृश्यत इति।"

अविद्यया शृङ्खलितानामस्माकं सविधे सत्यत्वेन प्रतीयमानमिदं

मायामयं जगत् सयत्नमस्माभिश्चिन्तापथान्निष्काशितमपि दृढमेवा-स्माकं मनसि लग्नं तिष्ठति। स्वमतस्थापनाय शङ्करेण यो हि खल्वनुलोमः प्रतिलोमो वा वितर्कः संश्रितस्तस्य पठनसमये चित्तवैक्लव्याद् विरोधाभासेभ्यश्च जायमानैरसौकर्यैरितरैश्च वैषम्यै-र्दोधूयत एव जनस्य मौलो बोधः। परिदृश्यमानस्य विश्वस्य मिथ्यात्वप्रतिपादनक्षमे ब्रह्मज्ञाने नास्ति शूद्राणामधिकार इति कुत्र-चित् सयुक्तिकं शङ्करेण प्रतिपादितम्। अस्मात् सिद्धान्तात् कानि-चनाऽऽनुषङ्गिकफलानि प्रवर्तन्ते, येषु शङ्करेण दृष्टिर्न निक्षिप्ता। तद् यथा, शूद्रः खलु शूद्रत्वेन रूपेण व्यावहारिकं जगदेव सत्यतयाऽव-गच्छति। शङ्करमतरीत्या तस्य तु पारमार्थिकसत्यस्य भानं न सम्भवति। अतस्तद्दृष्ट्या पारमार्थिकं सत्यं नाम किमपि कदापि न वर्तते।

विश्वेऽस्मिन् ईश्वरैर्नरापेक्षया समुन्नततरं स्थानमधिक्रियत इति ब्रुवाणस्य शङ्करस्यानुशासनवाक्येनैतत्सदृशस्याप्यरुद्ध व्यभि-चारविशेषस्यावसरो दत्तः। ईश्वरवादिनामीश्वरस्यानुरूपः कश्च-नाऽऽस्ते विश्वस्येश्वरः। तस्मिन्नेवेश्वरे सम्भवति ब्रह्मज्ञानम्। सर्व-दैवाऽऽत्मनो ब्रह्मणा तादात्म्यं बोद्धुं क्षमः स दृग्विषयीभूताद् विश्वात् प्रलीयते। वस्तुतस्तु नैतत् सम्पद्यते, यतः कल्पात् कल्पान्तरं यावद् विश्वस्येश्वर एव स्थिरमवतिष्ठते। अनन्ता हि कल्पपरम्परा, जीवजगतो विवर्तनस्य सनातनत्वात्। यद्यपि साधारणा जीवाः पूर्वजन्मगतामेव योनिं सर्वथैव न प्रतिपद्यन्ते, तथापि साधारण-जीवत्वेनेश्वरस्य परिकल्पनं नैव युज्यते। अनारतं प्रसृतया वित-ण्डया पारमार्थिकसत्यत्वेन ब्रह्मविषयकं ज्ञानं दूरमेवापसर्पति, जनश्च दृग्विषयीभूतेनानेन विचित्रेण जालाकारेण जगता विशेषेण संसक्तो भवति। धर्मपरायणानां हिन्दूनां मते सनातनः खलु वेदः। विद्यमानायामप्येतस्मिन् मते विप्रतिपत्त्यां शङ्करस्तु कदापि

नैवात्र विप्रतिपद्येत। कल्पारम्भेषु विश्वस्य पुनः प्रकाशसमयेषु वा ऋषीणां सकाशे प्रकाशतां यन्त्येते वेदाः। विवर्तमाना जगत आविर्भावा अनन्तकालं व्याप्य एकरूपा एव स्युः—इत्यादयो बहव एवावान्तरसिद्धान्ता एतस्माल्लभ्यन्ते। शङ्करेणैतन्मतं गृह्यते। तन्मते तु प्रकाशं प्राप्य विश्वं चरमवितर्तिं लभते; ततस्तज्जटिलतां गाहते; ततश्च परमे ब्रह्मणि विलीयते। एष एव तावत् क्रमश्चिराय चलति। स्थिरमेव हि विश्वस्य स्वरूपम्। नवीनायां कस्याञ्चित् सृष्टौ षष्ठं किञ्चनेन्द्रियं तस्य विषयश्च जनिष्येते इति चिन्तितुमपि नालम्। मिथ्या चेत् सर्वमिदमविद्योद्भावितं जगत्, तदैतादृश्या दृढतयैतस्य विषयस्य प्रतिपादनं निरर्थकमेव स्यात्। विगलितमिथ्याबोधं किञ्चिज्जगत् प्रतिपादयतां वचनानाम् एकमस्माभिरत्र प्रत्यक्षीक्रियते। सूर्यचन्द्रादिभिः सकलस्य ज्योतिष्कमण्डलस्य नरैः पशुभिश्च सममपरेषां चेतनपदार्थानाञ्च विस्मयावहं तत्राऽऽस्ते वर्णितम्। हृद्यन्त्रस्याऽऽकुञ्चन-प्रसारणादिकमनुसरत् तालबद्धं सङ्गीतकमिवानन्तं कालमाकाशञ्च व्याप्य विवर्तमानं नरैरनुभूयमानं चेतनाचेतनात्मकमिदं जगद् अपि विस्तारं जटिलताञ्च समाप्नोति। कल्पात् कल्पान्तरं यावत् स्थितिशीलैरीश्वरैः शिष्यत इदं जगत्। नैतिकभावप्रधाना, धर्म्यैः कर्तव्यैरुपेता, सुखलाभाय क्लेशपरिहाराय च पापैर्वर्जिता, पूर्वजन्मार्जितपापपुण्यानुगुणपरजन्मप्रवृत्तिप्रतिपादयित्री काचिदस्त्येव वस्तुविषयिणी परिकल्पना। अनन्तस्य वर्त्मन्यनादिरनन्ता च दिवसरजनीनां काचिद् यात्रेयम्। यात्रानिरतानां सर्वेषामेव विषये सत्यत्वेन निर्विवादस्वीकृतं वस्तुगतन्तावदिदं कल्पनम्। कल्पनायामस्यामास्ते कश्चनेश्वरः यो हि समुपासनीयः, अदृष्टलाभाय च यमेवोद्दिश्योपासकः कर्म कुर्यात्। अविद्यालब्धं मायामयञ्चेदं जगदिति यच्छङ्करेण ग्रन्थस्य बहुलभागेन प्रतिपादितम्, तस्य विरुद्धं खल्वेतत् परिकल्पनम्। कालक्रमेण

येनाध्यात्मवादेन प्रतीच्यदेशजानां दार्शनिकानां चूडामणेर्विशप्-ब्रार्क्‌ले-महोदयस्य सङ्गो लब्धस्तस्याप्यध्यात्मवादस्य प्रत्याख्यानेऽपि कदाचिद्‌ बद्धपरिकर इव सोऽलक्ष्यत। चेतनातिरिक्तं किमपि वाह्यं वस्तु नैव विद्यत इति वदतां बौद्धानां विचारविषयो यतस्तेन निन्दितः। सुदीर्घस्य विचारग्रन्थस्योपसंहार एव वस्तु तद्विषयकं ज्ञानं च स्वतन्त्रे भवत इति दृश्यते प्रतिपादितम्। तादृशस्य विचारग्रन्थस्याध्येतुर्विशिष्टेन प्रत्यक्षमात्रवादिना वस्तुनः सत्ता प्रतिपाद्यत एवात्र ग्रन्थे इत्यादिरूपो भ्रमो दुरपनेय एव। दृढग्रहं गृहीत्वापि मौलं बोधं यदि तादृशानां वाक्यानाम् एकमपि कश्चित् पाठकः पठति, नूनं जायेतैव तदा तस्य बुद्धेर्व्यामोहः। द्वितीयाध्यायस्य प्रथमपादस्य द्वाविंश-सूत्रस्य शङ्करकृतं भाष्यं पठता केनचित् पाठकेन कथं नामोल्लिखितस्य भावस्य विरोधोऽपनीयेत? "अपि च यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम्; समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग् ज्ञानेन बाधितत्वात्। तत्र कुत एव सृष्टिः? कुतो वा हिताकरणादयो दोषाः? अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रान्तिर्हिताकरणादिलक्षणः संसारो न तु परमार्थतोऽस्तीत्यसकृदवोचाम।" विचित्रविश्वरूपेण प्रतीयमानस्य ब्रह्मणो विषयेऽस्माभिः पुष्यमाणमन्यथाबोधमगणयित्वाऽप्यस्माकं चेतनारिक्तवस्तुतया सनातनस्य जगतः सत्तां स्वीकुर्वता शङ्करेण ब्रह्मत्वेनैव जगदिदं परिचिन्तितम्। मायात्वेन जगतो व्याख्यानावसरे नूनं ब्रह्मविषयकमन्यथाभानमेवाऽऽसीत् तस्य मनसि।

•

मायारूपेणैन्द्रजालिकदण्डेन समुद्भाव्यते ब्रह्मणा छायात्मकमिदं जगदित्यस्मादनाद्यनन्तान्मिथ्याज्ञानजन्यादसौकर्याद् अनेनापि

व्याख्यानेन नास्माकं निस्तारो जातः। शङ्करस्य वचनमिदमस्माकं सविधे दुर्भेद्यं विकल्पमेकं समुपस्थापयति। ऐन्द्रजालिकं ब्रह्म, तदनुष्ठितेनेन्द्रजालेन समुत्पादितं परिदृश्यमानमिदं जगच्चेति सनातनवस्तुद्वयस्य स्वीकारो जायत एवैतादृशाद् वचनात्। सत्यम् औदासीन्येनोत्पाद्यमानया मायया ब्रह्म न संस्पृश्यते, इन्द्रियग्राह्यं जगद् वर्जयित्वा ब्रह्मावाप्तिश्च जीवात्मसाध्यमेवेति, तथापि माया चेत् सनातनी तदा तस्या मिथ्यात्वप्रतिपादनं निरर्थकमेव।

परिदृश्यमानस्य जगतोऽनाद्यनन्तताया जीवात्मनो मुक्तेश्च पारस्परिकविरोधमपचिकीर्षुर्विद्यार्थी एतस्मादप्यधिकतरमसौकर्यं प्रत्यक्षीकरोति। पुरुषस्य ब्रह्माहमित्यन्तर्ज्ञानसापेक्षो बोधो मुक्तिरिति मुक्तेर्लक्षणनिर्वचनावसरे शङ्करेणैवोक्तम्। अन्तर्ज्ञानसापेक्षे जात एवास्मिन् बोधे प्रत्यक्षतां गतस्य जगतो मिथ्यात्वं प्रतीतिपथमायाति। एकस्यापि जनस्य यदि तदन्तर्ज्ञानं भवेत् तदा सर्वेष्वेव जनेषु तदस्माभिः सम्भावयितुं शक्यते। शुद्राणामेव केवलं तन्न भवति। सर्वेषामेव चेज्जनानां मुक्तिर्जायेत, तदाऽस्या अनाद्यनन्ताया मायायाः किं स्यात्? यतः सुकर्मणां फलेन शूद्रोऽपि कदाचिन्मुक्तिं प्राप्नुयादेव।

एतेषामसुगमार्थानां केषाञ्चिद् विषये न च नाऽऽसीच्चेतनः शङ्करः। एतेभ्यो दुर्ज्ञेयेभ्यो विषयेभ्योऽपसतुं स्वीकृतं तेनोन्नतानुन्नतभेदेन ज्ञानस्य द्वैविध्यम्। समुन्नतेन ज्ञानेन ब्रह्मणो बोधो जायते। अपेक्षिकत्वादनुन्नतं ज्ञानं न शुद्धम्, न, च पुनस्तेन शुद्धं ब्रह्म ज्ञातुं पार्यते, परं विश्वस्येश्वरस्य भानजनन एव तद् अलम्। यद्यप्येतन्मतमुल्लिखितस्यासौकर्यस्यापनयनेऽक्षमन्तथापि चिन्तायाः प्रायेणासीममेव क्षेत्रमनेन दीयते। अनुन्नताज् ज्ञानाद् अधिकमवाप्तुमनभिलाषो वैदान्तिको धर्मानुरागप्रदर्शनस्य विपुल एवावसरोऽवाप्यते। अनुन्नतज्ञानरूपरञ्जितकाचयोगेन दृष्टं ब्रह्म सगुणेश्वरवादिनाम् ईश्वर-

त्वेन विश्वदेवतावादिनां सर्वगतात्मरूपेण वा प्रतिभाति। स्याताम्
एवात्रोपयोगिनौ जनप्रियः कर्मवादो जन्मान्तरवादश्च। अनुन्नत-
ज्ञानाधिकारे स्थितयोरेतयोस्तत्रैव प्राधान्यं स्वीकृतं शङ्करेण। ब्रह्मणि
जगतः कारणत्वं नास्ति, यतस्तथा सति नरैरनुभूयमानेन परस्पर-
वैषम्यजनितेन क्लेशेन ब्रह्मणः पक्षपातित्व-स्वैरवृत्तता-न्यायविरोधि-
तादिदोषा भवेयुः, परं निर्गुणत्वेनैव ब्रह्म पूर्वं स्वीकृतमिति
स्वप्रतिकूलतयोत्थापितस्य पक्षस्य निरसनायैव शङ्करेणैतत् कृतम्।
न तथेत्यासीत्तस्योत्तरम्। सृष्ट्यवस्थाम् ईश्वरेण स्वेच्छयैव चेत्
समुत्पादितमिदं वैषम्यम्, तदा स दूषणीय एव। सुकृतं दुष्कृतञ्च
विचार्य सर्जनीयं हि तेनेदं विश्वम्। प्राणिनां स्वस्वाचरित-सुकृत-
दुष्कृतजन्यत्वात् सृष्टौ परिलक्ष्यमाणस्य वैषम्यस्य, न हि तत्कृते
गर्हणीयो विश्वकर्ता। मन्येऽसुबोधतमं खल्विदं वचनं शङ्करस्य।
परमं ब्रह्म केवलं शुद्धञ्चेत्यादिवाक्येन समारब्धं ब्रह्मवर्णनम्।
आपेक्षिकतयाऽसत्यस्य जगतः, आपेक्षिकतयाऽसत्यानां प्राणिनाम्,
आपेक्षिकतयाऽसत्येन पुण्यपापादिना परमं ब्रह्म बद्धमिति परस्पर-
विरुद्धान्येतानि खलु वाक्यानि। अपरञ्च, व्याक्षेपोऽयं न तूत्तरं
प्रश्नस्येत्यपि दोषोऽत्र प्रसह्यैव प्रसज्यते। सुकृत-दुष्कृते चेद्
वैषम्यस्य वीजम्, तयोः सुकृत-दुष्कृतयोः का तावद् योनिरिति
प्रश्नस्य तथाऽप्यवकाशो विद्यत एव। पश्चात् कीर्त्यमाने सूत्रेऽयं
तावत् प्रश्नः पूर्वमेव निरूपितः। "अतो विभागादूर्ध्वं कर्मापेक्ष
ईश्वरः प्रवर्त्ततां नाम, प्राग् विभागाद् वैचित्र्यनिमित्तस्य कर्मणोऽ-
भावात्तुल्यैवाऽऽद्या सृष्टिः प्राप्नोतीति चेत्, नैष दोषः? अनादि-
त्वात् संसारस्य।" अस्यैव सूत्रस्य व्याख्यानावसरे शङ्करेणैव
पुनरुक्तम्—"भवेदेष दोषो यद्यादिमान् संसारः स्यात्। अनादौ
तु संसारे वीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च
प्रवृत्तिर्न विरुध्यते।" सर्वेष्वेव प्रश्नेषु यो हि नाम प्रश्नः सनिर्बन्धं

नराणां चेतःसु विराजते, तस्यैव प्रश्नस्योत्तरमिदम् अति हि नाम निराशाजनन: ।

परिदृश्यमानस्य विश्वस्य केवलसत्यत्वाभावात् तस्माज्ज्ञातेन विषयेण ब्रह्म कथं बद्धं स्याद्—असौकर्यापनयनाय समालोचक-मुखमुद्रणाय चास्माभिरिदमेवोत्तरं परिकल्पयितुं शक्यते । अज्ञाना-वरणमध्यात् समीक्षितस्य ब्रह्मणस्तथात्वमेव प्रतीयत इति त्वेता-वतैवोक्तं स्यात् । तादृशं ब्रह्मैव विश्वकर्तृ । अनुन्नतज्ञानराज्ये नैतिक-भावराशिभिरनुभूयमानं प्राधान्यमेव विशेषेण परिलक्षणीयम् ।

न्यायदर्शनस्यैते तावद् विषयाः शङ्करभाष्यस्याऽऽयतनवृद्धावेव हेतवः । धर्मप्रवणानां हिन्दूनां मनसि वेदान्तेन यो हि नाम भावः स: तुपाद्यते, प्रतीच्यानां मनांसि उक्तादेव कारणात् तं भावं ग्रहीतुं नैव पारयन्ति । वैदान्तिकानां सविधे वेदान्तो हि धर्मो दर्शनञ्चेति विषये छिन्नसंशयोऽस्मि जातः । प्रतीच्यदेशजानां विस्मयोत्पादकं यद्धि नाम वेदान्तदर्शनमतं मयैतेषु पत्रेषु निवेशितम्, तेन तेषामन्यथा-बोधो मा भूदिति मया साम्प्रतिकानां भारतीयानां निर्माणे वेदान्त-दर्शनस्य धर्म्येण भावेन यत् साहाय्यं कृतम्, तदेव स्पष्टीकरिष्यते ।

---

# अष्टादशोल्लासः

## वेदान्तस्य तत्त्वम्

अर्वाचीना भारतीया वेदान्तदर्शनविषये कीदृशं भावं पुष्यन्तीति जिज्ञासुर्जनो भारतीयानां चित्तस्य वैशिष्ट्यद्वयमवश्यमेव जानीयात्। तत्र प्रथमतस्तावत् स्वप्रकाशशब्दात्मिकायां श्रुतौ विश्वासः। द्वितीयतस्तावत् कौतुकावहं किञ्चन विरुद्धभावपोषणसामर्थ्यम्। परस्परविरुद्धाभिः क्रियाभिश्चिन्ताभिश्च युक्ता अपि भारतीयास्ताभिरसंस्पृष्टत्वेनावस्थातुं बिभ्रत्येव शक्तिविशेषम्। भारतीयानां भाववैशिष्ट्यमिदं भारतशासकानां मनसि व्यामोहमेव कञ्चन सर्वथा समुत्पादयति। पश्चात् कीर्त्यमाने वाक्ये शङ्करेणैव हिन्दूनां वैशिष्ट्यभूतस्यास्य भावस्य लक्षणं कृतम्। "यदपि श्रवणव्यतिरेकेण मननं विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तम्, नानेन मिषेण शुष्कतर्कस्यात्राऽऽत्मलाभः सम्भवति। श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाऽऽश्रीयते।" ततश्च तेनैवोक्तम्—"वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति तज्जनितस्य ज्ञानस्य सम्यक्त्वम् अतीतानागतवर्तमानैः सर्वैरपि तार्किकैरपह्नोतुमशक्यम्।"

जनानां दैनन्दिनजीवितेषु प्रत्यक्षीकृतमेव मया तद् द्वितीयं वैशिष्ट्यम्। एतद्विषये मया बहुभिरेवाऽऽलापः कृतः। ते त्वेतस्यास्तित्वं स्वीकृत्यापि नैतस्य व्याख्याने सयत्ना अभवन्। वेदान्तस्य परस्परविरोधिवचनेन कदाचिदपि न व्याकुलीक्रियन्ते हिन्दव

इत्यहं केनचिद् भारतीयेन सुजनेन कथितः। ईशोपनिषदः समुद्धृतं तेन किञ्चिद् वाक्यम्—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

इति। तत् तु तेनैव वक्ष्यमाणरीत्या व्याख्यातम्। "दशभ्यो दशानां व्यवकलने कृते दशैवावतिष्ठत इत्येतादृक् किञ्चिद् वस्त्वपि-नाम पूर्वं भवता श्रुतम्? वेदान्तोऽस्मान् एतदेव शिक्षयति, वयञ्च एतस्मिन्नेव विश्वासवन्तः।" सत्स्वपि परस्परविरोधिवचनेष्वसौ-कर्येषु च वेदान्ते, चिन्ताशीलानां मानवानां चिरन्तनीं रीतिमाश्रित्य शिक्षितैर्हिन्दुभिरैहिकामुष्मिकरहस्यानि परिचिन्त्य परा शान्तिरवा-प्यते वेदान्तादेवेत्यत्र नास्ति मे संशयावकाशः।

न च सर्वे वैदान्तिका अद्वैतवादिनः। दूरे तावदास्तामेतत्, सन्ति खलु केचन जनाः, ये बादरायणसूत्राणां शङ्करप्रदर्शितरीत्या व्याख्यानं न सहन्ते। शङ्करस्य तुलनया टीकाकारो रामानुजो द्वितीयमेव स्थानमधिकुरुते। द्वादशशताब्द्यां जातो वैष्णवः स शङ्कर-प्रोक्ताद् द्वैतवादाद् अकठोरं विशिष्टाद्वैतवादाभिधं स्वमतं प्रचारया-म्बभूव। रामानुजटीकायाः पूर्वतनेऽपि काले विशिष्टाद्वैतवादि-सम्प्रदायस्य सत्ताऽस्माभिरुपलभ्यते। वङ्गेष्वर्वाचीन-टीकाकृतः श्रीबलदेवस्य मतमेव प्रबलतया विराजते। "नदीया"प्रदेशस्य विश्रुतस्य धर्मप्रचारकस्य श्रीचैतन्यस्य मतावलम्बिना परमवैष्णवेन तेन वृन्दावने श्रीकृष्णस्य भगवतोऽनुज्ञां प्राप्य "गोविन्दभाष्य"-समाख्यं निरमायि किञ्चन वेदान्तसूत्रभाष्यम्। वेदान्तसूत्राणां सगुणेश्वरवाद्यनुमोदितं किञ्चन व्याख्यानम एतेन भाष्येण प्रद-र्शितम्। सूत्रसाहित्यस्य स्वरूपमाश्रित्य यन्मया पूर्वमेवोक्तम् एतेषां व्याख्यानानां नानारूपत्वेनोत्पादितस्य विस्मयस्य तेनैव मन्ये निरसनं स्यात्। सूत्रेष्वेतेषु सार्वलौकिकधर्मस्य दर्शनस्य च मतानि

विनिश्चितानि वर्तन्त इति, न च कस्यचिद्धर्मविशेषस्य कृते, परं सार्वलौकिकप्रयोगायैव विरचितानि तानि सूत्राणि वादरायणेनेति च गोविन्दभाष्यानुवादकेन रायवाहादुर-श्रीशचन्द्रवसु-महोदयेन स्वं मतं प्रकाशितम्। वेदानां सार इत्यर्थे व्यवहृतोऽयं वेदान्त-शब्दः सुविततं धर्म्यं दार्शनिकचिन्ताविषयकञ्च क्षेत्रमधिकृत्यैव तिष्ठति। साम्प्रतिके काले यदि नाम कश्चन जनो वेदान्तस्य किञ्चन तत्त्वम् आविष्कर्तुमिच्छेत् तदा वेदान्तपदस्य व्यापकं तमर्थविशेष-मवलम्ब्यैव तेन तच्चिन्तनीयम्, न तु सम्प्रदायविशेषगतं व्याख्यानं तेन समाश्रयितव्यम्।

कस्यचिद् भारतीयस्य सुजनस्य तपोवनं मया वारद्वयमासा-दितमिति मे मनसि सुस्पष्टं विराजते। इंलण्डदेशीयानां भूस्वामिनां व्यक्तिगतेन धर्ममन्दिरेण तत् तुलयितुं शक्यते। समुन्नतेन प्राकारेण चतुष्पार्श्वस्थितभूमिवनादिभ्यः परिच्छिन्नं चतुष्कोणमासीत् तत्तपो-वनम्। रहस्यपूर्णेन भारतीयानामानन्दजनेन विश्वदेवतावादेन परिपूरितमिवाऽऽसीत् तस्य तपोवनस्य वातमण्डलम्। ज्ञाना-तीतोऽपि परमेश्वरोऽन्तरस्थ एवास्य तपोवनस्येति सहसैवात्र मनसि जायते। अत्युच्छ्रितस्य कस्यचित् पर्णबहुलस्य पादपस्य मूले ध्यानाय निर्मितासीत् काचन क्षुद्रा वेदिका। अतिप्रत्यूषे, कर्म-जगतः कोलाहले प्रकृतेर्ध्वनीनां निमज्जनात् पूर्वं तस्य तपोवन-स्याधिकारी सनातनस्य वेदान्तरहस्यस्य परिचिन्तनाय शान्तिपूर्णं तत् स्थानमभ्येति। तपोवनपरिसरस्थितस्य प्राकारस्योपरि उत्-कीर्णान्यासन् उपनिषदां वचनानि। उद्यानस्यैकस्मिन् प्रान्ते सरो-वरतीरे शुशुभिरे देवायतनानि। तेष्वेकस्मिन् देवायतने प्रतिष्ठितासीद् रम्या बुद्धस्य प्रतिमूर्तिः। बुद्धप्रचारितमते समादराधिक्यपोषणात् तन्मूर्तिस्तपोवनाधिकारिणः प्रियतमैव समजायत। अपरेषु देवा-यतनेषु सर्गस्थित्यन्तरहस्यस्य प्रतिरूपं योनिलिङ्गात्मकं शैवानां

दैवतम् आसीत् प्रतिष्ठितम्। "ओम्" इति रहस्यात्मकेनाक्षरेण समं श्वेतमर्मरोपलगतानि संस्कृतान्यक्षराणि सौवर्णेन वर्णकेन भूषितानि सन्ति चकासाञ्चक्रुः कृष्णप्रस्तरनिर्मिते द्वारदेशे। "ओमित्येतदक्षरमुद्गीथमुपासीत" इति हि छान्दोग्योपनिषदः प्रारम्भकं वाक्यम्। एतेनाक्षरेण भक्तानां मनसि यो यो भावो जायते, स स भावो "मोक्षमूलार" महोदयेन सविशेषं प्रकटीकृतः। तैत्तिरीयकोपनिषदः स भावोऽत्र समुद्ध्रियते—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेति।"

उल्लिखितस्य ब्रह्मणो लक्षणस्य व्याख्यानाय किञ्चिद्प्रस्तुतानुसन्धानमत्रानुमन्तव्यमेव पाठकमहाभागैः। तैत्तिरीयकोपनिषदो यस्मादनुवाकाद् अयमंशः समुद्धृतः, स हि खल्वंशो भविष्यद्विज्ञानस्य, नराणाम् उच्चकैश्चिन्ताया मार्गस्य वा प्रकृष्टनिदर्शनत्वेनाऽऽधुनिकैर्वैदान्तिकैरुपन्यस्यते।

"भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तं होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति।" चार्ल्स-भार्विन्-महोदयमतस्य फलत्वेन यो हि नामानात्मवादः साम्प्रतं प्रकाशतां गतः, स एव हि मतवादस्तैत्तिरीयकोपनिषदो वचनेन सूच्यते। भृगुस्त्वनेन सिद्धान्तेन नैव सन्तोषं लेभे। "स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्।" "प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादेर्दर्शनात्। एतेन जीवात्मवादः सूचितः। पुनरपि तपस्तप्त्वा

(पू)र्वमतमवधूय भृगुर्व्यजानाद् मनो ब्रह्मेति। "मनस्" शब्दोऽत्र "माइण्ड्" पदेन मयाऽनूदितः। सर्वेषामिन्द्रियाणां श्रेष्ठं हि मनः, यतः सर्वाणि ज्ञानानि तत्रैव सञ्चितानि भवन्ति तस्मादेव निर्गच्छन्ति च सर्व एव भावाः। न च मनो नराणामात्मा विचारणाशक्तिर्वा। अनुभवपरम्परा हीदं विश्वमिति खलु भृगोर्मतस्य निष्कर्षः। भृगोर्नयोऽयम् आध्यात्मिकवादस्य प्रकारविशेषः संवेदनमात्रवाद एव। परमत्रापि नाभूद् विरतो भृगुः। विषयाद्विषयान्तरं समधिगच्छता तेन मनसोऽपि महत्तरं किञ्चनाऽऽस्ते वस्त्वित्यबोधि। विज्ञानं तद्वस्तु। विज्ञानेनैव जगदिदं यथायथं चलति। वक्ष्यमाणं वचनं मन्ये भृगोश्चरमसिद्धान्तात्मकम्, "स तपोऽतप्यत। स तपस्तप्त्वा आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति।" कस्तावदस्याऽऽनन्दशब्दस्याऽऽशयः। स्पष्टतयाऽस्याऽऽनन्दपदस्य व्याख्यानं नैव सम्भवति, कालाकाशकार्यकारणभावातिरिक्तेन मानुषबुद्ध्या दुर्विज्ञेयेन रहस्येन तस्य संयोगसद्भावात्। भारतीय एवात्र ब्रवीतु। "उपनिषदो हि विशुद्धज्ञानात्मिका इत्यस्माभिः स्मरणीयमेवैतत्। प्रेमानुरागकर्मभुक्त्यादिमयस्य जगतो दृष्ट्याऽस्माभिर्नैव तस्याऽऽनन्दस्य व्याख्या कर्तव्या। पूर्णता समग्रता वाऽत्राऽऽनन्दपदेन व्यज्यते।···आनन्दाधिगमाच्चिन्ताजीवितरूपः सागरः पूर्णोऽगाधस्तटहीनः स्थिरः क्षुद्रतमेनापि तरङ्गभङ्गेण वर्जितश्च जायते। शुद्धं सच्च तद् ब्रह्मासत्येनासत्त्वेन वा कदाचिदपि न परामृश्यते। अज्ञानताया अविद्याया वा क्षीणाऽपि छाया नहि तस्मिञ्छुद्धज्ञानरूपे ब्रह्मणि जातुचिन्निपतति। वासनाजन्याऽस्थिरता मृतिर्वा पूर्णानन्दस्य तस्याऽऽनन्दं विहन्तुं कथमपि नालम्। सच्चिदानन्दस्वरूपं हि ब्रह्म। आनन्दशब्दस्याऽऽशयमधिकृत्यैतावदेव भ्रमः। परं नीरवताविनिवेदिताशयं तत्

एवं वृथैवास्माभिर्वाङ्मयेन प्रकाशयितुं यत्यत इति मे प्रतिभाति। उपनिषदामृषिरादर्शमवाप्तुं नैवाऽऽश्रितवान् आन्वीक्षिकीं चिन्ताम्। कठोरेण तपसा समुच्छ्रितर्तरश्चिन्तास्तरस्तेन श्रीयते। एवं क्रमेणोच्च-तमं स्थानं संप्राप्य बुध्यते तेन परमात्मनो रहस्यम्। परमात्मरहस्ये लब्धप्रवेशेन तेनाऽऽसाद्यते काचिद् गभीरा चिरन्तनी नीरवता। अनन्तालोकस्यान्धकारेण प्रतिहतं भवति तस्य चक्षुः। विस्मयेनाऽऽ-नन्देन च स विवशो भवति। दुरधिगमः खल्ववाङ्मनसगोचरः स परमेश्वर इत्येव केवलं स तदा ब्रवीति।

वेदान्तसूत्राणामक्षरार्थं विहाय तेषां तत्त्वं जिज्ञासुर्जनो वैदान्तिकै-र्धृतमर्थमेव गृह्णीयात्। यैस्तावन्महात्मभिर्जगतः समीपे समुपहृतानि तेषां चिन्ताप्रसूनानि, तेषु प्राच्य-प्रतीच्ययोः शिक्षा-संस्कृत्यो-राधारः स्वर्गतोऽध्यापको विनयेन्द्रनाथसेनः, भारतीय-त्यागिना-मादर्शभूतः परमभक्तः श्रीरामकृष्णपरमहंसः, "महत्तमं दुराराध्यञ्च तस्य मनः" इति यमधिकृत्य जीवितवृत्तकारेण लिखितम्, वङ्गानां कविशिरोमणिः स डक्टर्-रवीन्द्रनाथठाकुरश्चेत्येते त्रयस्तावज्जनाः प्रकारतोऽत्यर्थमेव विभिन्नाः।

## १

### अध्यापको विनयेन्द्रनाथसेनः

उग्रतपसां धीमतामृषीणां चरमोत्कर्षलाभसमये यत् तेषाम् आत्मनि समुदितमभूत्, तदेव श्रुतिरिति हिन्दूनां श्रुतिविषयकमनु-मानमभ्युपगम्यत एवाध्यापकेन सेनेन। ब्रह्मात्मकं हीदं जगदथवा परिदृश्यमानमिदं जगद् ब्रह्मण आकारविशेष एवेति शङ्करेण सम-मभ्युपगच्छता तेन वेदस्यैशोन्मेषत्वमपि स्वीक्रियत एव। नावाप्स्यत चेद् विश्वात्मना कालरूपे वापदण्डे [illegible]तोऽयं स्वकीयः

परिच्छदः, नाभविष्यच्चेद् पेशोन्मेषविशेषात्मकमिदं विश्वम्, तदा न्वजनिष्यत कदापि नराणां चेतसि ब्रह्मविषयिणीयं चिन्ता। क्लेश-संकुले कालुष्यपूर्णेऽस्मिन् जडजगद्रूपे कारागारे स्थितो नरस्तदा कथमपि नास्मरिष्यत् परमात्मानम्।

ब्रह्मैव परमं सत्यमिति शङ्करस्याद्वैतवादमभ्युपगत्य, ब्रह्मण आनन्त्यस्य केवलत्वस्य च स्वीकरणानन्तरं कथं तदतिरिक्तविषयस्य कल्पनं सम्भवतीति, कथं वा सच्चिदानन्दात्मकाद् ब्रह्मणः समुद्-गतमिदं विश्वं दुःखैः पापैश्च परामृश्यत इति च प्रश्नद्वयं तेन समा-लोचितम्। शङ्करस्य मायावादाल्लब्धं तेनास्य प्रश्नस्योत्तरम्। यया नाम शक्त्या अनन्तो मायावी कालाकाशरूपायां व्यूत्याम् अनन्तस्य केवलस्य च स्वस्य तत्त्वस्य वपनं कृतवान्, सैव तावन्मायेति। शङ्करप्रदर्शितं मायाया वैशिष्ट्यद्वयमेवाधिकृत्य व्याख्याता तेन माया। नाम्नाकारेण चाऽऽत्मप्रकाशनम् तयोर्वैशिष्ट्ययोरेकम्, सत्तयाऽसत्तया वाऽनिर्धारणीयत्वं तावद् द्वितीयम्।

एतयोर्वैशिष्ट्ययोः प्रथमेन समुत्पाद्यत एव किञ्चनासौकर्यम्। यन्नाम्नाकारेण वाऽस्माकमिन्द्रियग्रामस्य विषयीभूतं न भवति, वित-तेऽस्मिन् विश्वे तथाविधं किञ्चिदपि वस्त्वस्माभिर्नैव ज्ञातुं शक्यते। द्वितीयस्य वैशिष्ट्यस्य सुनिश्चितार्थ आपातदृष्ट्या न सुगमः। सत्तयाऽसत्तया वाऽनिर्धारणीयं किञ्चन वस्त्विति प्रोक्ते किं ताव-दस्माभिर्बुध्यते ?

उक्तञ्चाध्यापकेन सेनेन—सर्वेषामेव जागतिकज्ञानानामिदमेव तावद् वैशिष्ट्यं यत् तानि स्वसत्तायाः सत्यत्वप्रकाशने चेष्टमानानाम् अपि तस्मिन् कर्मण्यसमर्थानां वस्तूनां कल्पनाया अधिरोपणम् एव संश्रयन्त इति। अतः सत्यतरस्य वस्तुनो बोधेन समं प्रथमा कल्पना वर्जनीया। ततोऽपरस्याः कल्पनायाः सम्भावनायां जातायां प्रथमेव द्वितीयाऽपि वर्जनीया। एवं क्रमेणैकमधिरोपणमधिरोपणान्तराय

कल्पिष्यते, वस्तुनः सत्यसत्ताया लाभविरहात्। यदि प्रकाशतां गतानां वस्तूनां स्वरूपं बोद्धुम् अस्माभिर्यत्येत तदाऽस्य वाक्यस्याऽऽशयः सम्यक् स्फुटतां गाहेत। अपिनाम वस्तूनामाकृतिः संज्ञा वा स्थिरेति प्रश्नोऽस्माभिरेवात्र वयं प्रष्टव्याः।

यानि तावत् पार्थिवानि वस्तून्यस्माभिः परितः समवलोक्यन्ते, तानि तावदचेतनानि जडानि च; विद्यन्ते पुनस्तेषां यथोपयुक्तानि नामधेयानि। जडविज्ञानस्य केभ्यश्चिद् अर्वाचीनेभ्य आविष्कारेभ्यः पूर्वम्—इमा आकृतयः संज्ञाश्चास्तित्वगुणसम्पन्नाः—इति वचनम् न च नाऽऽसीन्नयाय्यम्। तथाहि—यैर्यैः पदार्थैः समभवंस्ते त आकृतिसंज्ञादयः सम्बद्धास्ते तु सत्या एव। घनाचेतन-जागतिकवस्तूनां सूक्ष्मतमोऽप्यंशोऽतिसूक्ष्मं किञ्चन विश्वमिव प्रबलेन वेगेन भ्रमति। एतस्मादाविष्कारादाधुनिकानां वैज्ञानिकलेखकानां पुस्तकविरचनस्यावसरो जातः। आलबार्ट्-आइन्ष्टिन्-महोदयप्रवर्तितस्य पदार्थविज्ञानस्य मनोहारि-व्याख्यानावसरे वक्ष्यमाणो विषयो डक्टर्-सि-नईमानेन व्याख्यातः। तद् यथा—"जगत्यस्मिन् नास्ति कश्चित् पदार्थः। केवला वैद्युतिकी काचन शक्तिरेवात्र विद्यते। नरैरनादिकालं यावज्जडवस्तुत्वेन गृहीतस्य विषयस्य तथात्वबोधजननरूपा भ्रमात्मिका बुद्धिः पारिपार्श्विकावस्थायाः प्रतिक्रियया प्रभावितया तयैव शक्त्या समुत्पाद्यते।" अस्याभिनवज्ञानस्य विषये तेन या नाम टिप्पनी कृता, सा तु हृदयग्राहिण्येव। "चित्रम् आधुनिकेन पदार्थविज्ञानेन अद्भुत आध्यात्मिको वा भाव एव साम्प्रतं श्रीयते।" यानि तावद् जागतिकानि वस्तूनि सत्यतयैवास्माभिर्विज्ञातान्यासन् तान्येव साम्प्रतिककाललब्धज्ञानदृष्ट्या मिथ्यात्वेनैव प्रतीतानि स्युः। आपेक्षिकं सत्यमेव परमसत्यत्वेनास्माभिर्गृह्यत इति परमं सत्यं कालाकाशातिरिक्तम् इति चोल्लिखितं विषयं चिन्तयद्भिरेवास्माभिरनुभूयते।

इंलगडदेशे स्थित्वा नभोमगडले नक्षत्राणि विलोकयतो मे प्रतिभाति, ऊर्द्ध्व एव मे दृष्टिर्निबद्धेति। तस्मिन्नेव समये मद्दृष्ट्याश्रितदिग्विभाग एव दृष्टिं निक्षिपन् निउजिलागड्देशे स्थितो जन आत्मानमधोमुखत्वेनावस्थितं मन्यते। कस्तावदावयोरभ्रान्तः? अहं निउजिलागड्देशीयो वा? मद्विषये "ऊर्द्ध्वमुखोऽयम्" इति पदं सत्यम्, निउजिलागड्देशीयस्य विषये तु तद् विपरीतमेव। अस्माकमनुभूतेः शीतमुष्णमित्यादि नामास्माभिः परिकल्प्यते, अप्यस्त्येतेषां नाम्नां यथार्थं सत्यत्वम्। उष्णताऽभाव एव किं न शैत्यम्? कुत्र वैतयोः परस्परविभेदिनी रेखा? किं शक्यतेऽस्माभिस्तापमानयन्त्रे निवेशयितुं तापस्यास्तित्वानस्तित्वज्ञापकं किञ्चन चिह्नम्? एतद्विषये मेरुप्रदेशवासिनः किमुष्णमगडलवासिभिरैकमत्यं वहेयुः?

न केवलमेतेन मतेन पदार्थस्य स्वरूपविषयेऽस्माभिर्धृतपूर्वस्य ज्ञानस्य विपर्यासः साधितः, परं यदद्यापि परमसत्यतयाऽस्माभिर्गृह्यते, तस्यापि परिवर्तोऽनेन प्रकल्पितः। अचलमचलं मत्वा यमेवास्माभिर्गृहमूलत्वेन समासाद्य विनिर्मितो विशालः सौधः, स साम्प्रतं प्रसरणशीलं वालुकाकणत्वं श्रयति। द्रष्टुर्ज्ञानस्य दृष्टपदार्थानाञ्च यद्धि नाम निरूपितं स्वरूपमध्यापकेन आइन्ष्टिन्-महोदयेन, तेन निउटनप्रवर्तित-माध्याकर्षणनियम—इउक्लिड्विरचित-ज्यामितिनियमादिरूपाण्यद्य यावद् विज्ञानजगति परमसत्यतया गृहीतान्यपि मतानि साम्प्रतम् आपेक्षिकसत्यतया विशिष्टैरेव वैज्ञानिकैरङ्गीक्रियन्ते। जडवस्तूनां विषये सानुगेन आइन्ष्टिन्महोदयेन यद्धि मतं प्रचारितम्, तत् तु भारतीयानामृषीणामाध्यात्मिकमतैरत्यर्थमेव सादृश्यं समुद्वहति।

वैज्ञानिकं जगद् विहाय साम्प्रतं नैतिकं जगद् विशामः। तत्र किमस्माभिः सदसद्विषयाणां मध्ये परस्परविभेदद्योतिनी शक्यतेऽङ्कितुं काचिद् रेखा। अभ्रान्तेन निर्णयेनोपलक्षितेन विवेकेन तत्

कर्तुं पार्यते। "कस्य स विवेकः" इति तु प्रष्टव्यमवाद। पत्नी-द्वयस्य युगपत् पाणिपीडनं न सहते खृष्टधर्मावलम्बिनां विवेकः। महम्मदस्य भक्तानामनुगानामपि विवेकः किं तादृश एव? विप्रतिपत्तिस्त्वत्राऽऽस्त एव। सामाजिकी रीतिरियं न तु नैतिकी रीतिः। गुणदोषयोः किं तावत् तदा स्याल्लिङ्गम्? अपिनामापरस्य प्राण-घातनं कश्चिद् गुणविशेषः? अपरप्राणघातनं नैव निन्द्यते मानव-समाजैः, सुसभ्यानामपि जातीनां नीतिशास्त्रेऽपराधिनां प्राणदण्ड-विधिदर्शनात्। यदि मूलतो नरघातनं न दोषाय कल्पते, तदाऽवस्था-विशेषेषु तदनुष्ठान एव विद्यते मतभेद इति वक्तुं शक्यते। वङ्गीय-वैप्लविकदलस्य केचन जना राजपुरुषाणाम् उपांशुहननं कृत्वाऽपि कथमात्मनो दोषैरपरामृष्टान् मत्वा मे विस्मयमुदपादयन्, तत् तु मया पूर्वमेव विलिखितम्। राजनीतिकहत्यासु नास्ति दोष इति मतं मानवजातेर्बहुलेनैव भागेन साम्प्रतमनुमन्यते। अर्वाचीने काले राशियादेशे आयर्लण्डदेशेऽन्येष्वपि च देशेषु दृष्टमेवास्माभिरस्य शोचनीयः परिणामः। एतस्मादेतदेवाऽऽयाति, नास्ति खल्वस्मिन् जगति कश्चिद् गुणदोषनियामकः सार्वलौकिको विधिर्येनायं गुणोऽयं दोष इति सनिश्चयं वक्तुं शक्यम्। "कालाकाशनियन्त्रितं मायामयं खल्विदं जगद्" इति मायावादप्रोक्तं मतमेतद्दृष्ट्या सरलतयैव प्रतिभाति। वर्ण्यत एतेन कश्चिदवस्थाविशेषो यत्रा-विद्यैव प्रभवति; स्वीकरोति च पुनरेतेनैव ज्ञानस्य स्फूर्तिवादः। एवं रीत्या वयमेतद् वर्णयामः। अविद्याया आवरणेन सत्यस्य स्वरूपमस्माकं सविधेऽविज्ञातं तिष्ठति। स्फूर्त्या शनैः शनैरप-सार्यमाणे तस्मिन्नावरणे स्पष्टात् स्पष्टतरं भवति तत् सत्यस्य स्वरूपम्। अभ्युपगम्यते चेदस्माभिरिदं मतम्, तदा शुद्धब्रह्म साकारेश्वरश्चान्तरा स्थितो वैदान्तिकैर्यो हि नाम भेदः प्रदर्शित-स्तस्य विचारचारुताऽनायासेनैव सुगमा स्यात्। मानवजातेरवि-

नीतावस्थातः समारभ्याद्य यावदधिगतायाः सभ्यताया अवस्था-विशेषान् विशेषयन्त ईश्वरविषयकाः परिवर्तमाना बोधा एतेनैव बौधगम्या भवन्ति।

अध्यापकेन विनयेन्द्रनाथसेनेन वेदान्तोक्ताया मायाया अयमेव तावन्मन्ये गृहीत आशयः। कथं सच्चिदानन्दाद् ब्रह्मणः पापक्लेशादिसंकुलं जगदिदं प्रवर्तत इति द्वितीयस्य मयोल्लिखितस्य प्रश्नस्याप्युत्तरम् एतया व्याख्ययैव सम्पाद्यते। यदि दुःखं केवलं दुःखम्, सुखं केवलं सुखमेव जायेयाताम्, तदैव खलु सुखदुःखयोरसमानतया विभजनाद् ईश्वरं पक्षपातित्वदोषः श्रयेत। परं दुःखस्य मूले प्रच्छन्नरूपेणावतिष्ठेत चेदानन्दस्योत्सः, सुखमपि चेद्दारुणं दुःखमूलं स्यात्, घोरतमेऽपि पापे विद्येत यदि नाम न्याय्यतायाः सम्भावना, तदा कथमीश्वरस्य पक्षपातित्वं प्रतिपादयितुं शक्येत। उन्नतं वाऽवनतं वा क्षुद्रं वा महद्वा सर्वमेव वस्त्वनन्तस्य सान्तं प्रतिविम्बम्।

किं तावदत्र तेन वक्तुमिष्यते? मायायाः स्वरूपेणासङ्गतं शङ्करप्रोक्तं जीवात्ममुक्तिवादं प्रत्याचक्षाणेन तेन, जगदिदं सर्वथैव मिथ्येति स्वीकारे शङ्करस्यानन्यशरणत्वमेव हेतुरिति प्रत्यपादि। जीवात्ममुक्तिवादातिरिक्तेषु सर्वेष्वेव विषयेष्वयं तावद्भावस्तत्प्रचारितमतस्य विरुद्ध एव। नैव शक्यन्तेऽस्माभिर्विज्ञातुं तस्याऽऽशाः श्रद्धा वा, परं तासां विषये तेन याः सूचनाः कृतास्ताभिः शनैः शनैः परमस्य सत्यस्य समवाप्तेराशैव सूच्यते। पेशज्ञानावाप्त्याः क्रमोन्नत्या समं दुःखक्लेशाद्याकारेण स्थिता विषयाः क्रमेण स्वरूपतां प्राप्नुवन्ति, चरमे च सर्वे ते ऋषिजनमात्रानुभूतानन्तसङ्गजनितानन्दात्मना परमेश्वरेण संमिलन्ते।

वेदान्तस्त्वासीत् तस्य सविधे चिन्ताराज्ये मनसो निर्विशङ्कविलासादधिकः, सूक्ष्मतमे आध्यात्मिके जगति बुद्धेर्निर्भीकप्रचारा-

द्‌तिरिक्तः, समुज्ज्वलयुक्तिवादातिशायी, धर्मस्य सारभूतः, महत्तत्त्वावाप्तये आत्मनो यस्याऽऽग्रहस्य निराकरणं बुद्ध्या नैव सम्भवति तस्याऽऽग्रहस्य परिपूरणे समर्थो विषयविशेष इति त्वसम्पूर्णरूपेणाधिगत्यापि तस्योच्चाशाः श्रद्धाश्रृकेनासन्दिग्धं शक्यत एव वक्तुम्। युक्तिवादे गौरवं समुद्वहतोऽपि तस्य तस्मादधिकतरे श्रद्धास्पदे विषय एव समादराधिक्यमवर्तत। अभाणि च तेन "भक्ति-विस्मयौ बुद्धेरादर्शाविति यदुपनिषद्भिरुपदिश्यते, तत् तु सत्यतयैवाहं मन्त्रये" इति। न च ज्ञानस्य व्ययेन तद्विरोधितया वा भक्ति-विस्मयौ तस्याऽऽस्तामभीष्टौ, परं विज्ञानमेव विश्वस्येश्वर इत्यादिबोधरूपं चरमोत्कर्षं भजमानेऽपि ज्ञाने किञ्चिद् रहस्यमवतिष्ठतैव। तस्य रहस्यस्यान्तर्विलोकयन्ती बुद्धिरपि तत्रैव निरता भवेत्। न च तर्कात्मकम्, परमन्तर्ज्ञानोपलम्भो हि बुद्धेः श्रेष्ठं कार्यम्। तर्कसाध्यं वस्तु व्याकर्तुं ज्ञातुञ्चास्माभिः शक्यते, परमनन्तस्य ज्ञानविषये सङ्गातिरिक्तो नास्त्यपरो मार्गः। न च प्राचीना ऋषय आध्यात्मिकप्रणिधानमधिकृत्य वक्तुं वितर्कयितुं वा क्षमा आसन् इति ते पूज्यन्ते, परं पवित्रेण हृदयेन भक्तिपूर्णेनाऽऽत्मना चावाङ्मनसगोचरस्य सङ्गं प्राप्य ते परमानन्दं समन्वभवन्निति।

---

# ऊनविंशोल्लासः

## वेदान्तस्य तत्त्वम् ( धारावाहिकम् )

## २

### रामकृष्णपरमहंसः

हुग्लीनद्यास्तीरमाश्रित्य कलिकातात उत्तराभिमुखं गच्छता जनेन नद्यास्तीरे समवलोक्यन्त एकमेवाऽऽदर्शमाश्रित्य निर्मितानि विस्मयोद्दीपकानि देवायतनानि। शोभते तत्र नराणां स्नानसौकर्याय नदीजलं यावद् गता विस्तृता सोपानपंक्तिः। धूसरप्रस्तरनिर्मिताया अस्या देवायतनश्रेण्याः स्थापत्येऽद्यापि दृश्यमानं वङ्गीयकुटीराणा-मानतपटलत्वं सुव्यक्तमेव विराजते। तीर्थस्य मूर्धन्यवस्थिते समुन्नते प्रघणे एकपंक्तिगतेषु द्वादशसंख्याकेषु तेषु वर्तन्ते समाकाराः कृष्णप्रस्तरनिर्मिताः सृष्टिव्यञ्जनक्षमा योनिलिङ्गात्मिकाः शिवस्य प्रतिमूर्तयः। तेषां देवायतनानां पृष्ठतः स्थितस्य चत्वरस्य मध्ये भागे चकास्ति काल्यधिष्ठितं प्रधानं मन्दिरम्। विस्मापकं खलु मन्दिरस्याऽऽयतनम्। न च न वर्ततेऽस्मिन् विचित्राभिश्चूडाभि-र्विभूषिते मन्दिरे कुटीराणामानतपटलत्वम्।

कलिकातातः कतिपयक्रोशार्धदूरे विराजमानम्, मन्दिरोद्यान-स्थितैर्दूरादपि दर्शनीयैः समुच्छ्रितैः पिचुलपादपैरुपलक्षितं दक्षिणे-श्वरमन्दिरं पोतयोगेन नदीवक्षसि प्लवमानेन जनेनानायासेनैव विज्ञायते। पञ्चपञ्चाशदधिकाष्टादशशततमखृष्टाब्दे धर्मपरायणया "राणीरासमणि" समाख्यया कयाचिद् वङ्गदेशीयया कुलाङ्गनया

प्रतिष्ठापितमिदं मन्दिरम्। अत्रैव च मन्दिरे दक्षिणेश्वरस्य सन्न्यासी स्वजीवितस्य बहुलं भागम् अनैषीत्। इतिहासे श्रीराम-कृष्णपरमहंस इति नाम्ना प्रथितो गदाधरचट्टोपाध्यायः स्वामि-विवेकानन्दनाम्ना परिचितस्तच्छिष्यो नरेन्द्रनाथदत्तश्च वङ्गीयानां मनसि यथा प्रभावं वितेनतुः, अर्वाचीने काले न केनापि पारितं तथाऽ-नुष्ठातुम्। पाश्चात्यभावानां पाश्चात्यरीतीनाञ्च कृते समुत्सुकताया-श्चरमपरिणत्या समुपलक्षिते कालविशेषे प्राचीनानां प्राच्यादर्शानां संरक्षणाय, अहंमन्यताया युगे त्यागमन्त्रप्रचाराय, वैज्ञानिकैराविष्कारैर्जटिलीकृते काले सरलताशिक्षणाय चाजायेतामेतौ खलु जनौ।

जानुयारीमासस्य कस्मिंश्चिद् दिवसे सूर्यालोकोद्भासिते मन्दिरो-द्याने ते मह्यं स्वर्गतस्य महात्मनः संस्पर्शपूतानि नानाविधानि द्रव्याणि दर्शयामासुः। चत्वरस्य वायव्यां दिशि समवस्थिते कस्मिंश्चित् कक्षे व्ययितस्तेन जीवितस्य बहुलो भागः। उद्यानस्यो-त्तरे भागे रामकृष्णस्येच्छया रोपिता वट-निम्ब-बिल्व-पिप्पलामलकी-समाख्याः पञ्च पादपा मे दृष्टिं समाचकृषुः। अत्रानैषीत् सन्न्यासी ध्यानेन धर्म्यक्रियाभिश्चानल्पः कालः। चत्वरस्य मध्यभागे विल-सतोर्मन्दिरयोरेकमध्यासितमासीद् दिव्यप्रेमावताराभ्यां राधाकृष्णा-भ्याम्, परञ्च विश्वजनन्या काल्या। अनन्तस्य परमेश्वरस्य रूपद्वय-मेतद् रामकृष्णस्यासीत् हि नामाऽऽसीत् प्रियम्।

गुरोरुपदेशजालं तज्जीवितवृत्तञ्च विवक्षुभिस्तदीयैर्भारतीयैः शिष्यैः परिगतो मन्दिरप्रान्ते स्थितोऽहं तेषां समुत्साहदर्शनेन प्रीतिविशेषमेवान्वभवम्। तैरुदीरितानि वृत्तानि शृण्वतो मे मनसि स्वत इव विरेज आत्मसमर्पणेन भक्त्या च मुक्तिरवाप्यत इति मतव्याख्याननिरतस्य शिष्यपरिवृतस्य तस्य गुरोश्चित्रम्। प्रत्यक्ष-मिव बभासे तदानीं मत्सविधे तद् दृश्यम्। तत्कालेऽनायासेनैव सर्वं चिन्तितुमक्षमासं क्षमः। तत्रैकेन वर्णितम्—"सुशीतले

सन्ध्याकाले अलिन्दे इतस्ततः परिभ्रमन् प्रशान्तमूर्तिर्गुरुर्मुहुर्मुहुः शिष्यैः संलापाय विरेमे। अवतरति चत्वरस्थलं सन्ध्यान्धकारे मन्दिरेषु प्रज्वलितानां दीपानाम् आलोकैर्भृत्यैर्दीयमानैर्धूपगन्धैश्च तद् व्याप्यत। सन्ध्यारात्रिकस्य कांस्यघण्टाझल्लकादीनां निनादो भित्त्वा नीरवतां पवित्राया नद्याः कलकलध्वनिभिर्दूरमेव प्राधावत्। आविर्भवति च ततो नभोमण्डले भगवति चन्द्रमसि सन्ध्यान्धकारमुक्तं सदेवायतनं तदुद्यानं नक्षत्राकीर्णे गगनतले रमणीयं विरेजे। विलसति तादृशे प्राकृतिकावस्थाविशेषे उपास्यः स सन्न्यासी विश्वजनन्याः पुरतः स्थितः "ब्रह्मन् आत्मन् भगवन्, शरणागतोऽहं शरणागतोऽहम्; ब्रह्मैव शक्तिः शक्तिरेव ब्रह्म" इति स्वजीवितपरिचालकं मन्त्रं सुस्वरं जगौ। ततः क्रमेण समवेतानां शुभ्रवसनोत्तरीयधारिणामेकायनानां वङ्गीयतरुणशिष्याणां मध्ये सन्निषण्णो गुरुस्तैः समं धर्मालोचनं चक्रे।

*  *  *  *

चतुस्त्रिंशदधिकाष्टादशशततमे खृष्टाब्दे फेब्रुयारीमासस्य विंशेऽहनि जातः, आ बाल्याद् धर्म्यजीवितैकशरणो गदाधरचट्टोपाध्यायः पञ्चपञ्चाशदधिकाष्टादशशततमे खृष्टाब्दे प्रतिष्ठितस्य दक्षिणेश्वरमन्दिरस्य प्रतिष्ठापनदिनादेव सहकारिपुरोहितपदं तत्र लेभे। पाण्डित्यगुणानलंकृतस्यापि तस्य केशवचन्द्रसेन—पण्डित-ईश्वरचन्द्रविद्यासागर—वङ्किमचन्द्रचट्टोपाध्याय—प्रतापचन्द्रमजुमदारप्रमुखाणां विशिष्टानां शिष्टानां नेतॄणाञ्च समाकर्षणे आसीदेव महत् सामर्थ्यम्। केशवचन्द्रसेनस्यैकनिष्ठो भक्तश्चरमोक्तो जनः शिक्षितानामपि जनानामुपरि रामकृष्णस्य प्रभावविस्तारनैपुण्यं समवलोक्य विस्मितो व्यामूढश्च जातः। "अप्य त्वावयोर्मध्ये किमपि सादृश्यम्" इति तेन पृष्टम्। "काहं युरोपीयभावापन्नः शिष्टः स्वार्थपरोऽर्धाविश्वासी तथाकथितः शिक्षितो युक्तिवादी, क चासौ

दरिद्रोऽशिक्षितोऽशिष्टोऽर्धपौत्तलिको बन्धुहीनो भक्तो हिन्दुः ? येन मया डिसरेली-फसेट्-ष्टान्लि-मोत्तमूलारप्रमुखाणां युरोपीय-विदुषां समाकर्णिता कथा, तेन मया कथं नामानेन सह संलापं कुर्वता सुदीर्घः कालो नेतव्यः ?...न केवलं मया परं मत्सदृशै-र्बहुभिरेव तत् समनुष्ठीयते।" यथार्ह-विचारणानन्तरं सिद्धान्तितं तेन "तस्य धर्म एव तत्र कारणम्" इति। परं तस्य धर्म एव तावच्चित्तविभ्रान्तिकरः कश्चिद् विषयः। "वृद्धो वैदान्तिको-ऽपि पूजयति स शिवं कालीं रामं कृष्णञ्च।......पौत्तलिकोऽपि स निराकारस्यानन्तस्य भगवतो ध्याने मग्नः।......हर्षोन्मादस्तस्य धर्मः, सर्वातिशायि ज्ञानं तस्य पूजनम्, अपूर्वयोर्भाव-श्रद्धयोः पावकेन रात्रिन्दिवं पच्यमानासीत्तस्य समग्रा प्रकृतिः।"

प्रायेण वर्षमेकं मन्दिरेऽवस्थित-"तोतापुरी"सकाशाद् अधीतं तेन वेदान्तशास्त्रम्। भक्तिमार्गेण न पुनर्ज्ञानमार्गेण चेष्टितं तेन विश्वस्य रहस्यं समुद्घाटयितुम्। प्रकृत्या स चाऽऽसीद् गहनो न तु दार्शनिकः। तस्य धर्ममतं जीवितवृत्तञ्च स्मारयतोऽस्मान् प्रेममयं चैतन्यम्। नदीयाप्रदेशस्य साधुरिव सोऽपि नृत्यगीतादिभिर्भावं प्रकाशयाम्बभूव। तत्प्रियशिष्यैर्गीतानि देवतास्तोत्राणि शृण्वत-स्तस्य नेत्रयोरानन्दजं सलिलं प्रावहदसकृच्च स मुमोह। बाल्यात् प्रभृत्येवेयं मूर्च्छा तस्याऽऽसीत् सहचरी। एकादशे वर्षे जातस्तस्या-ऽऽद्यो मोहः। क्षेत्रमतिक्रमन् स दृष्ट्वा काञ्चिद् दिव्यां मायां नष्ट-चेतनोऽभूदिति तेनैव वर्णितम्। सहजोपलब्धमासीत् तस्य भगवज्ज्ञानम् अतस्तस्य नैव समजन्यध्ययनस्य प्रयोजनम्। कदाचित् तच्छिष्यसम्प्रदायमध्ये वेदपठनविषये आलोचना संजाता। तदानीं तेनोक्तम्—"अपि ज्ञायते युष्माभिः किं मयाऽत्र विषये चिन्त्यत इति ? वेदा ब्रह्मैव प्रतिपादयन्ति। ब्रह्मावाप्तेर्मार्गे निर्धारिते जाते किं तेषां पठनेन ?" सन्न्यासिनस्तस्य क्रमप्रचीयमानं यशः श्रुत्वा

पाण्डित्याभिमानी तात्कालिकानां शिक्षितमध्यवित्तजनानामादर्शभूतः कश्चन तरुणः कदाचित् तमभ्यगात्। अपण्डितस्य तस्य सन्न्यासिनो नाऽऽसीत् प्रयोजनं पुस्तकैरिति श्रुत्वा स समधिकं विस्मयमेवोद्वहत्, प्रतिमापूजनमधिकृत्य तेन समं समालोचितवांश्च। रामकृष्णेन खण्डितास्तस्य सर्वा एव पण्डितोचिता युक्तयः। "त्वत्तो महतस्त्वयाऽनासादनीयस्य च विषयस्य कृते कथं त्वयात्मा क्लिश्यते?—इत्यसावपृच्छत्। किं न निवसति विश्वेश्वरो मानवदेहमन्दिरे? किं न हि स जानाति नराणां मनोगतं भावम्। अत ईश्वरं ज्ञातुं मानयितुञ्च यतस्व। ईश्वरानुरागी भव। एतदेव ते प्रथमं कर्म।"

आपातविरुद्धान् विषयान् नैव स गणयाञ्चक्रे। शुद्धं केवलं पूर्णं ब्रह्म दार्शनिकानामीश्वरः। परं नह्येतेन दिव्यप्रेममयकृष्णरूपेण विश्वजननीविश्वधात्रीकालीस्वरूपेणेतरैर्वा विभिन्नै रूपैस्तस्याऽऽत्मप्रकाशनं व्याहतं भवति। ईश्वरज्ञाने जात एतादृशानां विषयाणां व्यामोहकत्वमपि विरमति। "महाभाग, किं द्रष्टुं शक्यः स ईश्वर?"—इत्यपृच्छत् स पण्डितः। "निश्चितमेवे"त्यभूदुत्तरम्। "आन्तरिकेणाऽऽग्रहेण तम् आक्रन्द, नूनं तं द्रक्ष्यसि।" हिन्दुभिः "समाधि"पदेन ज्ञायमानमीश्वरज्ञानजनितसम्मोहावस्थाविशेषं मुहुर्मुहुरेव स प्राप्तवान् इति तच्छिष्याणां वचनाद् एवास्माभिर्विज्ञायते। इमं समाधिविषयमवलम्ब्यैवाध्यापकेन वि-एन्सेनेनोक्तम्—"अनन्तसंयोगाद् ऋषयो वाक्ययुक्ताद्यविषयीभूतं ब्रह्मानन्दं भेजिरे" इति तु मया प्रागेवाभिहितम्।

भारतीयचिन्तानुगुणोऽयं विश्वदेवतावादस्तस्य सहजोपलब्ध इवाऽऽसीत्। बाल्ये देवपूजार्थं प्रत्यहं स कुसुमावचयमकरोत्। एकदा बिल्वपत्रसञ्चयनसमये तद्वृक्षस्य त्वचः कश्चिदंशविशेषस्तेनानवधानतया छिन्नः। स्वान्तर्गतस्यैव सर्वान्तर्गतस्य पर-

मात्मनः क्लेशो मया समुत्पादित इति स तदा दुःखितोऽभवत्। ईश्वरस्य सर्वगतत्वभावस्तस्य मनसि तथासीद् गाढं निखातो, यथा स तद्दिनात् प्रभृति नैव कदापि वृक्षान् पत्राण्यचैषीत्। मानवबुद्धयोपस्थापितान्यसौकर्याणि तेन दूरीकृतानि। युक्त्या निरूपयितुमयोग्या विषयाः श्रद्धयैव तेन व्याख्याताः। अतो विशुद्धतर्कशास्त्रदृष्ट्या तत्कृतानि व्याख्यानानि कदाचिदप्रत्ययजनकान्यासन्। ईश्वरस्याभिव्यञ्जकानि चेत् सर्वाण्येव वस्तूनि, तदा कथं तेषु कानिचित् क्षतिकारकाणीत्येवात्र विचारणीयो विषयः। कस्यचिदापततो हस्तिनो मार्गं त्यक्तुमादिष्टस्यापि तत्रैव स्थितस्य तरुणभक्तजनस्य कथा, विषयमिममधिकृत्य तेनावतारिता। आधोरणेनोच्चैरुत्क्रोशः कृतः, परं हस्त्यपीश्वरस्य प्रकाशविशेष इति मनसि विचिन्त्याविचलितो युवा हस्तिनं तमस्तौषीत्। समुद्धृतो लब्धसंज्ञश्च स स्वस्यापलायनकारणं व्याख्यातवान् गुरुणा वक्ष्यमाणैरक्षरैस्तिरस्कृतश्च। "सत्यं सर्वेष्वेव विषयेष्वीश्वर आत्मानं प्रकाशयति। अतो हस्तिनि स्थित ईश्वरः किं नाऽऽसीदाधोरणेऽपि ? तत् कथं त्वयाधोरणस्य वचसि मनो न दत्तम् ?"

अगभीरयैव विचारणया प्रत्यादिष्टस्तेन परमेश्वरस्य पक्षपातित्वविषयकः प्रश्नः। "अपि नामासामान्यगुणैरुपलक्षिताः सन्तो वयं भुवनतले जायामह इति मया विश्वसनीयमेवे"त्यपृच्छत् पण्डितो विद्यासागरः। "किं केषुचिदेव जनेषु सपक्षपातः परमेश्वरः ?" "परमेश्वरस्य कर्माणि मानव-बुद्ध्या दुरवगाहान्येवेति त्वया याथातथ्येनैव ग्रहणीयं जागतिकं वृत्तमिति"—गुरो रामकृष्णस्याभूदुत्तरम्।

यथाक्रमेणेशप्रेरणायां युक्तिवादे च तेन यद्धि नाम गौरवं दत्तम्, तत् तु कस्मिंश्चिदपराह्णे मन्दिरसंलग्ने भूमिभागे बहूनां शिष्याणां पुरतः सञ्जातेनैव वृत्तेन स्पष्टीभवति। प्रतीच्यशिक्षाशिक्षितं कश्चित्

स्वानुगं सोऽपृच्छत्—"अप्यस्त्याङ्गलभाषायां युक्तिवादात्मकः कश्चन ग्रन्थः" इति ? बहव एवैतद्विषयका निबन्धा वर्तन्त आङ्गलभाषायामिति स स्वानुगेनाभूद् विज्ञापितः। निदर्शन-प्रदर्शनाय समुद्धृतस्तेन सामान्यसिद्धान्तेभ्यो विशेषसिद्धान्तसमु-न्नयनात्मकस्तर्कशास्त्रस्यांशविशेषः। एतेषु व्याख्यानेषु नैव दत्त-स्तेनाभिनिवेशविशेष इति कृत्वा अरण्येरुदितानीव तान्यभवन्। क्षणं तस्मिन् विनिहितदृष्टिः स तस्य भावी गुरुर्विस्मितो नीरवश्च बभूव। तद्वचनमाश्रित्यैव तस्य दृश्यस्य वर्णनं मयाऽत्र विनि-वेश्यते। "स्थाणुरिवाचलं स्थितो गुरुः। न परस्पन्दे तदीयं नयन-युगलम्। क्लेशानुमेयमासीत् तदा तस्मिन् उच्छ्वसितम्।...... ओष्ठलग्नेन हास्येन द्योतितस्तदा भगवतो दर्शनजन्यः परमानन्दा-धिगमः। स्वप्रभाऽवधीरितकोटीचन्द्रस्याप्रतिरूपरूपस्य कस्यचिद् वस्तुनो नूनं स तदाऽन्वभवद् दर्शनसुखम्। अपिनामैतत् तस्य भगवद्दर्शनम् ? तथा सति अपूर्वा हि तस्य श्रद्धाया भक्तेः संयमस्य तपसश्च प्रगाढता, यया मरणशीलस्य मानुषस्यापि तस्य प्रत्यक्षतां नीतः परमेश्वरः।" चित्ते निवेश्य समाधेरिदमद्भुतं चित्रम् चचाल स लेखकः स्वकं मन्दिरम्। पदमियाय तन्मनसि तदा दिव्य-प्रेमजनितः परमानन्दः। "तस्य प्रेमरसे गाढमवगाहस्व रे मदीयं मनः, परमानन्दसंसर्गाद् मत्तताम् उपेहि रे मम मानस।"—इत्यादीनि वाक्यानि प्रतिस्वनितरूपेण विरेजिरे तदीये चेतसि।

अद्वैतवादिभिरनुष्ठिते विश्वस्य व्याख्याने नैवोदवहद् रामकृष्णो वैमत्यम्। स्वप्रकृतिवशगेनैव तेन साकारोपासनायां प्रदर्शितं समधिकं गौरवम्। पूर्णसमाधावेव ज्ञेयं खलु शङ्करस्य परमं ब्रह्म। स चैकदा सम्मोहावस्थातः समवाप्यार्धचैतन्यम्,—"परमब्रह्मणो-भिन्नेयं मम माता कालिकेति, षड्भिरपि दर्शनैर्यस्याः स्वरूपं नैव पारितं बोद्धुं सैव मे"ति च—व्याजहार। समाधिभङ्गे स

प्राकृत इव जनोऽहंभावापन्नो मायां सत्यतयैवागृह्णात्। कथमेतत् सम्भवति? अहंभावे जाते व्यक्तिविशेषत्वेन स्वस्य सत्यत्वस्य बोधस्तस्य समजायत। अहंभावस्य सत्यत्वे प्रतीतिविषयं गते जगदपि सत्यत्वेन प्रतिभायात्। केवलस्य ब्रह्मणश्च तदापेक्षिकं मिथ्यात्वं जायते।" अत्रैव च विषये तेन चिराय गौरवविशेषः समारोपितः।

समाधिभङ्गे स सन्न्यासी ब्रह्मविषये—किमपि वक्तुं न शक्नोति। "भेदज्ञाने जातेऽभेदनीयविषये स मूकतामुपैति। अन्य-सापेक्षे जगति स्थितः स निरुपाधि-ब्रह्मविषये नीरवतामेव प्रयाति।" साधारणासुलभत्वात् समाधेः साकारः परमेश्वर एव साधारणैः समुपासनीयः, यतः साकारः साकारातिरिक्तं ब्रह्म चिन्तितुं नैव पारयति।

प्रकृत्या रामकृष्णस्त्वासीद् भावप्रवणो न तु गुणागुणज्ञ इति कृत्वा चरमोक्तं वैषम्यम् अनुरागविशेषतयैवासंशयं तस्य जीवने समदृश्यत। "न तु भक्तः कदाचिन्निराकारं बोद्धुमीहत इति, समाधिना तस्याहं-ज्ञानं साकल्येन मा नश्यतु इत्यत्र सकाम एव स" इति च तेन समुद्घोषिते। अत्र यच्च कारणं तेन प्रदर्शितम्, तत् तु तदीयप्रकृतेरनुगुणमेवाऽऽसीत्। "साकारेश्वरदर्शनसुखानु-भवोचितं समीहितमेवाभवत् तस्याहं-ज्ञानम्। शर्करास्वादनं न तु शर्करात्वेन परिणामनम् आसीत् तदीयमीप्सितम्।"

चतुरशीत्यधिकाष्टादशशततमे खृष्टाब्दे एकस्मिन् अपराह्ने कलि-कातायां पण्डितेन शशधरेण तस्य मेलनावसरे तेनैव तदीयधर्म-मतस्य सारांशः प्रकाशितः। ज्ञानमार्गः कर्ममार्गो भक्तिमार्गश्चेति बहव एव मार्गा वर्तन्त ईश्वरावाप्तौ। दार्शनिकानां श्रयणीयो हि ज्ञानमार्गः। केवलस्य ब्रह्मणो ज्ञानमेव तस्य समुद्देश्यम्। "नेति नेती" तिवचनैः सर्वाण्यसत्यानि वस्तून्यवधूय विगलितसत्यासत्य-

विचारणे कस्मिंश्चिद् विषये स समुपैति। सर्वसङ्कल्पत्यागेन जगत्यवस्थानं निष्कामकर्मणः सुसम्पादनञ्चेत्यादिरूपः कर्ममार्गो गीतासु शोभनतयैवाऽऽस्ते वर्णितः। साम्प्रतिकः कालो नैकस्याप्येतयोर्मार्गयोर्ग्रहणे योग्यः। अनात्मवादविशेषितेऽऽस्मिन् काले शरीरादात्मनो भिन्नत्वकल्पनं सुदुष्करमेव। कथं तावज्जनः शुद्धेन केवलेन निरुपाधिना परमात्मनात्मनस्तादात्म्यं विजानाति? तथैव कर्ममार्गस्यापि। ऐहिकस्याऽऽमुष्मिकस्य च फलस्य विषये निष्कामः सन् कर्माऽऽचरितुं कृतसङ्कल्पोऽपि जनो ज्ञानतोऽज्ञानतो वा कर्मफलेन संपृक्तो भवत्येव। अत ऋजुतमे भक्तिमार्गे स्थितो जनः प्रेम्णा, पूजयात्मसमर्पणेन चोपलभतां साकारस्य परमेश्वरस्य सङ्गसुखम्। अयं तावन्मार्गो जनान् अनारतप्रार्थनस्य प्रयोजनीयतां शिक्षयति। इदानीन्तने काल ईश्वरावाप्तेरयमेव तावत् सुगमो मार्गः।

षडशीत्यधिकाष्टादशशततमे खृष्टाब्दे रामकृष्णो भृशं पीडितोऽभवत्। काशीपुरोद्याने शिष्यैः परिवृतस्य तस्य मरणबाधा करुणं वर्णिताऽध्यापकेन गुप्तेन। द्विपञ्चाशत्तमजन्मदिवसान्नातिचिरं स ममार।

विगतशताब्द्या अष्टम्यां दशाब्द्यां दक्षिणेश्वरमन्दिरं संश्रितवद्भिस्तरुणैः साम्प्रतं प्रचार्यन्ते गुरोरुपदेशाः। तदीयादर्शमनुसृत्य स्वीकृतसन्न्यासव्रतैर्निर्मिता मठाः। हुगलीनद्या यस्मिंस्तीरे शोभते दक्षिणेश्वरमन्दिरम्, तस्मादितरस्मिंस्तीरे स्थितो "वेलुड"मठस्तेषां प्रधानं केन्द्रम्। वङ्गेष्वन्यत्र, युक्तप्रदेशे, मान्द्राजप्रदेशे च "वेलुड"मठाधीना विद्यन्ते बहव एव शाखामठाः। सन्न्यासिभिर्ब्रह्मचारिभिश्च शुद्धेन मठेन सम्बद्ध आस्ते कश्चन धर्मप्रचारकसंघः। त्यागात्मकं कर्मात्मकञ्च भारतस्य जातीयादर्शद्वयमेवास्य सङ्घस्य लक्ष्यमिति स्वर्गतेन स्वामिविवेकानन्देनैव समुद्घोषितम्। सामाजिकानि दीनभरणरूपाणि शिक्षाविषयकाणि चेति विविधप्रकारतां गतान्येवाऽऽसन्

सङ्घस्य कर्माणि। आध्यात्मिकानुशीलनेन श्रीरामकृष्णपरमहंसस्य जीविते दृश्यमानस्य सुमहत आदर्शस्य व्यापारावल्याश्च स्थैर्यमापादयितुम् एव प्रतिष्ठापिता अभवन्नेते मठाः। शुद्ध-केवल-निराकार-निरुपाधिविश्वकारण-ब्रह्म-विषयकज्ञानसाहायकशङ्करप्रोक्ताद्वैत-वेदान्तस्याध्ययनायातिगहने हिमालये "आलमोरा"तः ऐशान्यां दिशि पञ्चविंशतिक्रोशदूरे संस्थापितो मायावत्याश्रमः शाखामठानामेकतमः।

"वेलुड"मठे मया तेषां केचन जना दृष्टाः। नहि निराकारस्योपासनार्थमेव तैः सन्न्यासः समाश्रित इति तु मया तेषां सङ्गं प्राप्याधिगतम्। सगुणो वा निर्गुणो वा ब्रह्मैव तेषां परमं वस्तु। अद्य वा कालान्तरे वा तच्चरमं लक्ष्यं सर्वैरेव समासादनीयम्।

---

# त्रिंशोल्लासः

## वेदान्तस्य तत्त्वम् ( उपसंहारात्मकम् )

### ३

### डक्टर् रवीन्द्रनाथठाकुरः

नदीरयसमाहृतमृत्तिकासम्पादिताबन्ध्यत्वस्य त्रिकोणाकारस्य वङ्गदेशस्य पश्चिमे प्रान्ते शालवनावृतो गैरिकरक्तो वन्धुरः कर्षणायोग्यो वितत एवाऽऽस्ते कश्चन भूमिभागः। सागरात् तस्य भूभागस्योन्नता क्वचिच्चतुःशतहस्तपरिमिता, क्वचित् पुनश्चतुस्त्रिंशदधिकपञ्चशतहस्तपरिमिता। त्रिकोणाकारस्य समतलभूमिबहुलस्य वङ्गदेशस्य प्राकृतिकावस्थायास्तद् भूखण्डस्य प्राकृतिकावस्था भिन्नेति तत्स्थानगतैर्युष्माभिरनायासेनैव परिज्ञातं स्यात्। आतपाक्रान्तः शुष्कतरः खलु तद्देशस्य वायुः। शीतसमये भूमिः कठिना धूलिमयी च जायते। ग्रामस्थितैस्तालीवनैराम्रकाननैः कार्पासक्षेत्रैश्च कथञ्चिल्लघूक्रियते प्राकृतिकावस्थाया आतपाक्रान्तता।

ऊनविंशशताब्द्या मध्यभागे ईश्वरानुसन्धानोचितेनैवाऽऽग्रहेणोपलक्षितः कश्चन कठोरो जनो योग्यस्य कस्यचिद् भूखण्डस्याऽऽसादनायैवैतत्प्रदेशेऽनिर्वृतमितस्ततो बभ्राम। सृष्टिरहस्यव्याख्यानायैव समालोडितानां वेदानां बहुले भागे परिलक्षिता तेन वृथा कल्पना। शास्त्रमार्गानुसारेण क्रमप्रचीयमाना पौत्तलिकतेव शङ्करस्य विशुद्धाद्वैतवादोऽपि तेन प्रत्याख्यातः। 'राजा'राममोहनरायप्रवर्तितस्य धर्म्मसमाजस्य "ब्राह्मसमाज" नाम्ना पुनः प्रतिष्ठापनं

विधाय तस्य समाजस्य कृते उपनिषद्भ्यो वस्तु समाहृत्य स्वमतेन "ब्राह्मधर्म"—समाख्यः कश्चन ग्रन्थस्तेन व्यरचि। अत्राऽऽगत्य त्रयाणां समुच्छ्रितानां पादपानां शाखानामधस्तात् सन्निवेशितस्तेन यः खलु पटमण्डपः, सोऽद्यापि कौतूहलिनः पथिकस्य नेत्रपथातिथित्वं समुपैति। जगतः कोलाहलस्यातिदूरे स्थितेऽस्मिन् स्थाने कालेन निरमायि तेन "शान्तिनिकेतन"समाह्वं किञ्चन धर्म्योपासनमन्दिरम्। जनैर्महर्षिपदेनालङ्क्रियमाणो देवेन्द्रनाथठाकुरोऽसौ सर्वमेवाऽऽत्मनः समीहितं वस्तु समधिजगाम।

एकादशवर्षदेशीयो रवीन्द्रनाथठाकुरः स्वपित्रा महर्षि-देवेन्द्रनाथठाकुरेण समं द्विसप्तत्यधिकाष्टादशशततमे खृष्टाब्दे प्रथमं शान्तिनिकेतनं विवेश। नगरीसंवर्धितस्य तस्य बालकस्य मनसि नवीनस्यास्य प्रदेशस्योन्मुक्ता भूमिरियं नाम भावं जनयामास, स त्वनायासेनैव ज्ञातुं शक्यः। "नीरवताधिष्ठात्री देवी नीलेन नभोवलयेनैव तां भूमिं पर्यक्षिपद्" इति उत्तरकाले स्वमनोभावप्रकाशनस्यावसरं प्राप्य तेनैव लिखितम्। वस्तुतस्त्वनेन भूमिभागेन समुत्पादितस्तस्य मनसि गभीरश्चिरस्थायी च कश्चन भावः। प्रकृत्याश्चारुता समधिचकार तस्य मनसोऽन्तस्तमामपि कक्षाम्। गङ्गोपत्यकाया वनान्यधिवसतामार्याणां निर्व्याजवर्तनरीत्यां समजायेतां तस्य तदानीं काचिच् श्लाघा सम्मानविशेषश्च। एवंविध एव कस्मिंश्चित् परिसरे भारतस्याऽऽत्मनः प्रबोधसम्पादयित्री कदाचित् समुल्ललास काचित् स्वर्णमयी ऊषा। भारतीयानां पवित्रजीवितस्य निर्व्याजता-ज्ञानयोर्महत्त्वस्य सार्वकालिकं सर्वातिशायित्वं कथं तेन समुपलब्धम्, तस्यापि तेनैव दत्तं वर्णनम्। सरलजीवितस्य कल्पना, आध्यात्मिकदृष्टेर्विशुद्धता, हृदयस्य पवित्रता, विश्वमैत्रम्, सर्वेषु जीवेषु परमात्मबोधश्चेत्येते खलु चरमोत्कर्षं गा[illegible]मानस्य तस्य कालविशेषस्याऽऽदर्शा देदीप्यमानैरेवाक्षरैस्तेन

संकीर्तिताः। भारतस्य भूमेरन्तरद्यापि प्रवहत्येव तेषामादर्शानां प्रवाहः, अतः खलु तं प्रवाहं दैनन्दिनप्रयोजनीयत्वेन पुनरपि भूमेरुपरि प्रवाहयितुकामः स कतिपयविद्यार्थिभिरनुगम्यमानः प्रायेण त्रिंशद्वर्षानन्तरं प्रत्यावर्तत शान्तिनिकेतनम्, संस्थापितवांश्च तत्र विश्वविश्रुतं विद्यालयम्।

* * * *

वाष्पीयशकटावतारस्थानात् क्रोशपरिमितं क्रमोन्नतं मार्गमतिक्रामता मयाऽन्वभूयत एव कश्चनाऽऽनन्दविशेषः सूर्यकिरणसमुज्ज्वले कस्मिंश्चित् फेब्रुयारीमासस्य प्रातः। श्वेतपरिच्छदाच्छादिततनुः कश्चन दीर्घकायः प्रभाववान् जन आश्रमद्वारमलङ्कृत्याऽऽसीद् दण्डायमानः। मधुरेण सौजन्येन शान्तिनिकेतने सोऽस्माकं स्वागतं व्याजहार। कस्मिंश्चिच्छायासुशीतले कुञ्जे स्थिता प्रस्तरवेदिका मदासनायाभूत् परिकल्पिता। वर्तुलाकारो मसृणितः कुट्टिमायमानोऽचकासीत् कश्चन भूमिखण्डोऽस्मत्पुरतः। आङ्गलदेशीयविद्यालयस्य प्रपाठप्रकोष्ठस्य प्रयोजनमेतेन सम्पाद्यते। मत्पृष्ठतो नातिदूरे वृक्षतलेऽतिष्ठन् श्वेतवेशाः शिक्षकाः। पुरतश्च मे वर्तुलाकारभूखण्डस्य प्रान्तभागेऽर्धवृत्ताकारेणोपाविशन् विद्यार्थिनः। वसन्तकालस्यानुगुणेन पीतवर्णेन परिच्छदेन ते बभासिरे। दक्षिणेन मां बालकैः समं विद्यालये पठन्त्यो बाला विरेजिरे। किञ्चन वैदिकं सूक्तं गायन्तं पण्डितमनु समग्रा सा सभा मधुरमगासीत्। प्राचीनभारतीयेतिहासं विजानतो जनस्य सविधे नैव स्वल्पमेतस्य दृश्यस्य गौरवम्। प्रकृत्या समं सुसंश्लिष्टानां वनमध्ये निवसतां प्रज्ञानामार्याणां याभ्योऽवस्थाभ्यः समुद्गतेयं शिष्टिस्तासामेवावस्थानां ह्रस्वेन मानेनात्र दृश्यते समावेशः। आधुनिकवर्तनरीत्या विरोधम्, अतीतकालस्याऽऽदर्शानां सम्प्रदायानाञ्च सम्माननं समन्तत एवात्र सर्वः पश्येत्।

छात्राणामध्ययनोपक्रमानुकूले सभाभङ्गे जाते शाद्वलमतिक्रम्य कस्यचित् पुरातनस्य तरोर्मूले स्थिता काचिद् वेदिकाऽस्माभिरवलोकिता। अनुन्नतस्य कस्यचित् प्रस्तरखण्डस्योपरि मर्मरोपलखण्डयुगलमासीद् विनिहितम्। अस्मिन्नेवाऽऽसन उपविश्य महर्षिदेवेन्द्रनाथठाकुरेणाध्यायि परमेश्वरस्तत्सङ्गावाप्तये। ततः परिदृष्टान्यस्माभिर्विभिन्नकुञ्जस्थितानि विभिन्नविषयाध्ययनस्थानानि। सर्वत्रैवाध्ययनस्थानेषु स्वल्पसंख्यकाश्छात्रा मण्डलाकारेण भूमावध्यापकेन सममासन्निषण्णाः। नरेषु स्थितस्य सौन्दर्यविषयकनैसर्गिकबोधस्यानुशीलनम्, सृष्टावस्यां सर्वगतत्वेनावस्थितस्याविरोधस्य ज्ञानं वा शिक्षापद्धतौ तस्यां सर्वथैव मया समन्वभूयत। अतः खलु तस्यां शिक्षापद्धतौ सङ्गीतं चित्राङ्कणञ्च गौरवास्पदमेवालभेतां स्थानम्।

येन समुद्देश्येन प्रणोदितेन रवीन्द्रनाथठाकुरेण प्रतिष्ठापितोऽयं विद्यालयः ये च वा भावास्तस्मिन् प्रयोगे लीना एव वर्तन्ते, तेषां समालोचनेन समुद्घाटितं भवति रवीन्द्रनाथस्य दर्शनम्। अरुन्तुदैवाऽऽसीत् तस्य विद्यालयजीवितस्य स्मृतिः। विद्यालयस्य कार्याणां कठोरैकरूपतयाऽति हि नाम सन्तापितमभूत् तस्य चेतः। आत्मोत्कर्षसाधनस्य प्रतिकूलतया स्थिता केवलज्ञानदानपद्धतिर्लोहशल्यमिव तस्य मनसो रुजमुदपादयत्। सौन्दर्यसङ्गीतामोदं जगदीश्वरसृष्टमिदं जगत्, तस्मिन् (रवीन्द्रनाथे) अन्धजनोचितां शून्यां दृष्टिं निधाय स्थितेभ्यः काष्ठमयासनेभ्यः, समुच्छ्रितेभ्यः प्राकारेभ्यश्च स्थानं दत्त्वा, स्वयं विलीयत इति स समपश्यत्। अतः खलु शान्तिनिकेतने काष्ठासनैः स्निग्धाय वसुधोत्सङ्गाय, प्राकारैश्चाऽऽमलकीकुञ्जेभ्यः स्थानं दत्तम्। तत्रत्यैरध्यापकैश्च न केवलं पुस्तकस्थितमेव ज्ञानम्, परं विद्यार्थिनामुत्कर्षविधायकम् इतरदपि ज्ञानं तेषु वितीर्यते। पूर्वपुरुषाणां शारीरिकमानसिकाध्यात्मिकैक्योप-

लक्षितं पूर्वपुरुषाणां वनवासजीवितमेवाऽऽदर्श आसीदस्य विद्यालयस्य प्रतिष्ठातुः। आधुनिका विद्यालयाः शारीरिकमानसिकोत्कर्षसाधनायैव यतन्ते। एतेनास्माकमज्ञातसारेणैव मानवप्रकृतिगतस्यैक्यस्य विलयो जायते। एतद्विषयमधिकृत्य पुराणेन तेन (रवीन्द्रनाथेन) कथितम्—"न त्वेतस्माज्जगतः पृथग्वस्तुतया, परमस्यैव जगतोऽत्यन्तर्भूतसत्यतयैवास्ति म आध्यात्मिके जगति विश्वासः।" वयमीश्वर एव वसाम इति सत्यं प्रतिप्रश्वासमेवास्माभिः संस्मरणीयम्। अनन्तरहस्यपूर्णेऽस्मिन् जगति जाता वयम् कथमस्मान् चिरायानिश्चितायां पद्व्यां प्रवहतो जडपदार्थस्याऽऽकस्मिकोद्भेदतया जानीयाम। चिरनिद्रितस्य स्वप्नदर्शिनः स्वप्नत्वेन कथं वयम् अस्माकं जीवितं विजानीयाम, अनन्तव्यक्तित्वोपेतेन केनचिद्विषयेणासम्बद्धौ शक्ति-जडपदार्थौ व्यक्तित्वसम्पन्नानामस्माकं सविधे निरर्थकावेव जायेयाताम्। मानुषप्रेम, महतां महत्त्वम्, स्वदेशहिताय शूराणां स्वजीवितोत्सर्गः, प्रकृतेरप्रतिमं सौन्दर्यम्, इत्येतेषां विषयाणां केवलजडत्वं नैव सम्भवति, परमस्त्येव तेषु व्यक्तित्वव्यञ्जकः कश्चन भावः।

दैनन्दिनोपासनाकार्येऽप्युपनिषद्वचनप्रयोगनिपुणे कुले जातः स एकमेवाद्वितीयं ब्रह्म प्रतिपादयन्तं वेदान्तमाश्रित्यैव स्वं धर्ममतं स्थापयेदित्यत्र किमु चित्रम्। साहित्यं सङ्गीतं कलाश्च सहजोपलब्धविषयतया गृहीतवतां जनानां मध्ये बाल्ये विवर्धितत्वात् स्वभावकमनीयं काव्यं न तु कर्कशं दर्शनशास्त्रं जातं तस्यावलम्बनीयमित्यत्रापि नैव विस्मयः कार्यः।

तत्कृते "साधना" समाख्ये ग्रन्थे सुसम्बद्धतया चकास्ति तदीयं धर्ममतम्। "समासादनमार्गः" इति तु "साधना" पदस्याऽऽशयः। न च दार्शनिकनिबन्धानामादर्शेन विरचितः स ग्रन्थः। ग्रन्थोऽयं वत्वात्मनः करुण उच्छ्वासविशेषः, न तु युक्ति-प्रतिपादिताध्यात्म-

वादात्मकः ; दार्शनिकभावपूर्णः न तु दर्शनस्य विशिष्टो मतभेद इति न्याय्यमेवोक्तमध्यापकेन राधाकृष्णेन। सर्वान्तर्गतो हि परमेश्वर इति धर्म्यो भावः साधारणानां भारतीयानां मनःस्विव तस्यापि मनसि पदं लेभे। अनारतमेतादृशेन भावेनानुप्राणितेनैव तेन प्रकृतेः सौन्दर्यस्य वर्णने तथैवाऽऽत्मा विनियोजितः। निदाघसमये "प्रियगीत"पक्षी यथा निरवच्छिन्नं मधुरं गायति, तथैव प्रकृतेश्चारुतयाऽत्यर्थं मुखरीकृतः स यदृच्छया मनोहरं रुतमेव निरन्तरं समुद्गिरति। यथार्थनामा हि तस्य "गीताञ्जलि"समाख्यो ग्रन्थः। जगति प्रीतिमान् विश्वासयुक्तश्च स तत् स्रष्टुर्मायात्वेन ग्रहीतुं नैव समर्थः। अनभिमतस्तस्याऽऽसीद् धूर्त्तानां जालरूपो द्वैतवादः। सर्वेषु वस्तुषु परमेश्वरस्य सत्तामनुभूय भगवद्भावोन्मत्तः स प्रकृत्या नराणां तादात्म्यं विजानाति, काव्याकारेण च तस्य स भावः प्रकटतामुपैति। प्रकृत्या अप्रतिरूपं रूपं व्यक्तित्वविशेषस्य व्यञ्जकमिति तस्य निर्णय एव तदीयकल्पनायाः स्वभावं व्यक्तीकरोति। "अनन्तपथगामिनीव गवाक्षपथसंस्थिता निस्तब्धा रजनी" इति, "अनाद्यनन्तकालं नक्षत्राणि प्रत्यक्षीकुर्वन्ति संख्यातीतानि मरणदृश्यानि" इति, "मलयपवनेन जगतः क्लान्तिरपनीयते" इति, "मल्लिकामालतीकुसुमामोदेनोद्यानं सानन्दं व्याप्यते" इति, "क्षुद्रतमेऽपि कुसुमे स्थितस्य सौन्दर्यस्य शक्तिः सचलाग्नेयास्त्रादपि प्रबलतरा" इति, 'करवार्' स्थिता चन्द्रकलाकारा दुरन्तसागरवक्षसि प्रसृता भूमिरनन्तालिङ्गनेष्सुर्जन इव प्रतीयते" इति च वक्तुमानन्दविशेष एव तेनाधिगम्यते। दृढं स विश्वसिति जगति विसर्पणशील आस्त एव कश्चनाऽऽदर्शविशेष इति। न हि कल्पनाप्रसूतेन स्वर्गेण, परं सर्ववस्तूनां लक्ष्यभूतेन चरमसत्येनैव सम्बद्धः खल्वसावादर्शः। सूर्यालोके, श्यामले क्षेत्रे, प्रवहन्त्यां प्रवाहिण्याम्, वसन्तस्य सौन्दर्ये, शीतलसमयप्रभातस्य शान्त्याम्, किं बहुना

सर्वत्रैव समालोकयति स तन्मतानुसारिणं स्वर्गीयं भावम्। वस्तुतस्तु जगति सर्वत्र वरीवर्तमानः कश्चन दिव्यो भावः सर्वथैवास्मान् परिचालयतीत्यत्र प्रत्ययविशेष एव तेनोह्यते। यथार्थसौन्दर्यं हि सत्यं किञ्चन वस्तु, न तु जडपदार्थमात्रम्। अस्त्येव तत्र व्यक्तित्वस्य भावः। एतस्मादेव कारणात् सौन्दर्यं नानाप्रणाल्या नराणां मनःकक्षासु प्रविशति। सूर्यास्तमनसौन्दर्यस्यान्तर्यद्धि सत्यमास्ते तदेवाधिकृत्य द्विनवत्यधिकाष्टादशशततमे खृष्टाब्दे डिसेम्बरमासि कस्यचिन्मित्रस्य सकाशे लिखितं तेन किञ्चन पत्रम्। धरित्र्यामाकाशे सागरेषु च तदानीं या नीरवता समवतरति, तां परिचिन्त्य विवर्धत एव तस्य विस्मयः। यदि कदाचिज्जायेतास्या नीरवताया विरामः, यदि कदाचिद् निलीयेतास्य समयस्याभीप्सितत्वकारणभूतो भावस्तदा पृथिव्या नक्षत्रलोकं यावद् अपिनामोद्गच्छेत् किञ्चनातिगम्भीरं द्रुतसञ्चारि सङ्गीतम्? एवं सति तीव्रयैकायनतया विमृश्य विश्वाच्छादकयोर्वर्णालोकयोर्विचित्रमैक्यं सङ्गीतत्वेन परिणमयितुं शक्यते। ततो नेत्रे निमील्य मानसेन श्रोत्रेणानुभवितव्यमस्माभिश्चिरप्रसक्तस्य सङ्गीतस्य स्फुरणम्। नहि सम्पूर्णरूपेणेन्द्रियविषयत्वं गाहते सौन्दर्यम्। ये तावत् सौन्दर्यरसे गभीरं निमङ्क्तुं नैव पारयन्ति, त एव सौन्दर्यस्य केवलेन्द्रियविषयत्वं मन्यन्ते। परं यैरस्य प्रकाशनायोग्यत्वं सम्यगुपलब्धम्, तैरेव ज्ञायतेऽस्य नेत्रकर्णविषयातिशायित्वम्, तैरेव चावगम्यते हृदयमप्यसमर्थमस्य यथार्थतत्त्वासादन इति।

सौन्दर्यपदस्याऽऽशये सत्यतायाश्चासकृद् गौरवारोपणमस्माभिरतः खलु प्रत्यक्षीक्रियते। ससीमे वस्तुन्यसीमावाप्तेरानन्दमवलम्ब्यैव निरमायि तेन काव्यजातमिति तद्वचनं समुद्धृत्यैवास्माभिरुच्यते। सौन्दर्यं हि ससीमासीमयोः संयोगस्थलम्।

नहि कल्पनात्मिका मृगतृष्णिकेव प्रकृतेः सौन्दर्यम्, परं तद्धि प्रतिविम्बतां गतोऽनन्तस्याऽऽनन्दः। तेनाऽऽनन्देन समाकृष्टैरस्माभिरात्माऽपि विस्मर्यते। कुसुमस्थितानां वर्णाकारगन्धानां सन्त्येव खलु विशिष्टाः समुद्देशाः। भ्रमरस्य मधुसंग्रहे ते तावन्मार्गदर्शकाः। भ्रमरस्य मध्वासक्तेरपि न च नाऽऽस्ते समुद्देशः। मधु सञ्चिन्वता भ्रमरेण वृक्षस्याबन्ध्यत्वं सम्पाद्यते, तेन च जगदिदं न मरुस्थलतामवाप्नोति। विज्ञानमते प्रकृतौ सर्वेषामेवैतेषां गुणानामस्त्येव निर्दिष्टः समुपयोगः। एतेषां गुणानां समवाय एव पुष्पस्याविलोपस्य हेतुः। कठोरं नियमनुसृत्य जन्मवृद्धयुत्पादननाशा यथाक्रमं प्रवर्तन्ते। वर्णाकारगन्धादयो विधिसारांशभूतानां कारणपरम्पराणां संयोगकारकाः। अनात्मवादिनां दृष्ट्या विज्ञानप्रोक्तं व्याख्यानमेव पर्याप्तं स्यात्। प्रसूनस्य सर्वे गुणा व्याख्याताः, पर्याप्तः समुद्देशश्च निरूपितः। तथाप्यपरितुष्टा एव दार्शनिकाः। उपेक्षित एव विषयः कश्चन विज्ञानेन। प्रयोजनीयतावादिभिः प्रदर्शितस्य गुणानामुपयोगनिचयस्याप्यतिरिक्तः सौन्दर्यबोधरूपः कश्चन विषयः पुष्पेणास्मत्समीपे समुपस्थाप्यते। पुष्पस्थितानां गुणानां सङ्कलनाज्जातं सौन्दर्यं प्रकृतेरमुक्तहस्तत्वं व्याहन्ति। कुसुमस्य विभिन्नगुणानां कार्यं सिद्धिपूर्वमेवास्माभिः सम्पादयितुं शक्यते, परं तेषां गुणानां सङ्कलनाज्जातं नराणामानन्दजननं सौन्दर्यमसम्पादनीयमेव। धर्मसौन्दर्यभेदेनैकस्यैव कुसुमवस्तुनोऽवस्थाद्वयम् अस्माभिरुपलभ्यते। तयोरवस्थयोरेका पारतन्त्र्यात्मिकेतरा चापारतन्त्र्यरूपा। एकस्मिन्नेव वर्णे आकारे शब्दे आस्वादे च प्रयोजनीयतानन्दमूलौ परस्परविरुद्धौ भावौ परिलक्ष्येते। प्रथमोक्तदृष्ट्या कुसुमं दिदृक्षोर्जनस्य ज्ञानं प्राथमिकदशाश्रितमेव। ब्रह्मजिज्ञासुना वारुणिभृगुणाऽवस्थाविशेषमिमं समधिगम्य, "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं

प्रयन्त्यभिसंविशन्ती"ति—प्रथमं सिद्धान्तितम्। दशायामस्याम् अनात्मवादो वस्तूनामस्तित्वसमस्यासमाधाने समर्थ इव प्रतीयते। कुसुमस्येतरां दशां समनुभवन् जनः,—"आनन्दाद्धेयव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ती"ति—भृगुवारुणेश्चरमं सिद्धान्तमेव समुपैति। अत्रैव चरमे सिद्धान्ते स्वच्छन्दं रमते ठाकुरः। एतस्य मतविशेषस्य सर्वान्तःकरणेन पोषणाद् दर्शनं पिपठिषुभिः स्थाने खलु स वैदान्तिक इत्युच्यते।

विश्वस्वीकारे किं वीजमिति प्रश्नस्योत्तरत्वेन वेदान्तेन यदुक्तम् तत्कल्प एव कश्चनाऽऽसीद् भृगोः सिद्धान्तः। मायाविना प्रदर्शिता मायेव विश्वमिति वेदान्तसूत्रैः प्रतिपादितम्। परं कथं स मायावी मायां सृजेदिति प्रश्नः स्वत एव समुद्गच्छति विश्वस्वरूपद्योतकादस्मान्निदर्शनात्। मायाविनः कैवल्यस्य नैर्गुण्यस्य च पूर्वमेव निर्व्यूढं प्रतिपादितत्वान्नैतत् तस्य प्रयोजनीयत्वेन समीहितत्वेन वा व्याख्यातुं शक्यम्। लीलयैव तेनैतत् कृतमित्युत्तरं सूत्रेस्य एवास्माभिरवाप्यते। यदृच्छया प्रवृत्तेयं मन्ये बुद्धिः। असीमः ससीमे आत्मानं प्रकटयति, यतः स एव तस्य स्वभावः। "दिव्यसमृद्धेश्चिरन्तनविकाशविशेषः खल्विदं जगद्" इत्यध्यापकस्य विपन्-सेन-महोदयस्य वचनमेवात्र समुद्ध्रियते। ठाकुरमहोदयनये आनन्दादेव खलु जगदिदं प्रकाशितं परमेश्वरेण। एतच्चेद् गृह्येत, तदा परमेश्वरः स्वेच्छयैव समर्यादत्वं स्वीकरोतीत्यत्र विस्मयावकाशो नैवावतिष्ठेत। ईश्वरश्चेदात्मनि नैव निदध्यात् समर्यादत्वम्, तदा कथं तस्य शक्तिप्रयोगयोग्यता जायेत? स्वेच्छया क्रीडानियमैरात्मनः सावधिकत्वं परिकल्प्य क्रीडोपकरणैः सुसम्बद्धश्चतुरङ्गक्रीडानिपुणः किं नानुभवति स्वशक्तिसम्पादितम् आनन्दम्? न च स्वेच्छया शारिचालने तस्य शक्तेरभावो विद्यते, परं तथा कृते

क्रीडैव न स्यात्। स्वीक्रियेत चेत् परमेश्वरस्य सर्वशक्तिमत्त्वम्, तदा तस्य सृष्टेरवसानं जायेत, तदीया शक्तिश्च निरर्थकत्वं गाहेत। स्वप्रकाशनायान्यसापेक्षत्वादानन्दस्यापेक्षत एव स इयत्ताविधायिकं कञ्चिन्नियमम्। गायकस्याऽऽनन्दो गानरूपेणाऽऽत्मानं व्यक्तीकरोति। गीतस्य व्यवच्छेदे कृते तस्य स्वरादिरूपावधियुक्तत्वं स्फुटतां लभते। तेषां पुनरवधीनां विरहात् सङ्गीतस्य सङ्गीतत्वमेव व्याहतं भवति। सर्वेषु निर्धारणयोग्येष्ववधिषु महत्तमः खलु केवलः परमेश्वरः। परम् इयत्तादिकं यदि नैवास्थास्यत्, तदा केवलस्य परमेश्वरस्य पूर्णत्वञ्च कथमपि नाभविष्यत्। एकतो विस्तरणशीलं हि ब्रह्म, अपरतश्च तत् पूर्णम्। एकत्र तद् मूलम्, अपरत्र चावभासविशेष एव। गानस्य गीयमानवस्तुनश्च तत् खलु समाहारः। एतस्या-स्वीकारेण गायकविषयकज्ञानस्याप्यस्वीकारो जायेत; प्रचलति गानम्, परं नास्ति किञ्चिद् गीतवस्त्विति वाक्यमिवैतत् तदा प्रति-भायाच्च। सत्यं सपद्येवोत्पद्यतेऽस्माकं गानव्यापारस्यैव बोधः, न तु कदाचित् साकल्येन गीतवस्तुनो ज्ञानम्, तथापि गायकस्य मनसि पूर्णतयैव विराजते तद् गीतवस्त्वित्यत्र किं सर्वदैव वयं न सचेतनाः?

येन कविना महादेशत्रयस्य पाठकानां कृते विरचितानि काव्यानि, तस्य कवेः प्रेरणालाभस्थानं सर्वैरेव ज्ञातव्यमिति दुष्परिहरणीयोऽयं विषयः। किं कविनोरीकृताः सर्व एव भावा भारतीयाः, अथवा भारतीय-वैदेशिकयोर्भावयोर्मिलनादेव ते भावाः समुद्गताः? रवीन्द्र-नाथस्य काव्ये जन्मान्तरवादस्यावस्थितिं स्वीकृत्यापि जन्मान्तर-वाद-कर्मवादादिषु हिन्दुमतस्य वैशिष्ट्येषु नाऽऽसीत्तस्य विश्वास इत्यध्यापकेन "ह जे टम्सन्" महोदयेन प्रतिपादितम्। अध्यापकस्य टम्सन्-महोदयस्य वचनं सन्देहभाजनमिति मया ससाहसं तद् विचार्यते। सहजोपलब्धभावविशेषतया विशुद्धहिन्दुभावोऽयं

रवीन्द्रनाथस्य मनस्यवतिष्ठत इत्यत्र तदीयं काव्यजातमेव प्रमाणम्। गभीरं विचलिते तस्मिन् भावोऽयं तन्मनसि पदं रचयति। प्रथमं ग्रामं दृष्ट्वा यो हि नाम भावस्तदीये चेतसि विरराज, तं स वक्ष्यमाणप्रकारेण निवेशितवान् कस्मिंश्चित् स्वरचिते काव्ये। "जन्मान्तरस्य मित्रमिव गङ्गायास्तटं मह्यं स्वागतम् उदीरयाम्बभूव"। त्रिनवत्यधिकाष्टादशशततमखृष्टाब्दस्य मे-मासस्य षोडशदिवसीया लिपिः स्वीये जन्मान्तरविषये तदीयं भयप्रत्याशादिकमधिकृत्यैव तेन लिखिता। प्रियेषु वङ्गेष्वहं यदि पुनर्न जायेय, जायेय च यदि विश्रान्तिवर्जिते कोलाहलपूर्णे युरोपदेशे, तदा कथं शान्तिमवाप्नुयामित्यसकृदेव तेन चिन्तितम्।

खृष्टीयधर्मात् तेन लब्धा प्रेरणेति कैश्चित् सनिश्चयमुद्घोषि। अध्यापकेन एस् राधाकृष्णेन तस्य सविशेषं प्रतिवादः कृतः। साहित्यविषयिण्या धोशक्त्या अन्यस्माद् गृहीताया नीतेरपि भारतीयत्वं युरोपदेशे प्रदर्शितं ठाकुरेणेति चतुर्दशाधिकोनाविंशतिशततमखृष्टाब्दस्य फेब्रुयारीमासस्य चतुर्दशदिवसीयायाः "स्पेक्टेटर्" पत्रिकायाः समुद्धृतोऽध्यापकेन तेन कश्चनांशविशेषः। भवतु न भवतु वा क्राइष्ट् एव परमेश्वरस्तथापि तत्सदृश एवाऽऽस्ते कश्चन परमेश्वर इति खृष्टधर्मप्रचारकस्य भाषितस्यानुरूपमेतत्। एतेषां निर्णयानां मूलभूतस्य सत्यस्यासत्यस्य वा निरपेक्षेण सारवत् कारणमाश्रितवताऽध्यापकेन राधाकृष्णेन प्रदर्शितम्—विश्वस्यांशविशेषेण परमेश्वरस्य तादात्म्यं सञ्चिन्त्य सदसतोरेकतरेण तस्य संयोगमपरेण च विप्रयोगं परिकल्पयतः सगुणेश्वरवादभेदस्य ग्रहणं ठाकुरेण कृतमित्यचिन्तनीयोऽयं विषय इति। वेदान्तमनुसरत् तस्य सदसद्विषयकं मतं स्वर्गतस्याध्यापकस्य वि-एन् सेन-महोदयस्य मतस्यानुगुणमेव, केवलं तत्र भाषागतो भेदो विलसति। नैतिकक्षेत्रगताश्च इयत्ताभ्योऽसदुत्पद्यते। असीमस्य ससीमत्वेन

प्रकाश इति तत्कृते विश्वव्याख्याने गृहीते, तथाविधानाम् इयत्तानाम् असतो वा विद्यमानता स्वीकरणीयैव। कथमसद् विद्यते इति नायं विचारविषयः, परम् विचारणीयं खल्वसति परमसत्यत्वमस्ति वा नवेति। अस्य प्रश्नस्य निषेधमुखेनैव निःशङ्कं परिकल्पितमुत्तरम् अध्यापक-सेन—डक्टर्-रवीन्द्रनाथठाकुराभ्याम्। तटभूमिरेव नद्याः सीमा। एवमपि नद्याः परमवस्तुत्वेन किं कैश्चित् तटभूमिर्निर्दिश्यते ? परं नदीवेगस्य किं सा सीमैव न कारणम् ? जगतोऽपि स्रोतसोऽस्त्येव काचित् सीमा। तथाऽसति विश्वस्य स्थितिरेव न सम्भवति। न च विश्वस्य सीमाभिः, परं पूर्णताधिगमनाय तस्य प्रधावनेनैव तदीयं समुद्देश्यमस्माभिर्निरूपयितुं शक्यते। आत्मबोधानन्दमनुभवितुम्, नैतिकजगत्यसत्तया साकारजगति क्लेशरूपेण धीजगति भ्रमत्वेनेत्यवस्थाभेदैर्विभिन्नान् आकारान् विभर्त्त्यनन्तेनैतासामियत्तानां पारतन्त्र्यं समनुभूयते। एतद्दृष्ट्या समवलोकितास्वेतास्वियत्तासु स्थितमचिरस्थायित्वम् अनायासेनैवावगन्तुं शक्येत। शङ्करेण त्वेतासाम् इयत्तानाम् आपेक्षिकसत्यत्वं प्रतिपादितम्। विज्ञानस्य समुन्नतेरितिवृत्तस्याऽऽलोचनं नाम विभिन्नसमये विज्ञानेन प्रवर्तितानां भ्रमात्मकविषयाणामध्ययनम्। तथापि भ्रान्तविषयाणां प्रचारणं हि विज्ञानस्य समुद्देश्यम् इति न कोऽपि विश्वसिति। सत्यस्यावधारणे क्रमोन्नतिलाभ एव विज्ञानस्येतिहासे द्रष्टव्यो न तु तन्नत्यो भ्रमः। स्वभावेनास्थिरा हि भ्रान्तिः। सत्येनैतस्याः सामानाधिकरण्यम् असम्भवमेव। छिन्नः परिच्छद इवोद्देश्यसिद्धेरनन्तरमेव भ्रमस्त्यज्यते। असत्यमूरीकृत्य सत्यज्ञानसम्पादनमेव बुद्धेः कार्यम्। भ्रमध्वंसपूर्वकं सत्याविष्करणं हि ज्ञानम्। एवं रीत्या अस्माकं बुद्ध्या चारित्रेण च पूर्णतावाप्तयेऽसत्यपातनं कर्तव्यम्।

पञ्चचत्वारिंशदधिकाष्टादशशततमे खृष्टाब्दे महर्षिदेवेन्द्रनाथ-

ठाकुरेण प्रत्याख्यातं वेदस्याप्रमादित्वम्। सानुगेन तेन शङ्करस्य सम्प्रदायम् अवधूय ब्राह्म-समाजे विचारणाशक्तेर्विवेकस्य च परम-प्रामाण्यं निर्व्यूढं संस्थापितम्। वेदानां ये तावदंशास्तेषां मतस्यानुकूलास्ते तेन परिगृहीताः। रवीन्द्रनाथस्य सकाशे तदन्तःस्थितं ज्ञानमेव परमं वस्तु। अस्माकमन्तरस्थितस्य परमेश्वरस्य ज्ञानं न ह्यपेक्षते प्रमाणं वितर्कं वा, परं स्वत एव तज्जायते। अपूर्णतया प्रतीयमानानि वस्तूनि पूर्णस्यैव प्रकाशनानीत्यप्यनयैव रीत्या जनो बुध्यते। विवृण्वता तेन पुनरपि गान-गायकयोरुपन्यासः कृतः। गानस्य चतुरस्रताम् अनुभवन् विशिष्टः श्रोता तत्त्वतः स्वरपरम्परामेव शृणोति। आनन्द एव सङ्गीतस्य कारणम्। स्वरपरम्परया सङ्गीतमात्मानं प्रकाशयति। अपूर्णानां स्वराणां सङ्कलनेन जातं सङ्गीतं साकल्येन गृहीतं सत् पूर्णत्वमेव प्रयाति।

वस्तुव्यवस्थायामस्ति किं स्वाधीनेच्छायाः किञ्चन स्थानम्? अथवा ससीमेऽसीमस्य प्रकाशात्मकं हीदं जगदित्यतः किं नराणां कठोरनियमाधीनत्वं नाऽऽयाति? केवलः परमेश्वर आत्मबोधाय स्वेच्छया समर्यादत्वं स्वीकृत्य मर्यादापारतन्त्र्यं भजते। अपि-नामैयन्त्राणां स्वरूपमतिकठोरम्? किं दुर्लङ्घ्यानां नियमानां क्रीडनकमात्रं नरः? शारीरिकमानसिकरचनायां प्रकृत्या सह सम्बद्धः स तथैवेति मन्यते ठाकुरः। आत्मविषये तु स कथमपि न तादृशः। नहि नराणामात्मा इच्छायाम् इच्छायाः प्रकाशनातिरिक्तः कश्चन पदार्थः। नराणामात्मविषय एव विप्लवः सर्वैरेवानुमोद्यते। नराणामिच्छारूपेणाऽऽत्मानं प्रकाशयन्तीच्छा यद्यभविष्यत् परतन्त्रा, तदा स्वाधीनताया असद्भावाद् आनन्दो नैवावर्तिष्यत। प्रकृतेर्नियमरूपा ईश्वरस्य सशस्त्रा योद्धारो नराणामात्मनाऽध्यासितायाः कक्षाया बहिरेव तिष्ठन्ति; प्रेम्णो दूतं सौन्दर्यमेव केवलं तत्र प्रवेशं लभते। स्वाधीनता चेत् सत्या, तया विना यद्यानन्दो

नैवाजनिष्यत, तदेश्वरस्य नराणामात्मना सम्बन्धः प्रेममूलो न तु प्रभुत्वमूल एवाभविष्यत्। नत्वीश्वरशक्त्या बलान्नियोजितः सन्, परं स्वेच्छयैवास्माकमात्मा सप्रणयमीश्वरेण मिलति। ठाकुर-कुलोद्भूतगुणत्वात् तैत्तिरीयकोपनिषद उपदेशः प्रमाणम् इति स पुनरप्यस्माभिरत्रावतार्यते। "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभि-संविशन्तीति।"

* * * *

भारतीयानां सविधे तेषां धर्मशास्त्रस्यास्त्येव सुमहद् गौरवम्। प्रतीच्यदेशीया जिज्ञासवोऽपि विद्याया आवरणे निहिताया नराणा-मुच्चाशायाश्चिन्तायाश्च प्रतीकमिदं धर्मशास्त्रं जनानां प्रदर्शनार्थम् आधारविशेषे संरक्षितं मृतशरीरमिव केवलं भूतवस्तुपक्षपातित्वेन पुराणवस्तुशास्त्रविषयकपक्षपातित्वेन वा न गृह्णीयुरिति बोधय-त्येवास्मान् असम्पूर्णोऽपि, स्वोपस्थापितमतस्य स्वरूपं पाठकान् बोधयितुमसमर्थोऽप्युल्लिखितः संक्षेपः। प्रतीच्यदेशजानां कठोरसमा-लोचकोचितं व्यवच्छेदनिपुणं चेतो वेदान्तस्यावलम्बं तर्कशास्त्र-कङ्कालं प्रसह्य ग्रहीतुम्, वेदान्तमतस्य प्राणदं शोणितभूतं विश्वासं प्रेरणाञ्च प्रत्याख्यातुमत्यर्थं समुत्सुकमेव। एकमेवाद्वितीयं ब्रह्मेति वेदान्तस्य मूलतत्त्वं सूक्ष्मं विचार्य तस्माद् मनःकल्पितम् अवास्तवं हि किञ्चन वैदान्तिकस्येश्वर इति सिद्धान्तोन्नयनं नैव दुष्करं तार्किकेणेत्यसन्दिग्धोऽयं विषयः। उल्लिखितेन लक्षणेन ज्ञेय-वस्तूनां सत्ताया अस्वीकाराज् ज्ञातुरप्यस्वीकारो जायत एव, ज्ञेय-वस्तुविरहाज्ज्ञानस्यैव प्रसङ्गाभावाद् इति। युज्यत एव तस्य वचनम्। ज्ञातृज्ञेयातिरिक्तत्वात् तस्य ब्रह्मणो विशुद्धज्ञानमयत्व-मेव प्रतिपाद्यते। न हि ब्रह्म ज्ञातृ न वा तज्ज्ञातं परं तद्धि ज्ञानम्। अपरथा चेदुच्यते तदा न हि ब्रह्म बुद्धिमत् किञ्चन सत्त्वम्, परं

केवलबुद्धिरेव। ब्रह्मवर्णनाय प्रयुक्तमानन्दपदमप्यचेतनताऽतिरिक्तं किमपि प्रकटयितुं नैव शक्नोति, यत आनन्दानुभवकारिण आनन्दोत्पादकस्य वस्तुनश्च सद्भावादेवाऽऽनन्दस्यानुभवः सम्भवति। सूत्रगतान् पक्षान् अवलम्ब्य "जेकर" इव सोऽपि यथार्थतया परमपुरुषं निराकारत्वेन, जगताऽसम्बद्धत्वेन, अस्माकं स्वस्य च विद्यमानताविषयेऽचेतनत्वेन निर्गुणत्वेन च वर्णयितुं शक्नोति। तस्यैव लेखकस्य वचनमनुसृत्य तथाकथितः साकारः परमेश्वरो निराकारस्य प्रथमः प्रकाश इति काल्पनिकोऽयं विषय इति; ईश्वरो वा, स्रष्टा वा, परमपुरुषो वा, पिता वा, विचारको वा, कश्चनान्यो वा नास्त्यस्मदतिरिक्तो वस्तुविशेषो यः किल शङ्कनीयः पूजनीयोऽनुरञ्जनीयो वेति च वक्तुं तेन लभ्यत एवावसरः। जगद्रूपे रङ्गे वयं तु नटा एव।

पञ्चदशोल्लासे सप्तदशोल्लासे चाद्वैतवादिनो वैदान्तिका एतत्सिद्धान्तसमाश्रयिण इति मयोक्तमेव। एभिः सिद्धान्तैर्न ते विचाल्यन्त इति तु साम्प्रतं वयं ब्रूमः। ब्रह्मणा जीवात्मनस्तादात्म्यबोधः सुषुप्त्यवस्थाया अनुगुणत्वेन गृह्यते। वैदान्तिकस्य प्रतीच्यदेशज-समालोचकस्य च पुरत एतेषां शब्दानाम् अर्थतोऽपि भेदो जायते। द्वितीयाध्यायीय-तृतीयपादस्याष्टादशसूत्रस्य व्याख्यानावसरे शङ्करेण सुषुप्तिमधिकृत्य वक्ष्यमाणं वचनं जगदे—"यत्तु सुप्तादयो न चेतयन्त इति तस्य श्रुत्यैव परिहारोऽभिहितः, सुषुप्तं प्रकृत्य 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत् ( बृ० ४।३।२३ ) इत्यादिना। एतदुक्तं भवति, विषयाभावादियमचेतयमानता, न चैतन्याभावादिति। यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात्, तद्वद् वैशेषिकादितर्कस्तु श्रुतिविरोध आभासीभवति।" नित्यबुद्धात्मकं

हि ब्रह्मेति सिद्धान्तोऽपि गृह्यत एव। "चैतन्यमेव त्वस्याऽऽत्मनः स्वरूपम्।............तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यते।"

न चैते विषया मनुष्यवाचा लक्षयितुं शक्यन्ते। "वाचो यत्र निवर्तन्ते अप्राप्य मनसा सह" इत्यादिरूपं वचनम् एतानेवोद्दिश्य प्रत्नैर्ऋषिभिरपि समुदीरितम्। मानुषबुद्धिसाध्यैरसमग्रैः समर्यादैस्तर्कैस्तच्चेत् साधनीयम्, तदापि वैदान्तिक एव स्वगुणागुणज्ञेभ्यः प्रशस्ततरं तर्कमवतारयितुमलम्। जातिधर्मनिर्विशेषेण जनाः परमलक्ष्यत्वेन यामभिलक्ष्य प्रधावन्ति, किं नहि सा पूर्णता? यदि तस्य स्फुटतया तादृशो विश्वासोऽजनिष्यत तदा गुणागुणज्ञानां तर्कास्त्रं श्रितः स पूर्णताया अद्वितीयत्वं नूनं प्रत्यपत्स्यत। यत्र यत्र द्वैतभावो दृश्यते, तत्र तत्रैव भेदो वरीवर्तत इति, यत्र यत्र च भेदो विद्यते, तत्र तत्रैव विराजेते गुरुत्वलघुत्वे इति, यत्र यत्र च पुनर्लघुताऽवतिष्ठते, तत्र तत्र च पूर्णताया विरह एवास्माभिः प्रतीयत इति च तर्कशास्त्रेणैव प्रतिपाद्यन्ते।

वेदान्तस्य गूढरहस्यं जिज्ञासुना जनेन श्रद्धालुना भक्तिमता ज्ञानिना च भवितव्यम्, अन्यथा शब्दगहनमिदं शास्त्रं ध्रुवं तस्य व्यामोहायैव जायेत।

---

# उपसंहारः

ग्रन्थेऽस्मिन् प्रागेव मया प्रयत्नो विहितः साम्प्रतिकस्य भारतवर्षस्योत्पत्तिकथाम् उपवर्णयितुं प्रकटीकर्तुञ्च परिवर्तनविधात्रीः कारणपरम्पराः। यद् यल्लिखितम्, तस्य सर्वस्यायमेव सिद्धान्तो भवेत्, यद् भारतवर्षस्यायतिस्थिरीकरणाय द्वयोरेव प्रधानशक्त्योः संघर्षो वर्तत इति। कुलक्रमागता प्रवृत्तिरधिगतश्च गुणविशेषः, इत्येव तच्छक्तिद्वयम्। व्यतीतेऽभ्युदयात्मके युगे जाताः केचित् पुरुषा अनयोरेकतरस्याः शक्तेरधीनाः, केचिद्वा शक्त्यन्तरपरतन्त्राः। ऊनविंशशताब्द्यां प्रतीच्यभावापन्ने भारतवर्षे विशेषतः पाश्चात्यशिक्षाप्राप्तानाम् उत्तरकालीनवङ्गवासिनां बहुषु पुरुषेषु संदृश्यते यत् कौलिकगुणा अधिगतगुणैर्दूरीकृता इति। अस्य विपरीतं येनाधिगतगुणाः कुलक्रमागतप्रवृत्तिभिः पराजिताः, तदपि साम्प्रतिके काले लक्ष्यत एव। अस्य प्रकृष्टम् उदाहरणं "मोहनदास-करमचाँद् गान्धी"। यदि नामानयोः कश्चिन्मध्यवर्ती पन्था विद्येत, स हि शक्तिद्वयस्य शोभनसङ्गतिकरणादेव विधीयेत।

न हीदृक् सङ्गतिकरणं भारतवर्षस्य धीशक्तेरभूमिः, यतस्तत्रत्या एवर्षयो मध्यपथश्रयणस्य माहात्म्यं प्रचारितवन्तः। वीणावादनरतं कञ्चिद् भगवान् बुद्धः पप्रच्छ "किं ते मतम्? यद्येषा वीणा तन्त्रीभिः सुदृढं बद्धा भवेत्, तदा किमेषा सुस्वरा वादनयोग्या च भवेत्? अथवा यद्येषा शिथिलं बद्धा भवेत्, तदापि किमेषा सुस्वरा वादनयोग्या च भवेदिति?" अस्योत्तरं लब्ध्वा पुनर-

त्याह—"किन्तु यद्येषा न वा सुदृढं नापि वा शिथिलं बद्धा भवेत्, तदा किमेषा सुस्वरा वादनयोग्या च भवेत्?" अथ किमित्य-वोचद् वीणावादक उपदेशश्चेमं प्राप—तथैवात्यर्थं प्रयुक्त उत्साहोऽ-त्युत्कण्ठां जनयति, उत्साहशैथिल्यं चौदासीन्यं घटयति। अतस्त्वं कृत्यजातेष्वपि मध्यपथं प्रतिपद्यस्वेति।

किन्तु भारतवासिनं प्रति कौलिकगुणानां कथञ्चिद् वर्जनेना-नात्मीयस्य भावपुञ्जस्य च कथञ्चिद् ग्रहणेन मध्यपथाश्रयण उप-देशदानकालेऽस्माकमपि स्मरणीयम् यद् भारतवासी कुम्भकारहस्ते अचेतनं मृत्पिण्डमिव न हि यथा तथा कल्पयितुं शक्यते। स हि सुस्पष्टस्वातन्त्र्ययुक्तः प्राणमयो गूढभावश्च पुरुषः। भारतवर्षीयाणा-मभिजातविद्यार्थिनां बहुदर्शिना केनचिच्छिक्षाव्यवसायिनोक्तम्, यद् इंलण्डदेशस्य छात्रस्य मनसो भारतीयच्छात्रस्य मनः प्रायेण विपरीतभावप्रवणमिति। प्राचीनभारतेतिहासपाठानन्तरं भार-तीयस्य छात्रस्य मनो यथैवापेक्ष्यते तथैव—नितरां कल्पनाशीलम्, सूक्ष्मतत्त्वानुसन्धाने प्रमुदितम्, प्रतीच्यविद्यार्थिभिर्दुरधिगमानां तत्त्वानाम् आभ्यन्तरीणञ्चेति प्रकटीकृतं तेन शिक्षाव्यवसायिना। तस्य परिचिता भारतवर्षीयाश्छात्रा निगूढतत्त्वेषु श्रद्धावन्त-स्तत्त्वावबोधायैव तथ्यप्रणयिनश्चेति तस्य सुस्पष्टतरमभिमतम्। एवं प्रदर्शितस्य विभेदस्य गुरुत्वं गभीरत्वं च मत्वा तेन महा-भागेन मन्यते यद् भारतवर्षस्यैवान्तेवासिनामुपयोगी शिक्षा-संस्कारोऽपेक्ष्यत इति। "पाश्चात्यरीतेर्यद् यत् प्रकृष्टतमं फलोप-धायकं व्यवहारयोग्यं च, तत्तत् सर्वथा प्राच्यदेशेऽङ्गीक्रियताम्, किन्तु सर्वमेतत् केवलं सहायभूतत्वेन ग्रहणीयम्; भारत-शिक्षापद्धतेः सारभूतोऽपेक्षणीयश्चांशः सर्वथा भारतीयभावानुप्राणित-स्तद्देशस्थच्छात्राणां ग्रहणधारणायोग्यश्च भवेत्। अतस्त्रिंशत्तमे वर्षे भारतवर्षेण प्राधान्येन तथैव भवितव्यम्, यथाऽद्यतना भारतवर्षीया-

श्छात्रास्तद्देशं विदध्युः। अत्रान्तरे शासकानां शासनेऽवस्थितानाञ्च परस्परं सद्भावो हि सुतरामपेक्ष्यते। अस्य सद्भावस्य परा कोटि-रधिगम्या भारते वर्षे स्वदेशजातस्याङ्कुरस्य सम्यक् संवर्धनेन, न तु भारतीयचित्तस्योपरि केवलं पारदेशिकमनोव्यापारस्य समा-रोपणेन। अनुस्मरणीयमवलम्बनीयञ्चेदं भारतीयविद्यालयसंस्कारे, पठनीयविषयनिर्धारणे शिक्षासरणिकल्पनाव्यापारे च।

'रेभारेण्ड्-टि-भ्याण्डार्-सुयेरेन्'-महाभागेन प्रदर्शितैषा पद्धति रधुना वोल्पुरे श्रीरवीन्द्रनाथठाकुर-महोदयेनानुष्ठियत एव। विंशति तमे परिच्छेदे मयाऽस्या अभिनवशिक्षाव्यवस्थायाः सारांशोऽभिहितः। विंशत्यधिकोनविंशतिशततमे खृष्टाब्दे मम शान्तिनिकेतने गमनात् प्रागेवास्या मौलव्यवस्थाया विस्तारः परिकल्पितः। ततो विद्या-लयेनानेन विश्वविद्यालयेन भवितव्यम्। न हि तत्र केवलं तानि विदेशीयपण्यानि समाहर्तव्यानि, यानि स्वशक्त्योत्पादयितुमशक्ता अत एव याचितुकामा भारतभूमिर्भवेत्। परमनेन शिक्षाप्रति-ष्ठानेन सजीवजन्तुनेव जन्मभूमिसकाशात् प्राणशक्तिमापादयता वर्तितव्यम्। परिहर्तव्यं तु भारतेन तज्जाड्यम्, येनास्य जीवन-शक्तिस्तिरोहिता, जाता च परेषामनुकरणमात्रेणैव जनानां सन्तोष-लाभप्रवृत्तिः। तस्याप्यस्ति किमपि देयं विश्वसमुन्नतिव्यापारे। ततः प्राक् तु तेनोद्धारयितव्यं तद्रत्नम्, यत्तस्य नष्टमिव प्रति-भाति। अस्य प्रथमारम्भे भारतप्रसूतानां तत्त्वत एव सम्पदां सम्यगवबोधो नाम कर्तव्यः। "पित्र्यरिक्थस्य प्रत्यक्षीकरणात् परम् अन्यैः सह तस्य संविभागोऽस्माकं कर्तव्यतापथमवतरति"। प्रतिष्ठापकमनसि लब्धजन्मनाऽनेन विश्वविद्यालयेन युगपद् अती-तानुसन्धाने विश्वभारतीप्रदेयज्ञानभाण्डारावतरणे च प्रवर्तितव्य-मर्थिभ्यः। भारतीयसभ्यतायाः पुनरुद्धार एवास्य प्रधानतः सम्पा-दनीयं कार्यम्; तत्तु कृपणचेतसा न करिष्यते, यतोऽस्यां

विश्वभारत्यां सर्वथा मनुष्यजातिबुद्ध्या शिक्षा प्रदेया न त्वनुदार-राष्ट्रीयबुद्ध्या।

अतीतानुसन्धानं तु तदैव प्रावर्तिष्ठैव। ग्रन्थालये दृष्टो मया कश्चित् पण्डितो व्यापृतः प्रमाणीकर्तुं श्रीशङ्कराचार्यस्याद्वैतवादो बौद्धदर्शनादधिगत एवेति। ततः परं धूलिधूसराणां हस्तलिखितप्राचीनपालिग्रन्थानामध्ययने निरतं कञ्चिद् बौद्ध-स्थविरमहमपश्यम्। विद्यार्थिनां चित्रकर्माणि च दृष्टानि, कस्य-चित् सङ्गीतज्ञस्य गानक्रिया च श्रुता। आसीच्च तत्र केषाञ्चित् छात्राणां पितृमतानुसारेण कलिकाताविश्वविद्यालय-'प्रवेशिका'-परीक्षार्थिनां कृत आयोजनविशेषः। परं प्रवेशिकाश्रेण्यां लब्ध प्रवेशस्य बालकस्य चित्र-सङ्गीतकर्मणोरुत्साहः स्मृतिमात्रे पर्य-वस्यति, यतस्तयोर्विषययोः परीक्षायां कृतित्वार्जने शक्तिर्नास्त्येव।

विंशत्यधिकोनविंशतिशततमे खृष्टाब्दे तत्र मम गमनात् परमत्रान्तरे विश्वभारत्या महान् अभ्युदयः समापन्नः। प्रवेशिका-परीक्षार्थम् आयोजनप्रपञ्चः परित्यक्तः स्थापितश्च रवीन्द्रनाथ-कल्पिता विश्वभारती नाम विश्वविद्यालयः पण्डितवर्याणां श्रीविधु-शेखरशास्त्रिणाम् अध्यक्षत्वेन। प्राच्यतत्त्वानुशीलनरतैर्बहुभिरेव पाश्चात्यपण्डितैः प्राप्तं स्वीकृतं चाऽऽह्वानं प्रतिष्ठापकात्तत्राऽऽतिथ्य-ग्रहणाय। तेषां मध्ये अध्यापक'सिल्भान् लेभि'—एम् वेनयट्—'डक्टर्' ऐला क्राम्रिश्—म्याडामयसिल् ए कार्पेल्ले ज्—'डक्टर्'-विण्टारनिज्-महोदयानां नामानि विशेषतो ग्रहणयोग्यानि।

न केवलं शिक्षाक्षेत्र एवास्माभिर्भारतवर्षे तन्त्रवापे पाश्चात्य-तन्तुभिः पटो निर्मितः। तत्रापि यदि भारतीयोपकरणैः केवलं यथाप्रयोजनं प्रतीच्यतन्तुभिर्निर्माणम् अभविष्यत्तदा सर्वं चतुरस्र-शोभि समपत्स्यत। किं बहुना, अस्माकं भारतवर्षीयकृत्यजातस्य निर्वाहव्यापारे भाविकालीनैरैतिहासिकैरवश्यमेव वक्ष्यते यद्-

स्माकं सहजदोषैर्वयमत्र व्यापारिता इति। 'एमार्सन्'-महाभाग इंलण्डीयजनानां शक्त्यहङ्कारदृढसङ्कल्पगुणानुरागी आसीदेव। अमोघविचारेण तु तेनैव प्रदर्शिताः केचन दोषाः, ये नाम तेषां गुणानां परिणामविशेषाः। यथा इंलण्डीयजनानामात्मशक्त्यां स्वजातेः कर्मकुशलतायां च विश्वासातिशय्येन जायतेऽन्येषां शक्ति-कीर्तिपरिज्ञाने विरक्तिकरः कश्चिदनुत्साहः। प्रदर्शितं मयाऽन्यत्र यदस्माभिर्विहिते स्वायत्त-शासन-व्यवस्था-पद्धतेः प्रकर्षविषयेऽस्माकं श्रद्धातिशयेन न चिन्तिताऽस्माभिर्भारतीयानां प्रियतरा वर्तते न वाऽन्या काचित् पद्धतिरिति। आत्मशक्त्यां स्वल्पतरविश्वासा अन्ये शासकवर्गा अवश्यमेव पश्येयुर्यद् भारतभूमौ दृढसंसक्ता बहुयुग-स्थायिनी भारतीयानामेव बुद्धिकल्पिताऽस्ति काचित् सरणिरिति। किमनेन न प्रमाणितम्, यत् प्राच्य-पाश्चात्य-सम्मेलनचेष्टायां भारतेंलण्डसमानयनकर्मणि, राज्यशासनावसरे वा जीवनयापन-विधिप्रदर्शने वा अस्माभिः पाश्चात्योपकरणान्येव बहुलतराणि व्यवहृतानीति ?

अधुनैव विधीयतेऽस्माभिर्महान् प्रयत्नो यथासम्भवमस्माकमेव राज्यशासनव्यवस्थानुकरणेन नूतनं भारत-शासनयन्त्रं परिकल्प-यितुम्। किमत्र सन्देहस्यावसरो नास्ति यदस्माकम् अभ्युदय-सहजातशासनयन्त्रमेव भारतीयानां योग्यतममिति। सन्ति तावत् केचन भारतीया विभिन्नमतावलम्बिनः परमस्मिन् विषये सुतरां सन्दिग्धबुद्धयः। ते हि न मन्यन्ते यत् पाश्चात्यप्रतिभासृष्टं प्रजा-तन्त्रमेव राज्यशासनविषये प्रकृष्टतममिति। अस्मिन् प्रस्तावे प्रत्या-सन्नामापदं प्रबोधयतः श्रीविपिनचन्द्रपालमहोदयस्य पञ्चविंशति-वर्षाण्यतीतानि। सुदृढं सनिर्बन्धं च तेनाभिहितम्, यद् राज्यशासने वा समाजसंस्कारे वा लोकानां विशेषधर्माणाम् अनङ्गीकरणेन परिवृत्तिचेष्टाः सुतरां निष्फला नैराश्यानुबन्धिन्यो विपदावहाश्च

भवेयुः। अधिकञ्च तेनोक्तम्, यद् देशीयपद्धतिमनुसृत्य संस्कार-प्रवर्तनेन लोकानामात्मोन्नतये स्वकीयमतिप्रकर्षोऽप्यभ्युपगम्येत च सम्मान्येत च। ततः परम् इदानीन्तनेऽपि काले सि-आर-दास-महोदयेन मतमिदमभिव्यक्तम् यद् गणतन्त्रघटितं केन्द्रीभूतं शासन-यन्त्रं भारतस्य धर्मार्थसमाजव्यवस्थापनबुद्धेर्विपरीतमेवेति। तेन तावत् केवलमिदमेवोक्तम्, यत् प्रादेशिकस्वाधीनताया वा केन्द्रीय-दायित्वस्य वाऽपेक्षया ग्रामसंरक्षणव्यवस्था अविपुलजनपदानां स्वातन्त्र्यविधानञ्च समधिकमपेक्ष्येते। तथा च इदमेवास्माकं सर्वथा लक्ष्यं भवेत्, यद् विभिन्नप्रदेशशासने वा समग्रभारतशासने वा केन्द्रगतायाः प्रभुशक्तेः केवलम् उपदेशदानं प्रयोजनीयविषयेषु च विहितनियमानुसारेणैवाधिकारप्रयोगः कर्तव्य इति तेन दाश-महाशयेनोक्तम्; अतोऽधिकं तु तेन किमपि नाभिहितम्, येन तस्याभीष्टशासनतन्त्रस्य स्वरूपनिर्णयो भवेत्।

अचिन्तितपूर्वात् कस्माच्चिद् दिग्भागादुपलब्धो भारतशासन-संस्कारविषये स्पष्टार्थः कश्चित् कर्तव्यनिर्देशः। द्वाविंशत्यधिकोन-विंशतिशततमे खृष्टाब्दे शरत्काले प्रचारिता काचिद् विघोषणा महामान्यस्य तत्रभवतो महीशूरमहाराजस्याऽऽज्ञाक्रमेण। उक्तं च तस्याम्—यद् महाराजस्य राज्यशासनतन्त्रस्यापेक्षणीयविस्तार-हेतोः काचिद् मन्त्रणासभा व्यापारिता। वङ्गीयविद्वदग्रगण्यस्य महीशूरविश्वविद्यालयाध्यक्षस्य मान्यस्य डक्टर्-ब्रजेन्द्रनाथ-शील-महोदयस्य सभापतित्वेनाधिष्ठितयाऽनया मन्त्रणासभया तस्याः सिद्धान्तजातं प्राकाश्यं नीतं त्रयोविंशत्यधिकोनविंशतिशततमे खृष्टाब्दे 'मार्च'—मासि। मन्त्रणासभाया इदमेवैकं लक्ष्यम्, यत् शासनतन्त्रेण जगतः साम्प्रतिकभावानुप्राणितेनापि स्वादेशिकधर्मा-क्रान्तेन भवितव्यम्, न तु पारदेशिकधर्मस्पृष्टेन। यदा नाम वयमपि विपुलपरिणाहस्य भारतवर्षस्य कृते नूतनशासनयन्त्रव्यवस्थापने

निरताः स्मः, येनैतावत्कालपर्यन्तमस्माभिर्विधृतः शासनभार-स्तद्देशजनेभ्यः शनैः समर्पयिष्यते, तदा तस्या मन्त्रणासभायाः सिद्धान्तजातम् अस्मास्वपि गुर्वर्थं प्रतिभाति। अतोऽस्य सारांशो मया ग्रन्थस्यैतस्य अन्यतमक्रोडपत्ररूपेण तत्प्रार्थिनां कृते विनिवेशितः।

नेदं मे मतम्, यत् तत्प्रणीतास्य महीशूरराज्यस्य कुलक्रमागत-स्वातन्त्र्यावलम्बिराजाधिष्ठितस्य शासनव्यवस्था इंलण्डीयराजा-धिष्ठितस्य विशालभारतवर्षस्यापि सुयोग्या भवेत् सर्वेषु विषयेषु। किन्तु ते नाम सिद्धान्ताः सर्वत्र व्यवहारयोग्यलक्षणाक्रान्ताः। विधिनिषेधप्रवर्तनं तथा तन्निष्पादनोपायास्तथा च तेषामुपायाना-मपि व्यवस्थापनम—सर्वमेतद् महीशूरराज्यादन्यधर्माक्रान्तेष्वपि राज्येष्वनुकरणयोग्यम्। अतस्तस्या मन्त्रणासभायाः सिद्धान्त-सारोऽधुना न हि निरर्थकः।

राज्ये विधिनिषेधप्रवर्तनं त्र्यवयवमिति तस्याः सभाया मतम्। तत्र प्रथमतोऽपेक्षणीयविधिनिषेधानां प्रयोजनसमु-ल्लेखेन प्रार्थनाविशेषः। सा च प्रार्थना प्रजाभिरेव क्रियते, प्रजा-मतनिर्धारणार्थं च 'प्रजाप्रतिनिधीभूता परिषत्' विधास्यते। अस्याः सदस्याः प्रजानां मनोगतान् निर्व्याजान् अभिलाषान् उच्चारयेयुः। द्वितीयावयवस्तु विशेषज्ञानसापेक्षः। तत्र, धर्मसभायाम् उप-स्थापनात् प्राक् ते नाम प्रजाभिलाषाः सविशेषं विचारणीयाः। तदर्थं विशेषज्ञानविदां राजकुले प्रजापरिषदि चोपदेशदानयोग्यानां कतिचित् प्रतिष्ठानानि भवेयुः। विधिनिषेधप्रवर्तनव्यापारेऽन्तिमो भागः प्रस्तावानामालोचनसंशोधनपूर्वकं करणीयः 'प्रतिनिधीभूत-परिषदः' व्यपेक्षया क्षुद्रावयवया न केवलं प्रतिनिधीभूतया अपि तु ज्ञानधर्मभूयोदर्शनसमृद्धयाऽन्यया परिषदा।

प्रतिनिधीभूतां परिषदं जातेः सारत्वेन परिणमयितुं परिगृहीता

उपाया अवधानविशेषमर्हन्ति। राष्ट्रीयप्रतिनिधिनिर्वाचिता मण्डली जनप्रियप्रतिनिधिनिर्वाचनस्य सौकर्याय कल्पेत। व्यक्तिविशेषस्य दैवाधीनं देशविशेषवासव्यापारं वर्जयित्वाऽपि सन्त्येवात्र बहवोऽन्ये विचारणीया विषयाः। असंशयं प्रतिवेशित्वं खल्वावश्यकं बन्धनम्।...राष्ट्रीयनिर्वाचनाधिकारः प्रतिनिधिप्रेरणस्य भित्तिभूतः।...साधारणस्य स्वार्थस्य साधारणस्य कार्यस्य च ग्रन्थिः प्रतिवेशित्वग्रन्थिनिरपेक्षोऽपि जनान् दलैः समाजैश्च बद्ध्वा जीवितस्य समाजस्य च जटिलतरे प्रसारणे सुमहदुपकरोति।...स्थानविशेषे निवास एव न कस्यचित् पौरतोत्पादने हेतुः, परं तस्य कार्यजातं नागरिकसमाजैः स्वार्थसम्बन्धश्च। अतः प्रतिनिधिनिर्वाचकानां प्रदेशविशेषाधिवासित्वं व्यवसायश्च सममेव समपेक्षणीये। द्विसहस्रवर्षेभ्यः पूर्वं गङ्गोपत्यकायां रचितनिवासानामार्याणां सामाजिकव्यवस्थाभिज्ञो जनः साम्प्रतं दृश्यमानं कायकरसभानागरिकसमाजगृहादिकम् आर्याणां वैशिष्ट्यस्यैवानुकरणमात्रमिति नियतं विजानीयात्। भारतीयानां राजनीतिकबुद्धिप्रसूतानां पुरातनसंस्कृतग्रन्थानां मतं सर्वथैवानुसृत्य निर्मितेयं सभेति सभयैवानया समुद्घुष्यते।

राज्यशासकेन स्वप्रतिनिधीभूताः कार्यनिर्वाहका उपदेशदातारो मन्त्रिणः स्वयमेव निरूप्यन्ते, अतो व्यवस्थापकसभया न हि ते दूरीकरणीयाः, न वा तत्कृते ते प्रष्टव्याः। एतद्विषये महीशूराणां नवीना राजनीतिर्मूलतो राजतन्त्रात्मिका। प्रतिनिधिपरिचालितं तद्राजतन्त्रं यां पद्धतिमवलम्ब्य प्रवर्तते, तया तु कदापि न राज्ञः स्वैरशासनं समनुमोद्यते। महीशूरस्य प्रतिनिधिभूतायाः परिषदोऽनुगुणा सभैव शासक-शासितव्ययोर्मध्ये भावस्याऽऽदानप्रदानपूर्वकमैक्यसंस्थापनस्य यथार्थः फलप्रदश्चोपायः। अतः खलु प्रतिनिधिनिर्वाचनविषये प्रजानां मतामतग्रहणं मौलिकम् एव।

एतेन प्रजानां प्राधान्यमपि दृढीभवति। एवंविधास्ववस्थासु कुलक्रमागतनायकत्वं राज्यस्य साधयितुं नैव शक्यते। राजतन्त्रविवर्जिते राज्ये तन्नायकपदं निर्वाचितेन केनापि जनेन पूरयितुं पार्यते। बृटीशभारतान्तर्गतेषु प्रदेशेषु सम्राजः प्रतिनिधिनाऽपि तस्य पदस्य पूरणं सम्भवति। वस्तुतस्तु विश्रुतस्य भारतीयनीतिज्ञस्य मान्यवरस्य "आगाखान्" महोदयस्य समितिसंस्थापनात् पूर्वं महोशूराणां राज्यपरिपालनविधीनां केचन विधयो बृटीशभारतस्यापि कृते गृहीताः सञ्जाताः। तदीयेषु लिखितेषु, ऊनविंशत्यधिकोनविंशतिशततमखृष्टाब्दस्य संस्कारकविधेर्विधिवद्व्यवस्थापनाय विहितायाम् इंलण्डीयमहासभासम्बन्धिन्यां समित्यां तत्समुपस्थापितेषु लेखप्रमाणेषु च सुस्पष्टं प्रतिपादितं तेन—व्यवस्थापकसभयाऽनपनेयानां प्रजाभिरेव निर्वाचितानां केषाञ्चन कार्यनिर्वाहकाणाम् एवाऽऽस्ते प्रयोजनं भारते, न तु बृटीशानामादर्शस्येति। साम्राज्यस्यान्तः स्थित्वापि स्वायत्तशासनसुखमनुभवितुमेवैच्छन् भारतीयाः, न तु बृटीशादर्शेन महासभादिकं स्थापयितुमिति तेन सनिश्चयमभाषि। "गोखेल"मतात् समारभ्य "जातीयमहासभायाः" "मोस्लेम् सङ्घस्य"च सम्मिलितावेदनं यावत् परिदृष्टासु सर्वासु भारतीयनिर्मित-शासन-पद्धतिषु कार्यनिर्वाहकाणामेव विधिव्यवस्थापने पूर्णा प्रष्टव्यतेति मतं परिदृश्यत इत्यपि तेनैव प्रकटीकृतम्। विश्रुतायाम् इंलण्डीयमहासभायाः संस्कारघोषणायां "रेस्पन्सिवल्" (प्रष्टव्यः) इति पदं राजनीतिविषयके पारिभाषिकेऽर्थ एव प्रयुक्तं सत् तन्मते दुर्भाग्यविशेषस्यैव भाजनं जातम्। प्रकृतिभिर्निर्वाचिता परिषदेव शासनविधेः स्थितौ प्रष्टव्या। विधीनां परिचालनेनापरामृष्टा अधिकारपदमात्रसंश्लिष्टा मन्त्रिणश्च शासकमवलम्ब्यैव सम्राजोऽनुयोगाधीनत्वं गाहन्ते। इंलण्डदेशस्य सङ्कीर्णं राज्यतन्त्र यदि प्रसह्य भारतं विशेत्,

तदा भारतस्य व्यसनायैव तत् कल्पेत। एतैर्वचनैर्बृटीशानां मनसि निबद्धमूलो बृटीशानाम् आदर्शो नैव विचचाल। पुनरपि बृटीशमहासभया "इमारसन्"महोदयकृतबृटीशजातिसमालोचनस्य निर्दोषत्वं प्रमाणितम्।

* * * * *

उदाहरणीकृतमहीशूरराज्यतन्त्राद् राजनयस्य, निदर्शनीभूत- 'विश्वभारती" समाख्यप्रतिष्ठानाच्छिक्षणस्य, वङ्किमचन्द्रचट्टोपाध्याय-रवीन्द्रनाथठाकुर-सीतादेवीप्रमुखाणामाधुनिककवीनां कृतिभ्यः साहित्यस्य, भारतीयसभ्यतानुगुणाया भारतभूमौ जातसंवर्धिताभ्यः समुद्गतायाः प्रतीच्यसंस्पर्शात् कथञ्चित् परिवर्तितायाः सजीवीकृतायाश्च कलायाः स्थितेश्च प्रमाणानि साम्प्रतिकभारतीयजीवितस्य विभिन्नावस्थाभ्यो मया समुद्धृतानि। अपिनामैतैर्विषयैर्द्योत्यते काचित् प्राणवत्प्रवृद्धिरथवा वस्तुतः परस्परविभिन्नानामुपलशकलानां यान्त्रिककौशलेन संयोगमुत्पाद्य यथा तेभ्यो विचित्रकुट्टिमोद्‌गतिः साध्यते, तथैव कृत्रिमाण्येतानि फलानि? कस्याश्चिज्जातेर्धीशक्त्या अपरस्या जातेर्धीशक्तेः (पालमहोदयमते विभिन्नजातेश्चिन्ताकाराणाम्) एतस्माद् गाढतरः सम्बन्धो नैव सम्भवतीति केचिन्मन्यन्ते। सेन्द्रियत्वावगाहिनी हि वृद्धिरिति सि आर् दास-महोदयेनोद्‌घुष्यते। एकजातीये वस्तुन्यपरजातीयस्य वस्तुनो वीजं यदि निहितं न स्यात्, तदा तस्यापरजातीयत्वलाभोऽसम्भव एव। यथा विभिन्नस्य पार्थिववस्तुद्वयस्य संलग्नीकरणान्नैव किञ्चिच्चिरन्तनम् ऐक्यं सञ्जायते, तथैव विजातीयानां विशिष्टा भावा अस्माकं जातीयेन चरित्रेण धीशक्त्या वा नैव कथमपि संयोजयितुं शक्यन्त इत्यपि स्वमतं विवृण्वता तेनाभाणि।

न मया पैतृकगुणादीनाम् आयासदाः प्रश्ना अत्र व्याकरिष्यन्ते, यतस्तद्विषये प्राणितत्त्वविद्भिरपि न कश्चिन्निर्णयोऽद्यापि

समासादितः। न च तस्यास्ति प्रयोजनम्। विंशशताब्दीयः शिक्षितस्य भारतीयस्य बुद्धिविषयकमवेक्षणं प्रतीच्यचिन्ताकारैः शतवर्षाणि यावत् संयोगमेत्य परिवर्तितं जातमित्यत्र नास्ति कस्यापि विप्रतिपत्तिः। भारतीयधीशक्तेर्विशिष्टः प्रसवो हि रवीन्द्रनाथठाकुरः। विश्वसाहित्ये वरणीयं स्थानं समधिगतवतो रवीन्द्रनाथठाकुरस्य चिन्तापद्धतिर्भारतेन युरोपस्य संस्पर्शविरहेऽप्येवमेवास्थास्यदित्यपि वक्तुं मन्ये नास्ति दाशमहोदयस्यानीहा। वि-ए-परीक्षोत्तीर्णानामध्ययनाय कलिकाताविश्वविद्यालयस्य विभागविशेषं प्रतिष्ठापितवता स्वर्गतेनाऽऽशुतोषमुखोपाध्यायमहोदयेनास्याः समस्यायाः सत्यता सम्यगेवानुभूता। स्वकीयाध्यवसायाश्रयिणीं श्रद्धाम् आशाञ्चाधिकृत्य भाषमाणेन तेन कथितम्—न हि सर्वमेव विदेशीयं वस्तु निन्दनीयमिति शिक्षाक्षेत्राद् दूरीकरणीयमस्माभिर्न वा पुनः सर्वमेव भारतीयं वस्तु श्रेष्ठत्वेनास्माभिर्ग्रहणीयम्, यतस्तेनास्माकं मूर्खताऽतिविश्वासश्च प्रतिपादितौ स्यातामिति। वक्ष्यमाणप्रकारेण सिद्धान्तितं तेन स्वं मतम्। "शिक्षाविषये सार्वलौकिकप्रयोजनीयतापेक्षिणो विषया एव समधिकं गौरवं समुद्वहन्ति। वास्तवं प्रतिरूपं गतः सार्वलौकिकविषय एवास्माभिः पूर्णत्वेन बुध्यते। अतः प्रतीच्यसंस्कृतेः शर्मदो विषयोऽस्माभिः श्रयणीयः, रक्षणीये वर्धनीये च जातीयशिष्टिसंस्कृती।

साम्प्रतं भारतेनोत्पाद्यन्त एव बहवो वैज्ञानिकाः। ज्ञानवृक्षस्येयं शाखा प्रतीच्येनैव भारताय प्रदत्ता। सार् जे सि वसुस्तेषामेकः, सार् पि सि-रायश्चापरः। एतौ नरौ कस्मिन्नपि विषयेऽभारतीयाविति स्वप्नेऽपि चिन्तितुं नालम्। एतयोश्चरमोक्तेन जनेन साम्प्रतं जातीयसमान्दोलनेन समममात्मा दृढं संयोजितः। अर्वाचीनेषु वैज्ञानिकेषु साधारणैर्जनैरपरिज्ञातोऽपि भौतिक-रसायन-विषयकगवेषणाभिः प्रतीच्यजगति सुपरिचितो हि डक्टर

जे सि घोष-महोदयः। एतेषां जनानां चिन्तापद्धत्या निवेदितो जातीयचिन्ताया आकारो प्रेट्-बृटेनेन समं भारतस्य संस्पर्शाज्-जातस्य परिवर्तस्यैव फलम्। किमेतस्मादेव कारणात् ते जातीय-बुद्धिसंस्कृतिभेदात् समूलमुन्मूलिता जाताः ? ध्रुवं नैतज्जातम्।

सत्यं प्रतीच्यस्य विज्ञानेन भारतस्य विच्छेदमभीप्सुरस्त्येव कश्चन सम्प्रदायः। टल्‌ष्टय्‌महोदयनयेन प्रभावितस्य एम् के गान्धि-महोदयस्योपदेश एव तेन सम्प्रदायेनोररीक्रियते। वाष्पीयशकटं निन्दता वक्ष्यमाणं वचनं गान्धिमहोदयेनोक्तम्—नराणां दूरगमनं सावधिकं विधातुकामेनैव परमेश्वरेण मानवशरीरमेवं प्रकारेण विनिर्मितम्; परमेतदसहमाना मानवा अवधेरतिक्रमणस्योपायान् व्यचिन्तयन्। एतत्प्रसङ्गेनैव पुनरपि तेनाभाणि, स्वस्रष्टृज्ञानं नराणां जायतामितीश्वरेण तेभ्यः समुपायनीकृता बुद्धिः, परं तस्या अप-व्यवहारनिरतैस्तैः स्वस्रष्टैव विस्मर्यते। वाष्पेषु प्रच्छन्नं स्थितया शक्त्या वाष्पीयशकटनिर्माणस्य बुद्धिरपि तेनैव परमेश्वरेण दत्ता इति त्वकठोरः स्वमताभिमानो जनो मन्यते।

समुन्नतिसाधनविषये एष एव यदि भावो भारतस्य धीशक्ते-रादर्शभूतस्तदा तस्यानागतः समयो नूनं तमसाच्छन्न एव। भाग्यादपवादभूतो न त्वादर्शभूतोऽयं भावः। वङ्गानां विद्यालयानां महाविद्यालयानाञ्च परिदर्शनावसरे, साम्प्रतिके काले जाता जडविज्ञानस्य रसतन्त्रस्य चोपदेशविषयिणी प्रार्थना सुदृढमेव मे मनसि पदं निदधे। कलिकातायां यस्य प्रतिष्ठानस्य प्रतिष्ठापनेन सार् जगदीश-वसुर्भारतीयेषु प्रतिष्ठां लेभे, तस्य प्रतिष्ठानस्य प्रतिष्ठापनावसरे यो हि नाम समुत्साहो मया समवलोकितः, स कथं सहसा विस्मर्येत। उत्सर्गात्मकाभिभाषणप्रसङ्गेन तेना-भिहितम्—चिर-जटिलायमानैः सृष्टिरहस्यैर्येन वयं परिव्याप्यामहे, यः स्वस्याणवाकारस्य गहनतायां विश्वस्य सर्वं रहस्यमाच्छादयति,

धूलिकणास्वरूपे सूक्ष्मे जगति यो हि नाम विस्मयो निगूढमास्ते, स एवास्माकं मध्ये जिज्ञासनस्य बोधस्य चेच्छां निदधातीति विस्मर्यतेऽस्माभिरिति। अयमेव तावत् कठारचरम[illegible] गहनतया विस्मृतात्मानं मध्यपथाश्रयिणश्च जनमन्तरा वर्तमानो भेदः। परमेतस्मादप्यधिकं किञ्चन विद्यते। विजातीयानां विशिष्टा भावा भारतीयानां बुद्ध्या चारित्रेण च योजयितुं शक्यन्त इति सि आर् दाश-महोदयेन प्रत्याख्यातं वचनं जे सि-वसुमहोदये सत्यतयैव प्रतिभाति। जे सि वसु-महोदयेन पाश्चात्यजगतोऽनुभूतिमूलविज्ञानस्योपादानपरीक्षणपद्धतिराश्रिता। प्रतीच्यस्य सर्वान् एव वैज्ञानिकविषयान् अधिगत्यापि मूलतः स भारतीयधीशक्तेरेव फलतया चकास्ति। हिन्दूनां "विशिष्टजगद्विषयकबोधत्वेन" यत् पालमहोदयेन वर्णितम्, तस्मादेव तेन लब्धा प्रेरणा। "प्राचीनहिन्दुजातेरिव नवीनहिन्दुजातेरपि स हि तावज्जगद्विषयको भावो भित्तिपाषाणायमानः।" विश्वस्य परिदृश्यमानवैषम्यस्यान्तः सर्वगतमस्त्येव किञ्चनैक्यम्। लिखितैर्भाषितैश्च भूयो भूयस्तेनायं प्रकाशितो भावः, [illegible] प्रतीच्यस्य सर्वातिशायित्वम्, विज्ञानस्य बहुत्वं नास्ति, एकमेव तत् (विज्ञानं) सर्वं वैज्ञानिकमतं क्रोडीकरोतीति मौलिकं सत्यमप्यस्माकं नेत्रपथाद्दूरमेवापनयति। जडवस्तुन उपरि शक्तेः क्रियाविषयकविमर्शे कथितं तेन—प्रलीयमानाः सीमारेखा दृष्ट्वा चेतनाचेतनयोर्मध्ये आविर्भवतः संस्पर्शबिन्दूंश्चाऽऽविष्कृत्य विस्मित एवाहमभवम्। न तु केवलविचारवशतः, परं नानारूपधरस्याप्यामोहो[illegible]पादकस्य विश्वस्यान्तः स्थितमैक्यं चाक्षुषप्रमाणेन प्रतिपादयितुं समात् कस्माच्चन सुमहतः सिद्धान्तात् महत्तरं [illegible] विज्ञानजगति चिन्तयितुमपि सोऽसमर्थ एव। समुच्चरति तत्रा हृदयस्यान्तःस्थलात् कश्चिद् उत्क्रोशः—अपिनाम भारतं तद् गौरवमधिगच्छेद् इति। [illegible]जीवितस्य कार्यजातैः

नुगरोन वर्त्मना यस्य प्रतिष्ठानस्य कर्मकलापः प्रचलति, तस्मिन् कलिकातास्थिते प्रतिष्ठाने स्थितः सोऽवोचत्—"बहुष्वेकत्वं दिदृक्षव एवात्र सम्मिलेयुः। अत्रैव भारतस्य धीशक्तिः पूर्णं विकासं समधिगमिष्यति।"

कियद्भ्यश्चिद्वर्षेभ्यः पूर्वं यस्य भवनस्योत्सर्गकर्मणि वयं तत्राऽऽहूता अभवाम, तस्य भवनस्यैव परिसरे भारतपरित्यागात् पूर्वं लब्धं मया तस्य ( जे सि वसु-महोदयस्य ) पश्चिमसंदर्शनम्। न च तद्भवनं रसक्रियास्थानमात्रम्, परं देवायतनमेव तत्। प्रतनुभिः, विचित्रैः, प्रतिनिमेषमेकाङ्गुलस्य ( इञ्च् ) सार्धकोटिभागानामेकभागपरिमितम् अङ्कुराणां वर्धनमपि विभावयितुं क्षमैः, विश्ववैज्ञानिकानां विस्मापकैर्यन्त्रैर्वसुमहोदयनयेनैव तत्र गवेषणादिकं प्रचलतीति कृत्वा तद् रसक्रियास्थानमेव। विज्ञानस्य सूक्ष्मतमैरपि यन्त्रैरविज्ञेयानां समग्रेणैव जीवितेन न तु कतिपयैर्वर्षैः परीक्षितया श्रद्धयैव वेद्यानां सत्यानां स्थित्या भवनस्य तस्य देवायतनत्वम् अव्याहतमेव जायते। श्रेष्ठस्य कस्यचिद्रूपकमयस्य चित्रस्याधस्तादासीत् स दण्डायमानः। चित्रे मूर्तिद्वयमासीद् विलिखितम्। तीक्ष्णाग्रेण कृपाणेनोपलक्षितो बुद्धिपुरुषोऽज्ञानतायाः गभीरमन्धकारं शातयन् प्रसरति, कल्पना तस्य पत्नी च मधुरेण वंशीध्वनिना तस्योत्साहं वर्धयन्ती तिष्ठति। यस्य भारतीयचित्रकलासम्प्रदायस्य वर्णनं मया प्रागेव दत्तम् तत्सम्प्रदायगतस्य नन्दलालवसुमहोदयस्य कार्यं हि तच्चित्रम्। प्रतिष्ठानस्य कार्यजातानां वर्णयितासीत् स वैज्ञानिकः। भविष्यत्समयस्य आशाविषये किञ्चिद् वक्तुं स प्रावर्तत। उत्साहवह्निना तस्य वदनं बभासे। ऋषीणां स्वरो भावश्च तस्मिन् व्यलसताम्। नरेभ्य ईश्वरप्रेरितां वार्तां विज्ञापयितुमिव स स्थितः। नास्त्यत्र सन्देहगन्धोऽपि यत् स मन्यमानोऽस्त्यात्मनो भारतीय-सम्भूतिगौरवं न केवलं

यथावद् [illegible], परं तद् विवर्धयाञ्चक्र एव। प्रत्यक्षमात्राश्रयिण्या प्रतीच्यविद्यया अतीन्द्रियज्ञानमूलायाः प्राच्यविद्यायाः सम्मेलनेन च तयोरन्योन्यावलम्बित्वमेव तेन सम्पादितम्। परं स एवात्र ब्रवीतु। चेतनाचेतनयोर्मध्ये सूक्ष्मतया समवस्थितस्य भेदस्याऽऽविष्कारविषयं जगति प्रचारयता तेनाभिहितम्—"आलोकतरङ्गे परिदृश्यमानासु कम्पमानासु रेणुषु, समुत्पादनक्षमेषु न ऐहिकेषु जीवितेषु, स्वकया मरीचिमालयाऽस्माकं समुद्भासके सूर्ये, चेत्येवमादिषु सर्वेष्वेव विषयेषु सर्वव्यापकमेकत्वं समवलोकयतो मे मनसि त्रिसहस्रवर्षेभ्यः पूर्वं गङ्गातीरनिवासिभिर्नः पूर्वैः समुदीरिता वाणी भृशं विललास—

एकत्वं येऽनुपश्यन्ति विश्वेऽस्मिन् बहुधा स्थिते।
ते विदुः शाश्वतं तत्त्वं नेतरे खलु नेतरे॥

